इङ्ग्रीयभाषातो व्याकृतः

# धर्मग्रन्थः।

---

तस्य तृतीयं खण्डं

यद्वा

आयूबस्य चरित्रपुस्तकं

गीतसंहिता

राज्ञा सुलेमना रचितानि काव्यानि च।

---

कलिकातानगरे

ग्रन्थोऽयं मुद्राङ्कितोऽभूत्।

शकाब्दाः १७७९ ई १८५८

# सूचीपत्रं।

# अशुद्धशोधनं।

| पृष्ठं। | पङ्क्तिः। | अङ्कं। | अशुद्धं। | शुद्धं। |
|---|---|---|---|---|
| १८ | २२ | ६ | वेत्स्यस्युपेक्षितं | ह्वास्यस्युपेक्षितं |
| २८ | ७ | २१ | मानवार्थं विवादं स<br>सार्द्धमीशेन कुर्व्वतां। | विवादं सार्द्धमीशेन<br>मानवार्थं करोतु सः। |
| ३० | ८ | १३ | सूतुना | सूनुना |
| ६७ | १४ | २३ | शैल्यं | शल्यं |
| ७३ | २० | २ | मन्त्रयन्त्यग्रगा | मन्त्रयन्तेऽग्रगा |
| ७४ | २७ | ४ | आह्वये परमेश्वरं | आह्वयामि परेश्वरं। |
| ८२ | २७ | २ | दुरात्मनो लोका | लोका दुरात्मान |
| ९० | २२ | ४० | मानवा मां जिहिंसवः। | मज्जिहिंसिषवो नराः। |
| ९४ | ८ | ११ | मकुर्व्वंश्च | मकुर्व्वंश्च |
| ११८ | २२ | ३ | गाथां | गीतिं |
| १३० | ४ | ५ | साधमानवान् | साधुमानवान् |
| १५४ | २७ | १९ | महन्ति | महान्ति |
| १८४ | २६ | ५ | कोटश्महन्ति | कोटश्महान्ति |
| १८५ | ६ | १० | शेच्यत | शेच्यते |
| १९१ | २२ | ६ | स तेभ्यः प्रार्थमानेभ्य<br>उत्तरं व्यतरत् स्वयं॥ | तेभ्यः प्रार्थयमानेभ्य<br>उत्तरं सोऽददात् स्वयं॥ |
| १९८ | ३१ | ३३ | मदीश्वरः | मदीश्वरं |
| २३१ | १९ | ५ | वीक्ष्यसे | वीक्षिता |
| २३१ | २० | ६ | वीक्ष्यसे | वीक्षिता |
| २५६ | २६ | ३ | जह्वीतां | जह्यातां |
| २५६ | २९ | ४ | लप्स्यसे | लप्स्यते |
| २६३ | २ | १० | करस्त्रिशा | करस्त्रिषा |
| २६४ | १४ | ३५ | पारितोषितं | पारितोषिकं |
| २६४ | १९ | २ | मदाज्ञा | मदाज्ञाः |
| २६४ | २६ | ६ | स्वगहस्य | स्वगेहस्य |

| पृष्ठे। | पङ्क्तौ। | अङ्के। | अशुद्धं। | शुद्धं। |
|---|---|---|---|---|
| २६७ | ११ | २४ | निर्ज्झराः | [illegible] |
| २६७ | १४ | २६ | निर्म्मितेः | निर्म्मिते |
| २६७ | १६ | २७ | एष्टे | पृष्ठे |
| २६७ | ३१ | ३५ | एवाप्राति | एवाप्रोति |
| २६६ | २२ | ६ | बाहुल्येन च मन्त्रीणां | मन्त्रिणाञ्च बहुलेन |
| ३०६ | १७ | ८ | प्रशस्यते | प्रशम्यते |
| ३०६ | २५ | १३ | मिलिता | मिलता |
| ३०८ | ३ | ४ | ऽग्रहीदार्यं | ऽग्रहीदायुं |
| ३०८ | ३१ | १७ | तद् श्रावके | तच्छ्रावके |
| ३०९ | ८ | २२ | भद्वैस्तृमस्य | भद्व्यैस्तृमस्य |

# आयूवस्य चरित्रपुस्तकं।

## १ प्रथमोऽध्यायः।

१ आयूवस्य धनं धर्म्मश्च ४ तस्य पुत्राणां रीतिः ६ शैतानेन तस्यापवादकथनं १३ आयूवस्य विपत्तिः २० तस्य धैर्य्यावलम्बनञ्च।

१ ऊषदेशे धार्म्मिकः सरल ईश्वरभक्तः कुक्रियात्यागी चैको जन आयू-
२ वनामक आसीत्। तस्य सप्त पुत्रास्तिस्रः पुत्र्यश्च जज्ञिरे। तस्य सप्तस-
३ हस्राणि मेषास्त्रीणि सहस्राणि महाङ्गाः पञ्चशतयुग्मानि वृषभाः पञ्च-
शतानि गर्दभ्यो बहवः परिवाराश्चासन् एतेन स पूर्व्वदेशनिवासिभ्यः
सर्व्वलोकेभ्यो ऽधिकधनवान् आसीत्।

४ तदीयपुत्राणाम् एकैको निजनिजजन्मदिने निजनिजगेहे भोज्यं
चकार दूतांश्च प्रहित्य स्वेन स्वेन सार्द्धं भोजनपानाय तिस्रो भगिनी-
५ र्निमन्त्रयामास। अनन्तरं तेषां भोज्यदिनेषु गतेष्वायूवस्तानाहूय पवि-
त्रीचकार किञ्च प्रत्यूष उत्थाय तेषां संख्यानुसारतो होमार्थकबलीन्
उत्ससर्ज, यस्माद् आयूवो जगाद को जानाति मम पुत्रा यदि पापा-
चारं कृत्वा मनोभिरीश्वराय जलाञ्जलिं दत्तवन्तः। आयूवः प्रतिवर्षं तत्
कृतवान्।

६ एकदा परमेश्वरं साक्षात् कर्त्तुम् ईश्वरस्य सन्तानेषु समुपस्थितेषु
७ तेषां मध्ये शैतानो ऽपि उपतस्थौ। तेन परमेश्वरस्तं पप्रच्छ त्वं कस्मादा-
गतः? शैतानः परमेश्वरं प्रत्युवाच पृथिवीपर्य्यटनात् तस्याम् इतस्ततो
८ भ्रमणाच्चागतो ऽस्मि। तेन परमेश्वरः शैतानं पृष्टवान् मम सेवकम् आयूवं
प्रति किं तव मनोयोगो जातः? तस्य तुल्यो धार्म्मिकः सरल ईश्वर-
९ भक्तः कुकर्म्मत्यागी च नरः पृथिव्यां को ऽपि न विद्यते। शैतानः परमेश्वरं
१० प्रतिजगाद, आयूवः किं विनालाभम् ईश्वरं सेवते? त्वं तस्य तदीय-
परिजनानां तदीयसर्व्वस्वस्य च चतुर्दिक्षु किं प्राचीरेण न वारितवान्?
तस्य हस्तगतानि कार्य्याणि किं सफलानि न कृतवान्? पृथिव्याञ्च किं
११ तस्य सम्पत्ति र्न व्यानशे? किन्तु त्वं यदि करं विस्तार्य्य तस्य सर्व्वस्वं
१२ स्पृशेस्तर्हि स किं तव साक्षात् तुभ्यं जलाञ्जलिं न दास्यति? तेन शैतानं

परमेश्वरो बभाषे पश्य तस्य सर्व्वस्वं तव हस्तगतमास्ते, केवलं तस्य गात्रे
हस्तार्पणं मा कार्षीः। तेन शैतानः परमेश्वरस्य समीपाद् वहि र्जगाम।
अपरं कस्मिंश्चिद् दिने आयूबस्य पुत्राः पुत्र्यश्च ज्येष्ठभ्रातु र्गेहे ऽभु- १३
ञ्जत द्राक्षारसञ्चापिबन्। तदानीम् आयूबस्य सन्निधिं दूत एक आगत्य १४
वार्त्तामिमां जगाद, वृषभा हलानि वहन्ति गर्द्दभ्यस्तेषां पार्श्वे चरन्ति
चैतस्मिन्नन्तरे शिवायीयदस्युनिवह आक्रम्य खड्गधारेण भृत्यान् व्यापाद्य १५
सर्व्वान् पशून् नीतवान् एको ऽहं रक्षां प्राप्य त्वां वार्त्तां वक्तुम् आगमं।
स इति कथयति तन्मध्ये ऽपर एक आगत्य वार्त्तामिमां गदितवान्, आ- १६
काशाद् ईश्वराग्निः पतन् सर्व्वमेषान् मेषरक्षकांश्च दग्ध्वाग्रासीत्, एको
ऽहं रक्षां प्राप्य त्वां वार्त्तां वक्तुमागमं। स वार्त्तां वक्ति तदानीम् अपर १७
एक आगत्य वार्त्तामिमां बभाषे, कस्दीयास्त्रयो दस्युनिवहा आक्रम्या-
सिधारेण दाससमूहं हत्वा सर्व्वान् महाङ्गान् नीतवन्त एको ऽहं रक्षां
प्राप्य त्वां वार्त्तां वक्तुमागमं। स इति कथयति तदानीम् अपर एक १८
आगत्य वार्त्तामिमां जगाद, तव पुत्राः पुत्र्यश्च ज्येष्ठभ्रातु र्गेहे भुञ्जते
द्राक्षारसं पिबन्ति च। तदानीम् अकस्मात् प्रान्तरमध्येन प्रबलझञ्झा १९
समेत्य गेहस्य चतुरः कोणान् पर्य्यग्रहीत् तेन तेषां यूनामुपरि गृहस्य
पतनात् ते प्राणान् अत्यजन् एको ऽहं रक्षां प्राप्य त्वां वार्त्तां वक्तुम्
आगमं।

तदानीम् आयूब उत्थाय वसनं छित्त्वा शिरो मुण्डयित्वा भूमि लग्न- २०
शिराः प्रणम्यावदत्,

यो ऽहं निर्गतवान् नग्नो जनन्या गर्भतः पुरा। २१
सो ऽहं पुनरितो नग्नः प्रतिगन्ता यथागतं॥
परमेशेन प्रादायि परेशेनापहारि च।
तस्यैव परमेशस्य धन्यं भवतु नाम हि॥

एतैः सर्व्वैरायूबः पापं न चकार, ईश्वरे दोषारोपणञ्च न चकार। २२

---

## २ द्वितीयोऽध्यायः।

१ शैतानस्य द्वितीयो ऽपवादः ७ आयूबाय पुन र्दुःखदानं ९ आयूबस्य स्वजायाया मन्त्रणाया अपहणं ११ आयूबं प्रबोधयितुं बन्धुत्रयागमनं।

अनन्तरं पुनरेकदा परमेश्वरं साक्षात् कर्त्तुम् ईश्वरस्य सन्तानेषूप- १

२ स्थितेषु शैतानो ऽपि परमेश्वरं साक्षात् कर्त्तुम् उपतस्थौ। तेन परमेश्वरः
शैतानं पप्रच्छ त्वं कस्माद् आगतो ऽसि? शैतानः परमेश्वरं प्रत्युवाच
३ पृथिवीपर्य्यटनात् तस्याम् इतस्ततो भ्रमणाच्चाहमागतो ऽस्मि। परमेश्वरः
शैतानं पृष्टवान् मम सेवकमायूबं प्रति किं तव मनोयोगो जातः? तस्य
तुल्यो धार्म्मिकः सरल ईश्वरभक्तः कुकर्म्मत्यागी च नरः पृथिव्यां को ऽपि
न विद्यते। यद्यपि त्वमकारणं तं नाशयितुं मां प्रावर्त्तयस्तथापि स
४ इदानीमपि स्वधर्म्मं रक्षति। तेन शैतानः परमेश्वरं प्रत्यवदत्,

चर्म्मार्थं चर्म्म जीवार्थं सर्व्वस्वञ्च त्यजेन्नरः।

५ किन्त्वधुना यदि त्वं करं विस्तार्य्य तस्यास्थिमांसे स्पृशेस्तर्हि स तव सा-
६ क्षात् तुभ्यं जलाञ्जलिं दद्यात्। ततः शैतानं परमेश्वर उक्तवान् पश्य स
तव हस्तगतः किन्तु तस्य प्राणान् मा विनाशय।
७ ततः शैतानः परमेश्वरस्य सम्मुखात् प्रस्थाय आयूबस्यापादमस्तकं
८ दुष्टव्रणान् जनयामास। तेन स कपालिकाम् आदाय भस्ममध्य उपविश्य
सर्व्वाङ्गानि घर्षितुम् आरेभे।
९ पश्चात् तस्य जाया तमवादीत् त्वं किमधुनापि स्वधर्म्मं रक्षसि?
१० ईश्वराय जलाञ्जलिं दत्त्वा प्राणान् त्यज। ततः स तां प्रत्यवदत् त्वम-
ज्ञानैकेव कथां कथयसि। ईश्वरात् शुभं गृहीत्वा वयं किम् अशुभं
११ न ग्रहीष्यामः? एतेनापि स्वोष्ठाभ्याम् आयूबः पापं न कृतवान्।
एताः सर्व्वा विपद आयूबम् आचक्रमुरिति वार्त्तायां तस्य त्रिभि
र्बन्धुभिः श्रुतायां ते ऽर्थतस्तैमनीय इलीफसः शूहीयो बिल्‌ददो नामा-
थीयः सोफरश्च स्वस्वस्थानाद् यात्रां विधाय तेन सह शोचितुं तं सा-
१२ न्त्वयितुञ्च तस्यान्तिकं गन्तुं मन्त्रितवन्तः। यदा ते दूरात् चक्षुरुन्मील्य तं
परिचेतुं न शक्तास्तदा त उच्चैः क्रन्दितुं वस्त्राणि छेत्तुं शिरसाम् ऊर्द्ध्वं
१३ गगनदिशि धूलीं विकरितुञ्च प्रारेभिरे। पश्चात् सप्त दिवारात्रीः सार्द्धं
तेन भूमावुपविष्टा अतिष्ठन् को ऽपि तेन न समभाषत यतस्ते तम् अतीव
क्लेशाकुलं ददृशुः।

---

## ३ तृतीयो ऽध्यायः।

१ आयूबस्य स्वजन्मदिनाय शापदानं ११ स्वमृत्युप्रार्थनं २० जीवने विरक्तिश्च।

१ अनन्तरम् आयूबो वक्त्रं व्यादाय निजजन्मदिनं शप्तुं प्रारभत।

आयूब उवाच । १

प्रणश्येत् तद्दिनं यस्मिन् उत्पत्तिरभवन्मम । ३.
प्रणश्येत् सा निशा यस्यां पुत्रो जात इतीरितं ॥
स एव वासरो यायात् महान्धतमसं किल । ४
मा तस्यान्वेषणं कुर्य्याद् उपरिस्थित ईश्वरः ।
तस्योपरि न चालोको दीपकत्वं प्रजायतां ॥
तमश्च मरणच्छाया कलङ्कैस्तद्दिलिम्पतां । ५
आच्छादयतु मेघस्तद् राहुश्च परिभीषयेत् ॥
तमश्च तां हरेद्रात्रिं न योग्याब्ददिनेषु सा । ६
सङ्ख्यामध्ये च मासानां न तस्या गणना भवेत् ।
बन्ध्या भवतु सा रात्रिस्तत्रोल्लासो न वर्त्ततां ॥ ७
वासरश्च स शप्तव्यो दिनाय शापदातृभिः । ८
लिवियाथननागस्य प्रबोधे कुशलैरपि ॥
तारास्तस्य प्रभातीया गच्छन्तु सान्धकारतां । ९
दीप्तिं प्रतीक्षमाणश्च नैराश्यं यातु तद्दिनं ।
अरुणस्योदयस्तेन दिनेन नहि दृश्यतां ॥
यतस्तन्मम मातु र्न गर्भद्वारमवारणत् । १०
नेत्राभ्याञ्च मदीयाभ्यां तन्न दुःखमगोपयत् ॥
कुतो हेतोरहं गर्भे मरणं प्राप्तवान् नहि । ११
जरायो र्निर्गतस्यैव प्राणा मे न गताः कुतः ॥
ऊरुद्वयं जनन्याश्च मां प्रत्यैक्षत वा कुतः । १२
स्तन्यपानाय मे मातुः सम्प्रवृत्तौ कुतः स्तनौ ॥
तदभावे शयानोऽहं व्यश्रमिष्यन्तु साम्प्रतं । १३
निद्रागतस्य मे शान्तिरिदानीञ्चाजनिष्यत ॥
उत्सन्नवाटिकाः स्वेषां कृते यै र्निर्म्मिता पुरा । १४
तै र्महीपतिभिः सार्द्धं किं वा तै र्मन्त्रिभिः सह ॥
अध्यक्षैः काञ्चनाढ्यै र्वा रौप्यपूर्णगृहैः सह ॥ १५
अभविष्यमसन् वाहं प्रच्छन्नगर्भपातवत् । १६
अप्राप्तदीप्तिदृष्टीनां बालकानां समोऽपि च ॥
तस्मिन् लोके दुरात्मानो निवर्त्तन्त उपद्रवात् । १७
प्राप्नुवन्ति च विश्राममवसन्नबला जनाः ॥

१८ शान्तिं गच्छन्ति चैकत्र कारागारस्थमानवाः।
न प्रजापीडकस्यापि रवस्तैः श्रूयते पुनः॥
१९ महालोकश्च क्षुद्रश्च तत्स्थाने भवतां समौ।
प्रभोरधीनतातो ऽपि मुक्तिं दासस्य जायते॥
२० मानवायावसन्नाय कुतो दीप्तिः प्रदीयते।
कुतो दीनमनस्काय जीवितं वा प्रदीयते॥
२१ ये वाकाङ्क्षन्ति दुष्प्राप्यं मरणं मनुजा वृथा।
गवेषयन्ति ये लोकाः प्रच्छन्ननिधिवन्मृतिं॥
२२ देहत्यागस्थलं दृष्ट्वा रोमाञ्चकारिसन्मदः।
उल्लासश्च भवेद् येषां तेभ्यो वा दीयते कुतः॥
२३ प्रच्छन्नमार्गगन्त्रे वा निरुद्धायेश्वरेण च॥
२४ हाहाकारः प्रकर्त्तव्य आहारस्याग्रतो मया।
प्रेर्य्यते च विलापो मे पानीयस्य प्रवाहवत्॥
२५ महाभयं यतो ऽकार्षं तदेव वर्त्तते मयि।
येनाशङ्कामकार्षञ्च तद्धि मय्युपतिष्ठते॥
२६ प्राप्यते न मया शान्ति र्विश्रामो ऽपि न लभ्यते।
न प्राप्नोमि श्रमच्छेदं व्यथाक्रान्तः पुनः पुनः॥

---

## ४ चतुर्थो ऽध्यायः।

१ आयूवं प्रतीलीफसस्योत्तरं १२ तस्य स्वप्नदर्शनकथनञ्च।

१ अनन्तरं तैमनीय इलीफसः प्रत्यब्रवीत्।
२ अनुज्ञातः किमालापः क्लेशस्ते वा भवेत् ततः।
किन्तु केन भवेच्छक्यं वचनेभ्यो निवर्त्तितुं॥
३ पश्य हितोपदेशं त्वं बहुभ्यः परिदत्तवान्।
हस्तौ च शिथिलीभूतौ त्वयैव सबलीकृतौ॥
४ स्खलितो यो मनुष्यः स वाग्भिस्त्वयापितस्तव।
यच्च जानुद्वयं भग्नं तत् त्वयैव स्थिरीकृतं॥
५ उपस्थिते च दुःखे त्वां त्वं किम् उद्विजसे ऽधुना।
परिस्पृष्टश्च क्लेशेन स्वयं किम् अवसीदसि॥
६ त्वदीयेश्वरभक्तिः किं न तवाशास्थलं भवेत्।

धर्म्माचारस्य ते किं न प्रत्याशावर्द्धकस्तव॥
निष्पापः को विनष्टो ऽभूदेतत् संस्मर्य्यतां त्वया। ७
क्व वा ते सरलाचाराः स्मृतं येषां विलोपनं॥
अधर्म्मकर्षणं कृत्वा हिंसाबीजं वपन्ति ये। ८
छन्तन्ति ते तथा शस्यमेतदीक्षितवानहं॥
विनाशो जायते तेषां निश्वासाद् ईश्वरस्य हि। ९
नासिकापवनात् तस्य ते गच्छन्ति विलोपनं॥
सिंहस्य रुध्यते नादो मृगेन्द्रस्यापि गर्जनं। १०
वनराजकुमाराणां भज्यन्ते दन्तपङ्क्तयः॥
भक्षणीयस्य चाभावात् क्षयं गच्छति केशरी। ११
सिंहीशावकवृन्दश्च चतुर्दिक्षु विकीर्य्यते॥
सुप्रच्छन्नं स्वरः कश्चिद् उपासर्पन्मदन्तिकं। १२
उपांशु कथितं तस्माद् गृहीतं श्रवणेन मे॥
नैशदर्शनजातानां भावनानाम् उपस्थितौ। १३
यस्मिन् काले मनुष्येषु निद्रा घोरतरा पतेत्॥
साध्वसं वेपथुश्चैव माम् उपाक्राम्यतां तदा। १४
मदीयास्थीनि सर्व्वाणि प्रारभन्त च कम्पितुं॥
एका छाया तदानीन्तु प्रासर्पत् सम्मुखेन मे। १५
तेन रोमाञ्चितो जातो मामकीनः कलेवरः॥
तस्याः समुत्थितायाः न स्पष्टं दृष्टा मयाकृतिः। १६
अतिष्ठत् प्रतिमैका हि मम लोचनयोः पुरः।
पश्चान्मन्दरवो जातो वागियञ्च श्रुता मया॥
ईश्वरस्य समक्षं किं मानवः पुण्यवान् भवेत्। १७
अथवा किं पवित्रः स्यात् मर्त्यः स्वस्रष्टुरन्तिके॥
पश्य स्वकीयदासेषु स विश्वासं करोति न। १८
निजस्वर्गीयदूतेषु चारोपयति मूढतां॥
तर्हि मृत्पिण्डजातेषु गेहेषु प्रवसन्ति ये। १९
धूलिनिर्म्मितमूर्त्तीं स्तान् प्रति किं न करिष्यति।
सर्व्वे ते चूर्णयिष्यन्ते कीटेभ्यो ऽपि पराङ्मुखाः॥
प्रभातसायंयोर्मध्ये गमिष्यन्ति निपातनं। २०
चिन्ता तत्र न कस्यापि ते नङ्क्ष्यन्ति निरन्तरं॥

२१ तेषामुत्तमता किं न तैः सद्धापगमिष्यति।
गन्तव्यः परलोकस्तैरज्ञानलदशाकुलैः॥

## ५ पञ्चमोऽध्यायः।

१ आयूबं प्रतीलीफसस्य धर्म्मकथनं मन्त्रणा च १७ परमेश्वरीयशास्तिफलस्य निर्णयश्च।

१ त्वयाह्वाने कृते कश्चित् किं त्वां प्रतिवदिष्यति।
मध्ये पुण्यवतां को वा यास्यते शरणं त्वया॥
२ कार्कश्यं हन्ति निर्ब्बोधम् अज्ञस्तापेन नश्यति॥
३ नरः कश्चिन्मया मूढो बद्धमूलो विलोकितः।
तत्क्षणादभिशप्तञ्च मया तस्य निकेतनं॥
४ तिष्ठन्ति तस्य सन्तानाः सुदूरे निर्भयस्थलात्।
राजद्वारे च चूर्ण्यन्ते कोऽपि निस्तारयेन्न तान्॥
५ तदीयक्षेत्रशस्यानि भुङ्क्ते क्षुत्पीडितो जनः।
कण्टकानां वनस्यापि मध्यात् तान्याचिनोति सः।
तृषापीडितलोकाश्च पिवन्ति तस्य वैभवं॥
६ विपन्निर्याति नो धूले दुःखं नोत्पद्यते म्टदः॥
७ किन्तु व्यसनभोगार्थं मानवः सम्प्रसूयते।
उड्डीनत्वार्थम् अत्युच्चं जाता वह्निकणा इव॥
८ तस्मान्मतिरियं मे स्याद् ईश आश्रीयतां त्वया।
निवेद्यताञ्च ते वाक्यम् ईश्वरस्यैव सन्निधौ॥
९ साध्यन्तेऽनुपलक्ष्याणि महाकर्म्माणि तेन हि।
अद्भुतान्यपि कार्य्याणि सोऽसंख्यानि करोति च॥
१० महीमण्डलपृष्ठे स वृष्टिवारीणि सिञ्चति।
क्षेत्राणाम् उपरिष्टाच्च तोयानि प्रहिणोति सः॥
११ समुत्थाप्य स नीचस्थान् अत्युच्चान् विदधाति हि।
शोकार्त्ता रक्षितास्तेन प्राप्नुवन्ति समुन्नतिं॥
१२ सङ्कल्पान् धूर्त्तलोकानाम् निरर्थान् प्रकरोति सः।
तस्मान्न जायते तेषां करैः साध्या कृतार्थता॥
१३ स्वेषां चातुर्य्यजालेन बध्नाति ज्ञानिनः स हि।

मन्त्रणा वक्रभावानां भवत्यपूर्णकालजा॥
दिवसे ऽपि मनुष्यास्ते भ्रमन्ति तामसावृताः। १४
ह्स्तामर्षं च कर्त्तव्यस्ते मध्याह्ने ऽपि रात्रिवत्॥
असिनीकाशवक्त्रेभ्यस्तेषां हि परिरक्षति। १५
बलिष्ठस्य कराद् दीनम् उद्धारयति चेश्वरः॥
तस्माद् अकिञ्चनस्यापि प्रत्याशा हि प्रजायते। १६
अधर्म्मेण तथा स्वीयं रोधयितव्यमाननं॥
पश्य धन्यो मनुष्यः स ईशस्तिरस्करोति यं। १७
सर्व्वशक्तिमतः शास्तिं न चावज्ञायतां त्वया॥
स करोति क्षतं जातु स बध्नाति क्षतं पुनः। १८
विदधाति स आघातं तत्करौ च भिषज्यतः॥
षट्सु सङ्कटकालेषु स एव त्वाम् अविष्यति। १९
सप्तमे ऽपि समायाते न त्वां प्राप्स्यत्यमङ्गलं॥
दुर्भिक्षसमये स त्वां मरणादुद्धरिष्यति। २०
युद्धकाले ऽपि ते प्राणान् स रक्षिष्यत्यसेर्मुखात्॥
रसनायाः कशाघातात् त्वं सुगुप्तो भविष्यसि। २१
समागच्छत उत्पातान्न ते त्रासो जनिष्यते॥
दुर्भिक्षोत्पातयोः काले स्मेरस्ते सम्भविष्यति। २२
वनेचरपशुभ्यो ऽपि न कर्त्तव्यं त्वया भयं॥
यतः क्षेत्रस्थपाषाणैः सार्द्धं सन्धिः कृतस्त्वया। २३
आचरन्ति च निर्द्वन्द्वं त्वां प्रत्यारण्यजन्तवः॥
स्ववासस्य सुखावस्था त्वया चावगमिष्यते। २४
स्वगोष्ठस्यानुसन्धाने कृते नो वञ्चयिष्यसे॥
समालोकिष्यसे वंशं स्वकीयं बहुसङ्ख्यकं। २५
पुत्रपौत्रान् स्वकीयांश्च क्षेत्रस्थतृणसन्निभान्॥
परिणामदशां प्राप्य परलोकं गमिष्यसि। २६
स्वकाले सङ्गृहीतस्य धान्यगुच्छस्य सन्निभः॥
पश्यास्माभि र्विनिश्चित्य यदिदं सत्यमुच्यते। २७
भवतापि तदाश्रुत्य निजक्षेमाय गृह्यतां॥

# ६ षष्ठोऽध्यायः ।

१ इल्लीफसं प्रति आयूबस्योत्तरं दुःखस्य वर्णना ८ पुन र्मृत्युप्रार्थनं १४ शुष्कस्रोतोदृष्टान्तः २१ तस्य तात्पर्य्यं बन्धूनां निर्दयत्वं तान् प्रति भर्त्सनञ्च ।

१ तदनन्तरम् आयूबः प्रत्युवाच ।

२ हाहा तापस्य मे भारे सम्यक् केनापि निश्चिते ।
एकस्मिन् मानदण्डे चेत् तुल्यते व्यसनं मम ॥
३ सामुद्रसिकताभ्यः स गरीयान् जायते ऽधुना ।
ततो हेतो र्व्यलीकानि सम्भूतानि वचांसि मे ॥
४ सर्व्वशक्तिमतो बाणाः प्राविशन्नन्तरं मम ।
पीयन्ते च मम प्राणास्तेषां गरलतेजसा ।
ईशस्य त्राससैन्यानि वेष्टन्ते माञ्च सर्व्वतः ॥
५ हरितशष्पमध्ये ऽपि रौति किं वन्यगर्द्दभः ।
वृषो वा यावसं प्राप्य हम्भारावं करोति किं ॥
६ यद् द्रव्यं नीरसं तत् किम् अद्यते लवणं विना ।
किं वा डिम्भस्य लालायां विद्यते स्वादु किञ्चन ॥
७ संस्पर्शमात्रतो येषां बैभत्स्यं जायते मम ।
भोक्तव्यानि मया तानि दुःखानि व्याधिजानि हि ॥
८ हाहा यत् प्रार्थये ऽहं तत् किं कदापि न सेत्स्यति ।
प्रतीक्षे यदहं तत् किम् ईश्वरो न प्रदास्यति ॥
९ मम चूर्णनम् ईशाय कुतो हेतो र्न रोचते ।
स प्रसार्य्य निजं हस्तं न खण्डयति मां कुतः ॥
१० तथा कृते ऽवशिष्टा मे ऽस्थास्यत् काचन सान्त्वना ।
निर्द्दयक्लेशभोगेषु चानन्दो मे ऽजनिष्यत ।
यस्माद् ईशस्य वाक्यानि नानङ्गीकृतवानहं ॥
११ मदीयं किं बलं येन पारयामि तितिक्षितुं ।
का वा मे परिणामाशा यया दीर्घायुम् अर्थये ॥
१२ शैलानां यादृशी शक्तिः किं शक्ति र्मम तादृशी ।
मामकीनानि मांसानि वारकूटमयानि किं ॥
१३ प्रतीकारस्य किं कश्चिद् उपायो मे ऽवशिष्यते ।
मत्तो दूरीकृतं सर्व्वं यदविद्यत कौशलं ॥

दुःखार्त्तो यो मनुष्यः स दयितव्यः स्वबन्धुना। १४
न चेत् सन्त्यक्ष्यते तेन सर्व्वशक्तिमतो भयं॥
भ्रातरो मम सञ्जाताः स्रोतस्तुल्याः प्रवञ्चकाः। १५
किं वा शैल्यनदीजानि सलिलानीव चञ्चलाः॥
द्रवीभूतहिमात् तानि गच्छन्ति कृष्णवर्णतां। १६
अन्तर्धानञ्च तन्मध्ये तुषारस्यापि जायते॥
पश्चात् सङ्कीर्णतां गत्वा नीरवानि भवन्ति हि। १७
ग्रीष्मकाले च स्वस्थानात् तानि भ्रश्यन्ति सर्व्वशः॥
सार्थवाहसमूहास्तु निवृत्य स्वीयवर्त्मनः। १८
मरुभूमिं प्रगच्छन्तो विनाशं प्राप्नुवन्ति हि॥
तेमादेशीयसार्थाश्च तान्याकांक्षन्ति वीक्षितुं। १९
प्राप्तुं तानि प्रतीक्षन्ते शिवादेशीययात्रिकाः॥
इत्थं विश्वसनात् तेषां लज्जा समभिजायते। २०
तत्स्थाने गमनं कृत्वा म्लानवर्णा भवन्ति ते॥
यूयमप्यधुना तद्वद् गतवन्तो व्यलीकतां। २१
समालोक्य विपत्तिं मे यूयं जाता भयातुराः॥
दत्त मह्यमुपग्राह्यं किमिदं गदितं मया। २२
मत्कृते निजवित्तेभ्य उत्कोचं व्ययतेति वा॥
विपक्षस्य करान्माञ्च रक्षतेति किम् आर्थये। २३
यूयं दुरात्मनां हस्तान्मां विमोचयतेति वा॥
यूयम् अर्हथ देष्टुं माम् अहं स्थास्यामि नीरवः २४
मया यद् अपराद्धं तत् मां बोधयितुम् अर्ह ॥
तत्त्वज्ञानस्य वाक्यानि कीदृगतिबलानि हि। २५
युष्माकं शब्ददण्डेन को दोषः शोधयिष्यते॥
युष्माकं किम् इयं चेष्टा शब्दान् यद् दण्डयिष्यथ। २६
वायुतुल्यानि वाक्यानि निराशस्य नरस्य वा॥
अनाथो ऽपि मनुष्यः किं युष्माभिराक्रमिष्यते। २७
बन्धो वा पातनार्थं किं यूयं खातं खनिष्यथ॥
अधुनानुग्रहं कृत्वा दृष्टिं कुरुत मां प्रति। २८
किम् असत्यम् अहं भाषे तद् युष्मद्दृष्टिसम्मुखं॥
अतो हेतो निवर्त्तध्वम् अधर्म्मो नात्र जायतां। २९

निवर्त्तध्वं यतो ऽद्यापि धर्म्मो मे तिष्ठति स्थिरः ॥
१० जिह्वायां मामकीनायां किम् अधर्म्मः प्रविद्यते।
रसज्ञा वा मदीया किं पापास्वादं न बुध्यते ॥

## ७ सप्तमोऽध्यायः।

आयूवस्य विलापकथनं दुःखनिर्णयः पापस्वीकार ईश्वरं प्रति निवेदनञ्च।

१ वसुधा किं मनुष्यस्य युद्धभूमि र्न जायते।
भृतकस्य दिनानीव किं न तस्यापि वासराः ॥
२ छायाम् आश्रयितुं यद्वद् अभिकाङ्क्षति किङ्करः।
यथा वेतनजीवी वा भृतिं प्राप्तुम् अपेक्षते ॥
३ तथा व्यसनयुक्तानां मासानाम् अंशधार्य्यहं।
क्लेशीया रात्रयो मह्यं व्यतीर्य्यन्त च भाग्यवत् ॥
४ भावे शयनकाले ऽहम् उत्थास्यामि कदा पुनः।
सम्भविष्यति वा कर्हि रजन्याः परिपूर्णता।
प्रभातागमनं यावत् क्लाम्यामि प्रचलायितः ॥
५ कीटाः कार्द्दमलोष्टानि चाच्छादयन्ति मे वपुः।
सङ्कुचितञ्च मे चर्म्म जायते गलितं पुनः ॥
६ तुरीतस्तन्तुवायस्य सत्वरा मम वासराः।
मङ्गलाशाविहीनाश्च ते गच्छन्ति समापनं ॥
७ स्मर्य्यतां भवतैतद्धि वायुवन्मम जीवनं।
मङ्गलं वीक्षितुं चक्षु र्मे न प्रत्यागमिष्यति ॥
८ मद्दर्शकस्य नेत्रञ्च मां सन्द्रष्टुं न शक्ष्यति।
नाहं दृश्यो भविष्यामि दृक्पाते ऽपि कृते त्वया ॥
९ क्षीयमाणो नभोधूमो भवत्यन्तर्हितो यथा।
तथावतीर्य्य पातालं नोत्थाता मानवः पुनः ॥
१० स्वकीयं भवनं तेन नहि प्रत्यागमिष्यते।
वासस्थाने स्वकीये स न परिचेष्यते पुनः ॥
११ अतो हेतोरहं नैव संरोत्स्यामि निजाननं।
मनोदुःखं प्रभाषिष्ये लपिष्याम्यान्तरीं व्यथां ॥
१२ अस्म्यहं किम् अपाम्नाथः किं वा नागः समुद्रजः।

तस्मादेव त्वया किं मे रक्षिवर्गो नियोजितः॥
यदा वदामि खट्टा मे सान्त्वनां जनयिष्यति। १३
शयनेन च मे क्लेशः प्रशमिष्यति लाघवं॥
तदानीमपि मां स्वप्नैस्त्वं करोषि भयाकुलं। १४
विकम्पयसि मे चित्तं स्वप्नकल्पितदर्शनैः॥
अतः श्वासावरोधो ऽपि रोचते मानसाय मे। १५
मन्ये मे मरणं क्षेमम् एतस्माद् अस्थिपिञ्जरात्॥
वैराग्यं मम सञ्जातं न जीविष्यामि सर्व्वदा। १६
भवान् निवर्त्ततां मत्तो निःसाराणि दिनानि मे॥
किम्भूतो मानवो यत् स त्वया सम्मन्यते महान्। १७
कुतो मनोनिवेशो वा त्वया तस्मिन् विधीयते॥
कुतः प्रतिप्रभातं स पुनरालोक्यते त्वया। १८
कुतस्तस्य परीक्षा वा विधातव्या प्रतिक्षणं॥
कतिकालं न मत्तस्ते दृष्टिपातो निवर्त्तिता। १९
लालाया गिलनार्थञ्च शान्तिं मह्यं न दास्यसि॥
मर्त्यरक्षक मे पापैः का हानि र्जायते तव। २०
शराणां तव लक्ष्यं मां कुतो हेतो र्व्यकल्पयः।
तेन मे दुर्व्वहो भारः स्वयं सञ्जातवान् अहं॥
मामकीनो ऽपराधश्च कुतो न क्षम्यते त्वया। २१
मामकीनञ्च दोषं त्वं कुतो नेच्छस्यपेक्षितुं॥
तूर्णमेव रजोमध्ये शयनं मे भविष्यति।
तदा त्वयानुसन्धाय दृष्टि र्न प्राप्स्यते मम॥

---

## ८ अष्टमोऽध्यायः।

१ आयूबं प्रति बिल्ददस्योत्तरं ११ दुःखकारणं पापकथनं २० आयूबस्य दोषीकरणं तस्मै भन्त्रणादानञ्च।

अनन्तरं शूहीयो बिल्ददः प्रत्यवादीत्। १
वचांस्येतादृशानि त्वं कतिकालं गदिष्यसि। २
प्रचण्डवायुतुल्यानि वचनानि मुखस्य ते॥
विचारवैपरीत्यं किम् ईश्वरेण विधीयते। ३

यः सर्व्वशक्तिमान् किं स न्यायं वक्रीकरोति वा ॥
४ तद्विरुद्धं कृते पापे त्वदीयैः पुत्रकैः पुरा।
स तेषाम् अपराधस्य भोगाय तान् समार्पयत् ॥
५ किन्तु त्वमेव चेद् ईशं शरणम् आश्रयिष्यसि।
सर्व्वशक्तिमतश्चास्य चेत्त्वं प्रसादयिष्यसि।
६ निर्म्मलः सरलाचारश्चेत् त्वमेव भविष्यसि ॥
तर्हि ते मङ्गलार्थं स तूर्णं गत्वा प्रबुद्धतां।
स्थापयिष्यति निःशङ्कं तव धर्म्मनिकेतनं ॥
७ तत आदिदशारूपाद् अल्पिष्ठादपि वीजकात्।
तव शेषदशारूपो वृहच्छाखी जनिष्यते ॥
८ अथैतद् अनुपृच्छ्यन्तां प्राक्तना मानवास्त्वया।
ज्ञप्तं यत्पितृभिस्तेषां मनस्तत्र निधीयतां ॥
९ वयं स्मो ह्यस्तना एव ज्ञानवन्तो वयं नहि।
छायातुल्यानि नीयन्ते पृथिव्याञ्च दिनानि नः ॥
१० त्वां किं ते नोपदेक्ष्यन्ति बोधयिष्यन्ति किं न ते।
किं न निर्गमयिष्यन्ति वाचः स्वचित्तमध्यतः ॥
११ निष्पङ्कायां नलो भूमौ किं शक्नोति समेधितुं।
स्थाने वा जलहीने किं धमनः परिवर्द्धते ॥
१२ स प्राप्नोति हरिद्वर्णं न च कर्त्तनयोग्यतां।
तृणानां सकलानां स प्रथमः परिशुष्यति ॥
१३ विस्मृतेश्वरलोकानां सर्व्वेषां तादृशी गतिः।
धर्म्महीनमनुष्यस्य प्रत्याशापि विनश्यति ॥
१४ तस्य विश्वासभूमि र्या सा समुच्छिद्यते किल।
लूतातन्तुवितानाच्च निर्विशेषस्तदाश्रयः ॥
१५ स्ववेश्मालम्ब्यमानश्च तेन तिष्ठति न स्थिरं।
तेन सन्धार्य्यमाणश्च तन्न स्थायि भविष्यति ॥
१६ लतानिभः स तेजस्वी जायते किरणै रवेः।
नवीनाः पल्लवास्तस्य चोद्यानं व्याप्नुवन्ति हि ॥
१७ अश्मराशिञ्च वेष्टन्ते तस्य मूलानि जालवत्।
शिलानाञ्चान्तरागारं सन्द्रष्टुं तेन शक्यते ॥
१८ यदा तु मानवास्तस्य स्थानाद् उन्मूलयन्ति तं।

तर्ह्यस्वीकृत्य तद् वक्ति त्वं न दृष्टो मया पुरा॥
तस्य गते र्य आनन्दः पश्यैषा तस्य वर्त्मना। १९
अपरे धूलिमध्याच्च प्ररोक्ष्यन्ति पुनः पुनः॥
पश्य यो मानवः साधुस्तं न सन्त्यजतीश्वरः। २०
किन्तु दुष्कर्म्मिणां हस्तान् स न सन्धारयिष्यति॥
पूरयिष्यति शेषे स हसितैराननं तव। २१
आनन्दजातनादैश्च त्वदीयावधरावपि॥
लज्जया संवरीष्यन्ते सकला द्वेषिणस्तव। २२
दुश्चरित्रनराणाञ्च वासस्थानं विनंक्ष्यति॥

---

## ९ नवमोऽध्यायः।

१ बिल्ददं प्रति आयूबस्योत्तरं २ ईश्वरस्य शक्तिस्वीकारः धार्म्मिकाधार्म्मिकं प्रति तस्या-ङ्गीकरणं २५ स्वदुःखवर्णनञ्च।

अनन्तरम् आयूबः प्रत्युवाच। १
स्वीकृतम् एवमेवास्ति तत् परिज्ञायते मया। २
मर्त्त्य ईशस्य साक्षात् किं पुण्यवान् भवितुं क्षमः॥
ईशो विवदितुं येन मानवेन प्रतुष्यति। ३
सहस्रवचसाम् एकं स वक्तुं नहि शक्ष्यति॥
मनसा बुद्धिमान् सोऽस्ति बलेनापि पराक्रमी। ४
तेन विस्पर्द्धमानश्च कः कदा मङ्गलं गतः॥
स चापसारयत्यद्रीन् तेषाम् अज्ञानगोचरं। ५
स स्वकीयेन कोपेन चोन्मूलयति भूधरान्॥
वसुन्धरापि तेनैव निजस्थानाद् विचाल्यते। ६
मूलस्तम्भाश्च तस्यास्तु विभिद्यन्ते विकम्पिताः॥
आदिष्टः सविता तेन चोदयं विदधाति न। ७
नक्षत्राण्यवरुध्यन्ते तेन मुद्राङ्कितानि हि॥
स विस्तारितवान् एको विहायसोऽपि मण्डलं। ८
समुद्रीयतरङ्गैश्च स करोति गमागमौ॥
सप्तर्षीन् मृगशीर्षञ्च बहुलाश्च स सृष्टवान्। ९
दक्षिणाभिमुखानाञ्च नक्षत्राणां गृहाण्यपि॥

१० साध्यन्तेऽनुपलक्ष्याणि महाकर्म्माणि तेन हि।
अद्भुतान्यपि कार्य्याणि सोऽसंख्यानि करोति च॥
११ गच्छन् मदन्तिकेनैव स न सन्दृश्यते मया।
वायुवन्माम् अतिक्राम्यन् स मया नोपलभ्यते॥
१२ पश्य को ग्रसमानं तं परावर्त्तयितुं क्षमः।
किं करोषीति वाक्यं वा कस्तं प्रतिवदिष्यति॥
१३ संहरीते नहि क्रोधं स्वकीयम् ईश्वरो यदि।
तर्हि पतन्ति तस्याधः सहाया गर्व्विणो नताः॥
१४ अत एतादृशो ऽहं किं क्षमस्तं प्रतिभाषितुं।
सार्द्धं तेन विवादार्थं रोचयिष्यामि वा वचः॥
१५ न पुनर्भाषितुं शक्यो मया पुण्यवतापि सः।
प्रसादनञ्च कर्त्तव्यं मे विवादपतेर्मया॥
१६ मया तस्मिन् समाहूते प्रदत्तवति चोत्तरं।
अश्राविं तेन मे वाक्यं प्रत्ययो ऽत्र न जायते॥
१७ यतः प्रचण्डझञ्झावद् उपाक्राम्यति मां स हि।
आघातैर्बञ्जसंख्यैश्च माम् आविध्यत्यकारणात्॥
१८ माञ्च प्रत्याश्वसिष्यन्तम् अपि स नानुमन्यते।
किन्तु तिक्तरसेनैव परिपूर्णं करोति मां॥
१९ वीर्य्यिष्ये किमहं शक्तिं स एव पश्य शक्तिमान्।
विचारं प्रार्थयिष्ये वा दिनं केन नियोक्ष्यते॥
२० पुण्यवतो ऽपि मे वक्त्रं मां करिष्यति दोषिणं।
मयि सिद्धे ऽपि तेनैव वक्रतारोपयिष्यते॥
२१ अहन्तु पुण्यवान् अस्मि न दूषयति मां मनः।
जीवने मम सन्तोषः कश्चन नावशिष्यते॥
२२ अनन्यद् एवमेवास्ति मयेदम् उच्यते ततः।
पुण्यवान् अपराधी वा तेन संक्षियते नरः॥
२३ अकस्माच्चेत् कशाघातो दुष्टम् आहन्ति मानवं।
तथापि साधुलोकानां हस्यते तेन यातना॥
२४ पृथिवी दुष्टलोकस्य हस्तमध्ये समर्पिता।
तेन तच्छासकानाञ्च मुखान्याच्छादितानि हि।
इत्थं चेन्न भवेत् तर्हि कः स कुत्र वा विद्यते॥

मे दिनानि प्रधावन्ति धावकादपि सत्वरं। २५
तानि तु व्यतिगच्छन्ति न च पश्यन्ति मङ्गलं॥
नलनिर्म्मितनौकाभिस्तरन्ति कालसागरं। २६
उड्डीयन्ते यथोत्क्रोशो भक्ष्यं जिघ्रसिषुः पतन्॥
व्यसनं मम विस्मृत्य म्लानम् आस्यं विहाय च। २७
भविष्यामि प्रफुल्लोऽहमिति सम्भाषिते मया॥
व्यथाभ्यो मम सर्व्वाभ्यः साध्वसं जायते पुनः। २८
त्वं मां निरपराधं न ज्ञास्यसीति प्रवेद्म्यहं॥
अहं दोषी भविष्यामि किं श्राम्यामि निरर्थकं॥ २९
हिमजातेषु तोयेषु क्षालनं प्रकरोमि चेत्। ३०
सर्व्वक्षारेण चेद्धस्तौ स्वकीयौ मार्जयामि च॥
तथापि गर्त्तमध्ये मां पङ्कमग्नं करिष्यसि। ३१
वस्त्रेभ्यश्च मदीयेभ्यो मे बैभत्स्यं जनिष्यते॥
स मत्तुल्यो मनुष्यो न यत्तं प्रतिवदाम्यहं। ३२
विचारस्थानम् एकं न मया तेन च गम्यते॥
विद्यते नावयोः कोऽपि मध्यस्थस्तादृशो जनः। ३३
यो द्वयोरावयो र्मूर्ध्नो र्हस्तावर्पयितुं क्षमः॥
तस्मात् तेन निजो दण्डो मद्दूराद् अपसार्य्यतां। ३४
तस्य भयानकत्वञ्च नोत्पादयतु मे भयं॥
त्रासहीनस्तदा तस्मादहं शक्ष्यामि भाषितुं। ३५
इदानीन्तु नहि स्वस्थं हृदयं मे ऽन्तरे स्थितं॥

---

## १० दशमोऽध्यायः।

ईश्वरं प्रत्यायूबस्य निवेदनं विलापकथनं मरणात् प्राक् किञ्चित् शान्तिप्रार्थनञ्च।

स्वकीये जीवने चित्तं मम निर्विण्णतां गतं। १
तस्माद् उदीरयिष्यामि गुरु मे परिदेवनं॥
मामकीनमनस्तापात् प्रभाषिष्ये वचांसि च। २
ईश्वरञ्च वदिष्यामि दोषिणं मा कुरुष्व मां॥
मया विवदसे कस्मिन् तन्मां प्रवक्तुम् अर्हसि। ३
स्वकीयाभ्यां कराभ्यां यत् त्वमेव सृष्टवान् स्वयं॥

तस्य विग्रहहानिभ्यां किं सुखं तव जायते।
दुष्टानां मन्त्रणायाञ्च किं प्रसन्नो भविष्यसि ॥
४ किं मांसमयनेत्रस्त्वं मर्त्यदृष्ट्या किम ईक्षसे ॥
५ ते दिनानि मनुष्यस्य दिनानां सदृशानि किं।
वत्सरा वा त्वदीयाः किं पौरुषेयदिनोपमाः ॥
६ तस्मादेवापराधस्य मे करोषि गवेषणां।
अन्वेषणाञ्च पापस्य मदीयस्य विचेष्टसे ॥
७ अहं निरपराधस्तत् त्वया विज्ञायते स्वयं।
उद्धर्त्तुं तव हस्ताच्च क्षमः को ऽपि न विद्यते ॥
८ कराभ्यां तव सृष्टो ऽहं निर्म्मितश्च समन्ततः।
तादृशस्यैव मे नाशो भवता किं करिष्यते ॥
९ त्वयाहं मृत्तिकाकारः सृष्टस्तत् स्मर्य्यतां त्वया।
मां त्वमेव पुनर्व्वारं धूलिलीनं करिष्यसि ॥
१० त्वयाहं दुग्धवत् सिक्तो दधिवच्च घनीकृतः ॥
११ आवृतश्चर्म्ममांसैश्च व्यूतश्च स्नायुकीकसैः ॥
१२ दयां जीवनदानञ्च त्वं मां प्रति समाचरः।
तव समीक्षणेनैव जीवात्मा मम रक्षितः ॥
१३ तथाप्येष मनस्कल्पश्चित्ते सङ्गोपितस्त्वया।
अभिप्रेतं तवैतद्धि तत् परिज्ञायते मया ॥
१४ अहं चेत् कृतपापो ऽस्मि तर्हि त्वं मम रक्षकः।
मदीयादपराधाच्च मां न विमोचयिष्यसि ॥
१५ अहं चेद् दुश्चरित्रो ऽस्मि तर्हि मे दारुणा गतिः।
पुण्यवानपि चेद् अस्मि शिरो नोन्नंस्यते मम।
सम्पूर्णस्यापमानेन दुर्दशादर्शनेन च ॥
१६ उन्नतमस्तकं मां त्वम् आखेटिष्यसि सिंहवत्।
मां प्रत्यद्भुतम् आचारं भूयोभूयः करिष्यसि ॥
१७ साक्षिणो मद्विपक्षांश्च समानेष्यसि नूतनान्।
मद्विरुद्धञ्च ते मन्युं सुतरां वर्द्धयिष्यसि।
सैनिका आक्रमिष्यन्ति मां पर्य्यायक्रमेण च ॥
१८ कुतो हेतो र्जनन्या माम् उदराद् उदधारयः।
अनुद्भूतं गतप्रायां नाद्रक्ष्यत् किश्चनाक्षि मां ॥

[illegible]भविष्यं च गर्भात् श्मशानं गतः॥

किं न मे वासराः स्वल्पास्तथा तस्माद् विरम्यतां। १९

मत्तः किञ्चिन्निवर्त्तस्व विश्रमिष्यामि किञ्चन॥ २०

पश्चाद् यात्रां करिष्यामि नायास्यामि पुनस्ततः। २१

स देशस्तमसाच्छन्नो मरणच्छाययावृतः॥

स देशस्तिमिरीभूतो रात्रिवासस्य सन्निभः। २२

मरणच्छायया पूर्णः पारिपाट्येन वर्ज्जितः।

केवलाद् अन्धकाराच्च नान्यस्तस्य प्रभाकरः॥

---

## ११ एकादशोऽध्यायः।

१ आयूबं प्रति सोफरस्य कथनं ७ ईश्वरस्य निर्दोषत्वदर्शनं १३ आयूबं प्रति मन्त्रणा च।

अनन्तरं नामाथीयः सोफरः प्रतिजगाद। १

वचनानां बहुत्वस्य किं न दातव्यम् उत्तरं। २

वावदूकमनुष्यो वा किं निर्द्दोषो भविष्यति॥

वाचालत्वेन ते वीराः किं भविष्यन्ति नीरवाः। ३

किं परीहासकं वा त्वां कोऽपि न लज्जयिष्यति॥

त्वयैतद् भाषितं वाक्यम् आदेशो मम निर्म्मलः। ४

सम्भवामि पवित्रोऽहम् ईश्वरस्यापि सम्मुखे॥

अहो मे साधयन् वाञ्छाम् ईश्वरो यदि भाषते। ५

असंवृताधराभ्याञ्च यदि त्वां प्रतिवक्ति सः॥

ज्ञानं त्वां बोधयन् गूढं बहुरूपञ्च कौशलं। ६

तर्ह्यंशेन तवाघानां भागं वेत्स्यस्युपेक्षितं॥

ईश्वरस्यानुसन्धानं कर्त्तुं किं शक्यते त्वया। ७

सर्व्वशक्तिमतस्तत्त्वं सम्पूर्णं वा किम् आप्स्यसि॥

तद् अन्तरीक्षवत् प्रांशु तत्र त्वं किं करिष्यसि। ८

पातालादपि गम्भीरं तत्र किं ज्ञास्यते त्वया॥

क्षित्या दीर्घप्रमाणं तत् विस्तृतञ्च महार्णवात्॥ ९

कञ्चनाक्रम्य बद्धा च तेन चेत् क्रियते सभा। १०

तर्हि किं विद्यते कश्चित् तं निवर्त्तयितुं क्षमः॥

११ स व्यलीकान् नरान् वेत्ति पापं पश्यत्यचिन्तयन् ॥
१२ ज्ञानशून्यो मनुष्यो ऽत्र किमर्थं पण्डितायते ।
सूयते नररूपी किं वन्यगर्द्दभशावकः ॥
१३ त्वं चेच्चित्तं स्थिरीकृत्य करौ तस्मै प्रसारयेः ॥
१४ हस्ते स्थितम् अधर्म्मञ्च चेद् दूरम् अपसारयेः ।
आश्रयं दुष्टतायै चेन्न दद्याः स्वनिकेतनं ॥
१५ तर्हि त्वं निष्कलङ्कः सन् स्वास्यम् उन्नामयिष्यसि ।
त्वया सुस्थिरतां गत्वा साध्वसं न करिष्यते ॥
१६ तदानीं विस्मरिष्यन्ते त्वया स्वव्यसनान्यपि ।
स्मरिष्यन्त कदाचिद् वा व्यतीतस्रोतसो ऽम्बुवत् ॥
१७ परमायुस्त्वदीयञ्च मध्याह्नादप्युदेष्यति ।
तिमिरेणावृतश्च त्वं भविष्यस्यरुणोपमः ॥
१८ प्रत्याशावर्त्तमानत्वात् त्वं निर्वृत्तो भविष्यसि ।
लज्जाप्राप्तः पुरा त्वञ्च निर्व्विशङ्कः शयिष्यसे ॥
१९ विश्रामं सेवमानं त्वां को ऽपि न त्रासयिष्यति ।
आस्यं प्रसादयिष्यन्ति त्वदीयं बहवो नराः ॥
२० निस्तेजांसि भविष्यन्ति लोचनानि दुरात्मनां ।
नाशाय चाश्रयस्तेषाम् आशा प्राणव्ययाय च ॥

---

# १२ द्वादशोऽध्यायः ।

१ सोफरं प्रति आयूबस्योत्तरं ७ ईश्वरस्य निर्दोषत्वाङ्गीकरणं १३ ईश्वरस्य सर्व्वाधिपतित्वञ्च ।

१ अनन्तरम् आयूबः प्रत्यवादीत् ।
२ वाढं यूयं बुधा युष्मान् विद्या चानुमरिष्यति ॥
३ युष्माकन्तु धियस्तुल्या धीर्ममापि हि विद्यते ।
युष्मत्तो नहि न्यूनो ऽहं को न वेत्तीदृशानि वा ॥
४ आह्वतेनेश्वरेणापि यस्मै दीयत उत्तरं ।
सोऽहं हस्ये स्वमित्रेण धर्म्मी साधुश्च हस्यते ॥
५ उल्कां निर्विघ्नकाले यः स्वचित्तेनावमन्यते ।
पादस्खलनकालेषु तया सो ऽपि स्थिरीकृतः ॥

दस्यूनां वटवेश्मानि मङ्गलावस्थितानि हि। ६
ईश्वरं क्रोधयन्तश्च सन्तिष्ठन्ते निरापदः।
तेषां हस्तेषु वित्तानि समर्पयति चेश्वरः॥
त्वम् इदानीं पशून् पृच्छ ततस्तैः शिक्षयिष्यसे ७
किं वा विहङ्गमान् पृच्छ तैश्चापि बोधयिष्यसे॥
सम्भाषस्व धरण्या वा सापि त्वाम् उपदेक्ष्यति। ८
कथयिष्यन्ति तुभ्यञ्च मीनाः सागरवासिनः॥
एतेषामपि सर्व्वेषां मध्ये को न प्रवेत्ति तत्। ९
यद् एषा परमेशस्य हस्तेनानुष्ठिता क्रिया॥
सर्व्वेषां प्राणिनां प्राणास्तस्यैव हस्तवर्त्तिनः। १०
आत्मानोऽपि मनुष्याणां सर्व्वेषां देहवासिनां॥
शब्दग्रहः किम् उक्तीनां न करोति परीक्षणं। ११
आस्वादनञ्च भक्ष्याणां तालुना किं न लभ्यते॥
वृद्धेषु वर्त्तते विद्या बुद्धि र्वयोगतेषु च॥ १२
विद्यापराक्रमौ तस्मिन् तस्मिंश्च बुद्धिमन्त्रणे॥ १३
पश्य यत् पातितं तेन न तद् उत्थाप्यते पुनः। १४
तेन यस्य गती रुद्धा स विमोचनवर्ज्जितः॥
पश्य तोयानि रुद्धानि तेन गच्छन्ति शुष्कतां। १५
उन्मूलयन्ति भूमिञ्च तेनैव प्रेरितानि हि॥
प्राबल्यकुशले तस्य भ्रमितभ्रमकावपि॥ १६
बद्धा तेनैव नीयन्ते विदेशं राजमन्त्रिणः। १७
धर्म्माधिकारिणश्चापि हतबुद्धीन् करोति सः॥
शासनं क्षितिपालानां स करोति विशृङ्खलं। १८
कटिस्थलानि तेषाञ्च स यन्त्रयति बन्धनैः॥
बद्धा तेन विदेशञ्च नीयन्ते मन्त्रदर्शिनः। १९
निपातयति भूमौ स नरान् स्थायिपराक्रमान्॥
विश्वास्यानां मनुष्याणां वाक्शक्तिं दूरयत्यपि। २०
हरति स्थविराणाञ्च सुविचारविशिष्टतां॥
प्रकरोत्यधिपानां स चाभिषेकम् अवज्ञया। २१
स पराक्रमिलोकानां वियोजयति मेखलाः॥
गम्भीराणि प्रकाश्यन्ते तेनोद्धृत्य तमिस्रतः। २२

तेनैव मरणच्छाया नीयते तेजसः स्थलं ॥
२३ संवर्धयति जातीः स निपातयति ताः पुनः ।
विस्तारयति वंशान् स पुनर्दूरी करोति च ॥
२४ प्रजागणस्य मुख्यानां बुद्धिस्तेनापसार्य्यते ।
ते भ्रम्यन्ते च तेनैव मार्गहीने मरुस्थले ॥
२५ स्पर्शामर्शञ्च कुर्व्वन्ति तिमिरे दीप्तिवर्ज्जिते ।
चलन्ति भ्रमितास्तेन मदोन्मत्तमनुष्यवत् ॥

---

# १३ त्रयोदशोऽध्यायः ।

१ बन्धून् प्रति आयूबस्य तिरस्कारः १४ चकापद्यप्रकाशश्च ।

१ वीक्षध्वं सर्व्वमेवैतत् सन्दृष्टं चक्षुषा मम ।
संश्रुतं मम कर्णेन मनसा च विनिश्चितं ॥
२ युष्माकं यादृशं ज्ञानं ज्ञानं ममापि तादृशं ।
युष्मत्तो यदहं न्यूनस्तन्न स्वीक्रियते मया ॥
३ सर्व्वशक्तिमता साकम् अहन्त्विच्छामि भाषितुं ।
कर्त्तुं वादानुवादञ्च सार्द्धम् ईशेन कामये ॥
४ अतथ्यकल्पका यूयं सर्व्वेऽलीकाश्चिकित्सकाः ॥
५ तूष्णीम्भावः कुतो हेतो युष्माभि नावलम्ब्यते ।
तद् भविष्यति युष्माकं सुविचारस्य लक्षणं ॥
६ मम प्रत्युत्तरं यूयम् आकर्णयितुम् अर्हथ ।
वहिर्गतेऽधराभ्यां मे हेतुवादेऽवधीयतां ॥
७ ईश्वरस्यानुरोधेन किम् अधर्म्मं वदिष्यथ ।
तस्य वा शोधनार्थं किं भाषिष्यध्वे प्रतारणां ॥
८ यूयं वा पक्षपातं किम् आचरिष्यथ तं प्रति ।
ईश्वरस्य कृते यूयम् उत्तरं वा प्रदास्यथ ॥
९ स चेत् परीक्षते युष्मान् तर्हि भूतिं किम् आप्स्यथ ।
किं वा तं वञ्चयिष्यध्वे वञ्चनीयमनुष्यवत् ॥
१० पक्षपाते हि युष्माभिः सुप्रच्छन्नम् अनुष्ठिते ।
अवश्यमेव युष्माकं भर्त्सनां स करिष्यति ॥

महिमा तस्य सम्बासो युष्माकं किं न जायते। ११
तस्य भयानकत्वञ्च किं नाक्राम्यति वो मनः॥
सन्ति भस्ममयाः श्लोकाः स्मरणीयवचांसि वः। १२
हेतुश्रेण्यश्च युष्माकं मृण्मयाः सैन्यपङ्क्तयः॥
तूष्णीम्भवत मत्साक्षात् मया वाक्यं गदिष्यते। १३
गदिते भवितव्यं यत् मे तदेव भविष्यति॥
कुतो हेतो र्निजं मांसं दन्तैश्छित्वा वहाम्यहं। १४
किमर्थञ्च मम प्राणान् स्वकराभ्यां समर्पये॥
निहन्तव्यो ऽपि तेनाहं तस्मिन् स्थास्यामि विश्वसन्। १५
विन्यसिष्यामि चाचारं मदीयं तस्य सम्मुखे॥
तथा कृते परित्राणं मम तेनैव सेत्स्यति। १६
यस्मान्नरो दुराचारस्तत्साक्षान्नोपतिष्ठति॥
यूयन्तु मम वाक्यानि निशामयितुमर्हथ। १७
मदीयावेदनं तस्माद् कर्णैराकर्ण्यतां हि वः॥
पश्यतार्थो विवादस्य सुदृढं स्थापितो मया। १८
अहं यत् पुण्यवानस्मि तज्जानामि सुनिश्चितं॥
मया विवदमानः को मौन्यहं मरणोद्यतः॥ १९
केवलं द्वे क्रिये चेत् त्वं नाचरिष्यसि मां प्रति। २०
तर्ह्यहं तव सान्निध्यम् उपस्थास्याम्यनावृतः॥
मत्तो दूरय हस्तं ते त्रासस्ते मां न भीषयेत्॥ २१
तेन त्वयाहम् आहूतो दास्यामि तुभ्यमुत्तरं। २२
मया वा गदितं वाक्यं प्रतिभाषिष्यते भवान्॥
कति सन्त्यपराधा मे कति मे कलुषाणि वा। २३
दोषं मे मम पापञ्च मां ज्ञापयितुमर्हसि॥
कुतो वक्त्रं समाच्छाद्य भवान् मां मन्यते रिपुं॥ २४
वायुचालितपर्णस्य त्रासं किं जनयिष्यसि। २५
किं वा तृणस्य शुष्कस्य करिष्यस्यनुधावनं॥
तस्मान्मम विरुद्धं किम् अलेखीः कठिनां गतिं। २६
यौवनस्यापराधानां फलं मह्यं ददासि च॥
यन्त्रे बद्धा च मे पादौ सर्व्वां रक्षसि मे गतिं। २७
सर्व्वत्र पादमूले मे सीमयावरणासि च॥

१८ जीर्णता परिगन्तथा तादृशेन मया स्वयं।
असारकाष्ठवत् किं वा कीटभक्षितवस्त्रवत्॥

---

# १४ चतुर्दशोऽध्यायः।

१ मानुषाणामल्पायुष्ट्वकथनं ७ विचारं यावदनुत्थानं पापाद् दुःखोत्पत्तिः।

१ अबलाजनितो मर्त्यः स्वल्पायू भूरिवेपथुः।
२ पुष्पवत् स्फुटितो म्लाति छायेवात्येति सोऽस्थिरः॥
३ त्वयोन्मीलितचक्षुर्भ्यां तादृशः किम् अवेक्ष्यते।
नीये धर्म्मसभाञ्चाहं विवादाय त्वया सह॥
४ शुद्धं जातम् अशुद्धात् को वेत्ति नैकोऽपि विद्यते॥
५ वासरा यस्य निर्णीता मासाश्च गणितास्त्वया।
येन नो लङ्घितुं शक्या त्वया सीमा निरूपिता॥
६ तस्मान्निवार्य्यतां दृष्टिः स तदा विश्रमिष्यति।
भोक्ष्यते दिनमात्रञ्च हर्षं वेतनजीविवत्॥
७ विद्यते पादपस्याशा स छिन्नो वर्द्धते पुनः।
तस्य कोमलशाखाया अभावो न भविष्यति॥
८ भूमौ तस्य पदे जीर्णे धूल्यां स्थाणौ मृतेऽपि च॥
९ वारिगन्धात् पुनस्तस्य पल्लवो निर्गमिष्यति।
स च शोभिष्यते पर्णै र्नवरोपितवृक्षवत्॥
१० मर्त्यो मृत्वा क्षयं याति नरः प्रेत्य क्व गच्छति॥
११ सागराद् अपयान्त्यापो नदी क्षीणा विशुष्यति॥
१२ शयित्वा मानवास्तद्वत् समुत्तिष्ठन्ति नो पुनः।
अन्तरीक्षस्य लोपश्च यावत् ते नैव जाग्रति।
नहि सञ्जायते तेषां स्वनिद्रातः प्रबोधनं॥
१३ सङ्गोप्य प्रेतलोके मां प्रच्छाद्य क्रोधशान्तये।
समयं मे निरूप्य त्वं मामनुस्मर्त्तुमर्हसि॥
१४ पुरुषो मरणं गत्वा सञ्जीविष्यति किं पुनः।
तदा सङ्ग्रामवृत्ते मे यावन्तः सन्ति वासराः।
तावतोऽहं प्रतीक्षिष्ये कार्य्यतो मम मोचनं॥
१५ पश्चात् त्वयाहम् आहूतो दास्यामि तुभ्यम् उत्तरं।

स्वीयहस्तेन स्पष्टे च दया तेऽपि जनिष्यते ॥
अधुना पादविन्यासान् गणयित्वा मम त्वया। १६
क्रियते नहि पापस्य मम सूक्ष्मपरीक्षणं ॥
मुद्राङ्कितो ऽपराधो मे बद्धस्तिष्ठति सम्पुटे। १७
मामकीनञ्च दोषं त्वं सीवनेन जुगुप्ससि ॥
पतनोन्मुखतां गत्वा पर्व्वतोऽपि विशीर्य्यते। १८
तथैव स्थूलपाषाणः स्वस्थानात् भ्रश्यते किल ॥
मर्दन्ते प्रस्तरांस्तोयै र्म्मृद्देशस्थापनीयते। १९
तेषां वेगेन तद्वत् त्वं मर्त्यस्याशाविनाशकः ॥
भूयोभूयस्त्वयाक्रान्तो याति लोकान्तरं नरः। २०
तस्य वक्त्रविकारञ्च कृत्वा सोऽपास्यते त्वया ॥
स्वपुत्त्रै र्गौरवे प्राप्ते तेन तन्नावगम्यते। २१
अवज्ञातेषु वा तेषु तस्य बोधो न जायते॥
केवलं दुःसहं तस्य मांसम् आप्नोति यातनां। २२
भारतुल्यञ्च तस्यात्मा शोकापन्नोऽवतिष्ठते ॥

---

## १५ पञ्चदशोऽध्यायः।

१ आयूबं प्रतीलिफसस्योत्तरं दोषीकरणं १४ पुरावृत्तकथया पापभोगस्य प्रमाणदर्शनञ्च।

तदनन्तरं तैमनीय इलीफसः प्रतिगादितवान्। १
पण्डितस्योत्तरे शिक्षा वातजा किं प्रयुज्यते। २
तेन पूरयितव्यं किं स्वोदरं पूर्व्ववायुना ॥
कर्त्तव्यस्तेन किं तर्कः फलवर्ज्जितवाङ्मयः। ३
प्रयोक्तव्यानि किं तेन कदर्थानि वचांसि वा ॥
उच्छिनत्सि च मन्ये त्वम् ईश्वरादपि साध्वसं। ४
ईश्वरस्य समक्षञ्च प्रार्थना क्षास्यते त्वया ॥
त्वदीयेनैव वक्त्रेण तेऽपराधः प्रकाश्यते। ५
धूर्त्तानाञ्च मनुष्याणां तुभ्यं जिह्वापि रोचते ॥
नाहं त्वां दोषिणं कुर्व्वे त्वदीयास्यं करोति हि। ६
अधरौ च त्वदीयौ हि विपक्षसाक्षिणौ तव ॥

७ आदिजो मानवः किं त्वं गिरिभ्यः प्राक् प्रकल्पितः।
८ ईश्वरस्य सभायां वा किं त्वया मन्त्रणा श्रुता।
चोरयित्वा च किं तत्र लब्धं ज्ञानामृतं त्वया॥
९ त्वं यज्जानासि तन्मध्ये न जानीमो वयं हि किं।
त्वया यद् बुध्यते तस्य किम् अस्मासु न वर्त्तते॥
१० विद्यते मध्यमस्माकं पक्वकेशस्तथा जरी।
गुरु र्वर्षबहुत्वेन त्वदीयाज्जनकादपि॥
११ त्वं किम् ईशस्य वाक्यानि सान्त्वदान्यवमन्यसे।
तस्य वा कोमलालापं त्वया सार्द्धम् अनुष्ठितं॥
१२ क्व त्वां हरति चित्तं ते लोलाक्षि जायसे कुतः॥
१३ ईशमेव समुद्दिश्य कोपं कृत्वा शरासनं।
प्रक्षिप्यन्ते निजाद्वक्त्राद् वाणा वाग्मिमयास्त्वया॥
१४ को मर्त्त्यः किं स निर्दोषः कः स्त्रीजः किं स पुण्यवान्॥
१५ पश्य स्वीयपवित्रेषु विश्वासं न करोति सः।
तस्य दृष्ट्यान्तरीक्षञ्च निष्कलङ्कं न मन्यते॥
१६ किं नु गर्ह्यः कुगन्धश्च मर्त्त्योऽघं वारिवत् पिवन्॥
१७ पूरयहं त्वां विनेष्यामि वदिष्यामि मयेक्षितं।
१८ प्राज्ञैर्यत्तम् अनाच्छाद्य पितृणामुपदेशनं॥
१९ पृथिवी केवलं तेभ्यः पितृभ्यः प्रददे पुरा।
तेषां मध्ये विदेशी च कोऽपि न प्राविशत् तदा॥
२० वासरा यति दुष्टस्य क्लिश्यते तावदेव सः।
वर्षाणां यावती संख्या निष्ठुराय निरूपिता॥
२१ तावदेवापदां शब्दो वर्त्तते तस्य कर्णयोः।
तस्य मङ्गलकालेऽपि तम् उपैति विनाशकः॥
२२ तमिस्राच्च परावृत्तेराशा तस्य न जायते।
चन्द्रहासेन बध्यः स तत्कृते परिरक्ष्यते॥
२३ सोऽन्नार्थी भ्राम्यति क्वान्नम् अन्धकारमयं दिनं।
निरूपितं स्वपार्श्वस्थम् एतदेव प्रवेत्ति सः॥
२४ आयाससङ्कटाभ्यां स त्रासयित्वा विजीयते।
समरार्थं सुसज्जेन पृथिवीपतिना यथा॥
२५ यस्माद् विरुद्धम् ईशस्य स विस्तार्य्य निजं करं।

सर्व्वशक्तिमता सार्द्धं युयुत्सां सम्प्रकाश्य च॥
उच्चीकृत्य निजां ग्रीवां तम् उद्दिश्य प्रधावति। २६
चर्म्मणां तस्य गण्डांश्च स्थूलाकारान् तुतुत्सति॥
यतो हेतोश्च सञ्छाद्य पीनत्वेन निजाननं। २७
यथेष्टं मांसलीकृत्य स्वीयमेव कटिस्थलं॥
नगरेषु विनष्टेषु निर्जनेषु च वेश्मसु। २८
पाषाणराशिकल्पेषु स्वं निवासं करोति सः॥
तस्मान्नो लप्स्यते वृद्धिं सम्पत्तिस्तस्य न स्थिरा। २९
भूमावबद्धमूलश्च तस्यैश्वर्य्यं भविष्यति॥
अन्धकारमयात् स्थानात् प्रस्थातुं स न शक्ष्यति। ३०
पल्लवाः कोमलास्तस्य धक्ष्यन्ते वह्निशिखया।
मुखवातेन चेशस्य सोऽपि प्रस्थापयिष्यते॥
मा विश्वसेदलीके स विश्वसन् वञ्चयिष्यते। ३१
फलान्यलीकरूपस्य चालीकानि स लप्स्यते॥
अकाले तानि पक्ष्यन्ते तच्छाखा न समर्धिता॥ ३२
निपातयिष्यते तेन द्राक्षयेव निजं फलं। ३३
जितवृक्षोऽपमेनापि स्वपुष्पं स्रावयिष्यते॥
अधर्म्माचारिलोकानां शैलवन्निष्फला सभा। ३४
वेश्मान्युत्कोचकानाञ्च ग्रसिष्यन्ते हि वह्निना॥
दौरात्म्येन सगर्भास्ते जनयिष्यन्त्यलीकतां। ३५
उत्पादयिष्यते तेषां जठरेण प्रतारणा॥

---

## १६ षोडशोऽध्यायः।

१ बन्धुवृन्दं प्रति आयूबस्य तिरस्करणं ६ निजदुःखस्य वर्णनं ११ तस्याधःपतनकथनं १५ तदीयं दुःखं १९ स्वर्गे तस्य साक्षित्वं।

तदनन्तरम् आयूबः प्रत्यगादीत्। १
एतादृशानि वाक्यानि बहूनि श्रुतवानहं। २
सान्त्वनावादिनो यूयं सर्व्वे आयासवर्द्धकाः॥
उक्तीनां वातजानां किम् अन्तः कोऽपि न विद्यते। ३
उत्तरस्य प्रदानाय किं त्वामेवोदतेजयत्॥

४ युष्माभि र्भाषितुं यादृक् मयापि शक्यते तथा।
प्राणानां मम चेत् स्थानं युष्मत्प्राणैरकल्प्यत॥
तर्ह्यशक्यं विरुद्धं वो यूथितुं वाक्यवाहिनीं।
युष्माकं प्रतिकूलञ्च निजं चालयितुं शिरः॥
५ युष्मान् वा सबलीकर्त्तुं मौखिकेन बलेन हि।
किं वा शमयितुं दुःखम् ओष्ठयोरनुकम्पया॥
६ भाषमाणस्य मे क्लेशो न्यूनत्वं नहि गच्छति।
वाक्यान्निवर्त्तमाने वा मयि किं स प्रतिष्ठति॥
७ इदानीं त्वीश्वरेणाहं सर्व्वतः परिशोषितः।
विनाशितं त्वया कृत्स्नं मम बान्धवमण्डलं॥
८ त्वयैवाहं यद् आक्रान्तस्तत् साक्ष्यं मद्विरुद्धतः।
व्याधि र्मेऽरिवदुत्थाय मत्साक्षान्माञ्च निन्दति॥
९ विद्वेष्टि तस्य कोपेन विरोधाचारिणा मयि।
स हि मत्प्रातिकूल्येन स्वेडति स्वीयखादनैः।
शत्रुवन्मद्विरुद्धञ्च नेत्रे तीक्ष्णीकरोति सः॥
१० व्यादाय निजवक्त्राणि वीक्षन्ते माञ्च मानवाः।
तैरेव सापमानं मे गण्डदेशो विताड्यते।
सर्व्वे मत्प्रातिकूल्येन समागच्छन्ति सङ्घशः॥
११ ईश्वरो ऽधर्म्मिलोकस्य करयो र्मां समार्पयत्।
दुरात्मनाञ्च लोकानां हस्तेषु न्यक्षिपत् स मां॥
१२ अहमासं निरुद्वेगः स एव मां प्रभग्नवान्।
मामकीनं गलं धृत्वा खण्डशः कृतवांश्च मां।
स्वशरव्यार्थमेवाहं तेन संस्थाप्य कल्पितः॥
१३ शराणां तस्य मेघश्च वेष्टते मां समन्ततः।
स च निर्द्दयतां गत्वा विदारयति मे यकृत्।
मामकीनञ्च पित्तं स भूमावेव निषिञ्चति।
१४ अश्रान्तं छिद्रयित्वा मां वीरवच्चाभिधावति॥
१५ स्यूतोऽस्त्यूर्णालोमजं वस्त्रं स्वचर्म्माच्छादितं मया।
निपात्य मामकीनञ्च शृङ्गं धूल्यां प्रलोठितं॥
१६ क्रन्दनान्मम वक्त्रञ्च कृष्णवर्णमुपागतं।
मम चक्षुर्भ्रुवोरूर्द्ध्वं मृत्युच्छायाधितिष्ठति॥

तथाप्यक्रूरहस्तोऽहं पवित्रा प्रार्थनापि मे ॥ १७
हे भू माच्छादयतां पीत्वा मदीयं शोणितं त्वया। १८
कातरोक्ति मदीया च माप्नोतु कञ्चनाश्रयं ॥
इदानीमपि वीच्तस्व साक्षी मे दिवि विद्यते। १९
मम प्रमाणदाता च प्रांशुस्थानेषु तिष्ठति ॥
मध्यस्थो मम बन्धुर्मे ईश्वं वीक्ते ऽश्रुलोचनः ॥ २०
मानवार्थं विवादं स साङ्केमीश्वेन कुर्व्वतां। २१
स्वोयबन्धोश्च पक्षः स ब्रयान्मनुजपुत्रवत् ॥
यस्माद् अत्यल्पसंख्येषु वत्सरेषु गतेषु हि। २२
स गन्तव्यो मया पन्था यस्मात् प्रत्यागमो न मे ॥

---

## १७ सप्तदशोऽध्यायः।

१ ईश्वरं प्रत्यायूवस्य निवेदनं ११ तत्योरपेक्षा च।

वियुक्ताः सन्ति मे प्राणा निस्तेजांसि दिनानि च। १
शववासाश्च मे नान्यत् किञ्चनेवावशिष्यते ॥
तथापीमे मया साङ्कं तिष्ठन्ति परिहासकाः। २
तेषां विरोधचेष्टासु वर्त्तते लोचनं मम ॥
त्वं मम प्रतिभू भूत्वा स्वान्तिके क्षिप मे पणं। ३
न चेत् को मे करं धृत्वा प्रतिभू र्मे भविष्यति ॥
यस्मात् त्वं चित्तमेतेषां ज्ञानलाभान्न्यवारयः। ४
अतो हेतो र्न कर्त्तव्या ह्येतेषामुन्नतिस्त्वया ॥
लोप्त्राणाम् अंशवद् येन निर्दिश्यन्ते स्वबन्धवः। ५
लोचनैस्तस्य पुत्राणां निस्तेजस्त्वं गमिष्यते ॥
तादृङ्नरेण लोकानां हास्यभूमिरहं कृतः। ६
सर्व्वेषामेव साक्षाच्च सञ्जातोऽहं घृणास्पदं ॥
दुःखान्नेत्रं मम क्षीणं छायातुल्याखिला तनुः। ७
अनेनाकुटिलाचाराः स्तम्भिताः सम्भवन्ति हि। ८
अधार्म्मिकाच्च रोमाञ्चो निर्दोषस्यापि जायते ॥
धार्म्मिकः स्थिरचित्तेन निजमार्गे प्रवर्त्तते। ९
शुचिहस्तमनुष्यस्य वर्धते च सदा बलं।

१० सर्व्वे यूयं परावृत्य समागच्छत पूर्व्ववत्।
युष्मन्मध्ये मया कोऽपि ज्ञानी नासादयिष्यते॥
११ मम दिनान्यतीतानि तथैवोच्छिन्नतां गताः।
सकला मम सङ्कल्पा अर्थाश्चित्तस्य मे प्रियाः॥
१२ तथापीमे मनुष्यास्तां रात्रिं कुर्व्वन्ति वासरं।
दीप्तिं वदन्ति चासन्नां तमिस्रस्याग्रगामिनीं॥
१३ यो ऽहं काङ्क्षामि पातालं मामकीननिवासवत्।
आस्तृणामि मदीयञ्च शयनीयं तमिस्रके॥
१४ क्षयं वच्मि पिता मे त्वं कीटी माता स्वसा च मे।
१५ आशा मे तादृशस्य क्व ममापेक्षां क ईक्षते॥
१६ पातालमवरूढे ते निरुद्धे तस्य चार्गलैः।
सार्द्धं ताभ्याञ्च विश्रामो धूल्यामेव मयाप्स्यते॥

---

## १८ अष्टादशोऽध्यायः।

आयूबं प्रति बिल्‌दद्‌स्योत्तरं आयूबस्य दोषिलकरणं तदीयपापस्य फलं विपद्दर्शनञ्च।

१ तदनन्तरं शूहीयो बिल्‌ददः प्रतिजगाद।
२ शब्दानां मृगयां यूयं कति कालं करिष्यथ।
बुद्धिमाप्नुत तत्पश्चात् प्रभाषिष्यामहे वयं॥
३ पशूनामेव तुल्यार्थाः कुतो गण्यामहे वयं।
कुतो हेतोरमेध्याश्च युष्माकं दृष्टिगोचरे॥
४ कोपादात्मविदारिन् किं भूस्त्वदर्थं विहास्यते।
किं वा शिलोच्चयः स्वीयात् स्थानादुत्पाटयिष्यते॥
५ दुराचारमनुष्यस्य नूनं निर्व्वास्यति द्युतिः।
तस्य गेहे ऽनलस्यापि शिखा स्थास्यत्यनुज्ज्वला॥
६ तस्य वेश्मनि दीप्तिश्च तमोभूता भविष्यति।
तदूर्द्ध्वे च स्थितस्तस्य दीपो निर्व्वास्यति स्वयं॥
७ तदीयविक्रमस्यापि पदं सङ्कोचयिष्यते।
निजमन्त्रणया तस्य निपातश्च जनिष्यते॥
८ चरणौ च स्वकीयौ तं जाले निक्षेपयिष्यतः।
पाशानामुपरिष्टाच्च स विहारं करिष्यति॥

तदीये पादमूले च कूटयन्त्रेण सन्धृते। ९
अङ्कुम् अग्रतमं तस्य गलपार्श्वे निर्भंत्स्यते॥
गुप्ते भूमौ तदुन्माथे तस्य जाले च पद्धतौ। १०
वेष्टयन्तस्तमुत्पातास्त्रासयिष्यन्ति सर्व्वतः। ११
ते तच्चोद्वेजयिष्यन्ति द्रावयन्तः पदात् पदं॥
बले तस्य क्षुधाकारे नाशे पार्श्वस्थिते सति। १२
खादिष्यन्ते तदङ्गानि चर्म्ममात्रमयानि हि। १३
खादिष्यन्ते तदङ्गानि मृत्योरादिजसूनुना॥
निजाद् उत्पाटितो दूष्यात् स्वाश्रयाद् भयवर्ज्जितात्। १४
स नूनं त्रासराजस्य सम्मुखं गमयिष्यते॥
यच्च स्थास्यति तस्यैव वस्त्रगेहे न तस्य तत्। १५
तदीये वसतिस्थाने गन्धको विकरिष्यते॥
तस्याधःस्थितमूलानि प्रगमिष्यन्ति शुष्कतां। १६
तस्योर्द्धस्थितशाखापि परिम्लाना भविष्यति॥
अनुस्मृतिस्तदीया च नरलोके विनंक्ष्यति। १७
भूमण्डलस्य पृष्ठे च तस्य नाम न शेक्ष्यते॥
दीप्तितस्तमसो मध्यं तदा तस्मिन् प्रवासिते। १८
जीवाधारस्य मध्याच्च कृते तस्यापसारणे॥
न ह्यवशेक्ष्यते देशे तस्य सन्तानसन्ततिः। १९
तस्य वेश्मसु नैकोऽपि स्थास्यते रक्षितो जनः॥
स्तम्भिष्यन्ते प्रतीचीना मानवास्तस्य दुर्द्दिनात्। २०
पूर्व्वदेशीयलोकानां रोमाञ्चोऽपि जनिष्यते॥
दुराचारस्य गेहानां वर्णनैषा यथास्थिता। २१
ईश्वरानभिज्ञलोकस्य स्थानमेतादृगेव च॥

---

## १९ ऊनविंशोऽध्यायः।

१ बिल्ददं प्रति आयूबस्योत्तरं दुःखस्य विशेषवर्णनं २३ श्मशानादुत्थानकथनञ्च।

अनन्तरम् आयूबः प्रत्यवदत्। १
क्लेक्ष्यथ कतिकालं मां चूर्णयिष्यथ चोक्तिभिः॥ २
अधुनाहं तु युष्माभि र्दशकृत्वोऽवमानितः। ३

स्वीकृतस्य युष्माभि र्लज्जया परिवर्ज्जितैः॥
४ मम भ्रान्तस्य या भ्रान्तिः सा मामेवाधितिष्ठति॥
५ यूयं मद्वैपरीत्येन दर्पं किमाचरिष्यथ।
असम्मानकलङ्काद् वा माम् आत्तेन्नुं किम् इच्छथ॥
६ तर्हीदमेव बुध्यध्वम् अहम् ईशेन नामितः।
तेन ममोपरिष्टाच्च समाकृष्टा स्ववागुरा॥
७ पश्य रोदिमि दौरात्म्यात् कोऽपि न प्रतिवक्ति मां।
ईरयाम्यार्त्तनादश्च विचारो ऽपि न जायते॥
८ निरुद्धस्तेन मे मार्गो मया गन्तुं न शक्यते।
तमो ऽपि स्थापितं तेन मामकीनेषु वर्त्मसु॥
९ मम सम्भ्रमवस्त्रञ्च तेन मत्तो ऽवतारितं।
शिरःस्थितः किरीटो ऽपि मम तेनापसारितः॥
१० आकृष्टः सर्व्वतस्तेन तिरोगच्छाम्यहं किल।
पतत्युन्मूलिता तेन प्रत्याशा मम वृक्षवत्॥
११ मयि प्रज्वाल्य कोपाग्निं गण्ये ऽहं तेन शत्रुवत्॥
१२ अभ्यागच्छन्ति सम्भूय तस्य सैन्यबलानि च।
मामेवोद्दिश्य तैः स्वीयं विनिर्म्माय महापथं।
मद्गेहस्य चतुर्द्दिक्षु स्थाप्यते शिविरं निजं॥
१३ मम भ्रातृसमूहश्च तेन मत्तो ऽपसारितः।
उदासीनसमा जाता लोकाः परिचिता मम॥
१४ स्वजातीयैरहं त्यक्त आत्मीयैरपि विस्मृतः॥
१५ मद्गेहे प्रवसन्तो ऽपि मानवा दासिकाश्च मे।
मन्यन्ते माम् उदासीनं दृश्ये ऽहं तै विदेशिवत्॥
१६ समाहूतो ऽपि मे भृत्य उत्तरं न प्रयच्छति।
मामकीनेन वक्त्रेण कष्टं प्रसादयामि तं॥
१७ गर्ह्यते भार्य्यया श्वास आत्मजै र्विनति मम।
१८ बालैरप्यवमन्ये ऽहम् उत्तिष्ठंश्च तिरस्क्रिये।
१९ ममात्मीयाः सखायो ये तैरप्यस्म्यवगर्हितः।
ममातीव प्रिया ये ते गता मत्तः पराङ्मुखाः॥
२० आसज्यन्ते ममास्थीनि मदीयचर्म्ममांसयोः।
दन्तानाञ्च त्वचा सार्द्धं मे प्राणा एव रक्षिताः॥

दया दयैव युष्माभिः क्रियतां मयि बन्धवः। २१
ईश्वरस्य करेणाहं यतो हेतोः समाहतः॥
ईश्वरेणेव युष्माभि र्द्रोहो मे क्रियते कुतः। २२
अभुक्त्वा मम मांसं किं यूयं तृप्तिं न यास्यथ॥
हाहा मदीयवाक्यानि कुतो नो लिखितानि हि। २३
पत्रिकायां कुतस्तेषां रचना न विधीयते॥
कुतस्तानि न विद्यन्ते सीसे लौहशलाकया। २४
शिलोच्चयस्य शीर्षे हि तक्षितानि सदातनं॥
तथापीदमहं वेद्मि मोचको मम जीवति। २५
शेषे धूल्युपरिष्टाच्च स समुत्थास्यते ध्रुवं॥
गते ऽपि देहकोषे मे एतस्मिन् जर्ज्जरीकृते। २६
मामकीनशरीरस्थः समीक्षिष्ये ऽहम् ईश्वरं॥
अहमेव समीक्षिष्ये मम सन्तर्पणाय तं। २७
द्रष्टव्यं लोचनाभ्यां मे न चापरस्य चक्षुषा।
हा हा वक्षःस्थले क्षीणा मम प्राणा भवन्ति हि॥
तस्य द्रोहं कुतो ऽकुर्म्म यूयमेतद् वदिष्यथ। २८
धर्म्मवृक्षस्य मूलञ्च प्राप्यते ऽभ्यन्तरे मम॥
चन्द्रहासस्य साक्षाद्धि युष्माकं जायतां भयं। २९
चन्द्रहासस्य ये दण्डास्ते कोपानलदाहवत्।
ततो ज्ञास्यथ यूयं तद् यद् विचारो विधीयते॥

---

## २० विंशतितमोऽध्यायः।

आयूबं प्रति सोफरस्योत्तरं पापिनां दुर्द्दशादर्शनञ्च।

पश्चात् नामाथीयः सोफरः प्रतिजगाद। १
अनेनोत्तरदानाय मां प्रेरयति चण्डता। २
यतो हेतोरधैर्य्येण व्यग्रम् अभ्यन्तरं मम॥
उपदेशो मयाश्रावि लज्जार्थं मम कल्पितः। ३
उत्तरं तस्य मे ज्ञानाद् आत्मा मह्यं प्रयच्छति॥
प्रसिद्धम् आदिकालाद् यत् स्थापनादेव भूतले। ४
मानवानाञ्च यत् ख्यातं तत् किं न ज्ञायते त्वया॥

५ दुष्टस्य क्षणं उल्लास आनन्दो ऽधर्म्मिणः क्षणं ॥
६ समारोहति चेत् तस्य महिमाकाशमण्डलं।
यदि स्पृशति वा तस्य शीर्षं जलधरानपि ॥
७ तथापि स्वीयविष्ठेव स विनंक्ष्यति सर्व्वथा।
ये लोकास्तमवैक्षन्त ते वदिष्यन्ति कुत्र सः॥
८ तच्च स्वप्नवद् उड्डीनं कोऽपि नासादयिष्यति ।
रात्रीयं दर्शनं यद्वत् तद्वत् स द्रावयिष्यते ॥
९ येन स चक्षुषा दृष्टस्तेन न द्रक्ष्यते पुनः।
वासस्थानेन तस्यैव स न वीक्षिष्यते पुनः ॥
१० तस्य पुत्राश्च यान् दीनान् चूर्णयन्ति हि मानवान्।
तेभ्यस्तस्य करौ स्वीयं धनं शोधाय दास्यतः॥
११ तस्यास्थीनि च पूर्णानि यानि यौवनतेजसा।
धूलीमधिशयिष्यन्ते सार्द्धं तेनैव तान्यपि ॥
१२ मुखे सुस्वादु पापं चेज्जिह्वाधस्तेन गोप्यते।
१३ तस्मिन् प्रीत्वा तदत्यक्त्वा चेच्च तालुनि रक्ष्यते ॥
१४ तर्ह्युदरस्य मध्ये हि तस्यान्नं विकरिष्यते।
गरलेन भुजङ्गानां व्याप्स्यते तस्य चान्तरं ॥
१५ गिलितं तेन यद् वित्तं पुनस्तद् वमिष्यते।
वह्निः करिष्यतीशस्तत् तदीयोदरमध्यतः ॥
१६ विषं पास्यति सोऽहीनां हिजिह्वैश्च हनिष्यते ॥
१७ मङ्गलस्रोतसां तेन दर्शनं नहि लप्स्यते।
नवनीतप्रवाहानां मधुधाराप्रसारिणां ॥
१८ अभुक्त्वा प्रतिदातव्यं तेन स्वोपार्ज्जितं धनं।
आयव्ययौ समौ तस्य स हर्षं न करिष्यति ॥
१९ चूर्णयित्वा यतस्तेन सन्त्यक्ता दीनमानवाः।
लोठयित्वा गृहं तेन न पुनस्तद् विनिर्म्मितं ॥
२० यस्माद् उदरतृप्तिञ्च नावगच्छत् स कर्हिचित्।
तस्मात् तुष्टिकरं किञ्चित् न शक्यं तेन रक्षितुं ॥
२१ तस्य बुभुक्षया कश्चिद् अवशिष्टो न विद्यते।
तस्मात् तस्य शुभावस्था स्थायित्वं न गमिष्यति ॥
२२ सम्पूर्णे तस्य चैश्वर्य्ये क्लेशस्तं पीडयिष्यति।

दुःखिनामापदः सर्व्वा आक्रमिष्यन्ति तं किल ॥
इशा तस्योदरपूर्त्त्यर्थं निजकोपाग्निमीश्वरः। २३
तस्मै प्रेष्यान्नवत् तस्य मस्तके वर्षयिष्यति ॥
पलायने कृते तेन लौहसज्जासमीपतः। २४
अनुव्यत्स्यति तं शीघ्रम् आरकूटमयं धनुः ॥
वाणस्तेन समाकृष्टः पृष्ठतो निर्गमिष्यति। २५
निष्क्रान्ते तैजसे पित्तात् सन्त्रासस्तम् उपैष्यति ॥
अन्धकारसमूहो ऽस्ति सञ्चितस्तस्य वित्तवत्। २६
अनुपवीजितेनैव वह्निना स ग्रसिष्यते।
तदावासे ऽवशिष्टानां दुर्गतिः सम्भविष्यति ॥
गगनेनापराधश्च तस्य व्यक्तो करिष्यते। २७
तद्विपक्षस्य साक्षीव समुत्थास्यति मेदिनी ॥
तदीयभवनस्यापि सम्पत्ति र्दूरयिष्यते। २८
तरङ्गिणीव कोपस्य दिने सापगमिष्यति ॥
अयमंशो मनुष्याय दुष्टायेशेन दीयते। २९
तेन चैतद्धि भोक्तव्यम् ईश्वरस्याज्ञया फलं ॥

---

## २१ एकविंशोऽध्यायः।

१ सोफरं प्रति आयूबस्योत्तरं ७ पापिलोकानां सम्पत्तिः १६ तेषामपि विपत् २१ भद्राणां दुष्टलोकानाञ्च विपत्कथनं २७ पुराष्टमकथनं तस्यैको दृष्टान्तश्च।

अनन्तरम् आयूबो ऽवदत्। १
मनो निधाय युष्माभिः श्रूयतां वचनं मम। २
तदेव सान्त्वनादानं युष्माकं गणयिष्यते ॥
अहं यावत् प्रभाषिष्ये तावन्मां सोढुमर्हथ। ३
मयोदीरितवाक्यस्य पश्चात् त्वं विहसिष्यसि।
अहं मानवमुद्दिश्य कातरोक्तिं करोमि किं। ४
कुतो हेतो र्मदीयात्मा चासहिष्णु र्भवेन्नहि ॥
मां विलोक्य चमत्कारं मत्वा दत्त मुखे करं। ५
संस्मृत्याहमपि स्तम्भे रोमाञ्चितकलेवरः ॥ ६
कुतो दुष्टमनुष्याणां जीवनं परिरक्ष्यते। ७

जायन्ते स्थविरास्ते हि प्रोन्नता विक्रमेण च ॥
८ तेषाञ्च सुस्थिरो वंशः साक्षात् तान् उपतिष्ठति।
बालापत्यानि तेषाञ्च विद्यन्ते दृष्टिगोचरे ॥
९ सुखं तिष्ठन्ति तेषाञ्च वासा उत्पातवर्ज्जिताः।
तेषां मूर्द्धीश्वरस्यापि दण्डाघातो न वर्त्तते ॥
१० गाम् उपैति वृषस्तेषां तत्रासिद्धि र्न जायते।
प्रसूते सृङ्गिणी तेषां नैव वेह्वायते च सा ॥
११ अजाविकं यथा तद्वत् स्वबालान् प्रेषयन्ति ते।
तेषां सन्तानवर्गश्च प्रकरोति हि नर्त्तनं ॥
१२ मृदङ्गवीणयो र्वाद्यं कुर्व्वन्त्युच्चैःस्वरेण ते।
वंशीवादनशब्देन हृष्टचित्ता भवन्ति च ॥
१३ सुखेन वासरान् स्वीयान् सकलान् यापयन्ति ते।
तत्पश्चाद् अवरोहन्ति प्रेतलोकं क्षणान्तरे ॥
१४ ईश्वरं ते वदन्तीदम् अपैह्यस्मत्समीपतः।
ज्ञानं यत् तव मार्गाणां तदस्मभ्यं न रोचते ॥
१५ कः सर्व्वशक्तिमान् यत् तं निषेविष्यामहे वयं।
तस्मै प्रार्थयमानाश्च किं वा लप्स्यामहे फलं ॥
१६ पश्य तेषाम् अभीष्टं यत् तन्न तेषां करे स्थितं।
दुष्टानां मन्त्रणा मत्तस्तिष्ठति दूरवर्त्तिनी ॥
१७ कतिवारं हि दुष्टानां दीपो निर्वापणं गतः।
तेषामेव विनाशोऽपि कतिवारम् उपैति तान्।
व्यसनानि विभज्यन्ते कुपितेनेश्वरेण च ॥
१८ वायुचालितनालानां तदा तुल्या भवन्ति ते।
झञ्झायापहृतानां वा तुषाणामेव सन्निभाः।
१९ ईश्वरस्तस्य पुत्रेभ्यस्तस्याघं परिरक्षति।
ददाति वा फलं तस्मै तत् स एव च भोक्ष्यते ॥
२० स्वकीयं सर्व्वनाशञ्च द्रक्ष्यतः स्वस्य लोचने।
सर्व्वशक्तिमतो रोषं स एव परिपास्यति ॥
२१ तस्यानुवर्त्तिवंशेन को हर्षस्तस्य जायते।
मासानां तस्य या संख्या सा समुच्छेत्स्यते किल ॥
२२ ईशं कः शिक्षयेत् ज्ञानम् उन्नतानपि शास्ति सः।

सम्पूर्णस्वास्थ्यकाले हि नर एकः प्रमीयते। १३
सर्व्वथा मङ्गलप्राप्तो निर्व्विरोधः समन्ततः॥ •
सम्पूर्णा नवनीतेन विद्यन्ते तस्य नाडिकाः। १४
तदीयास्थ्राञ्च मेदो ऽपि सम्यगाप्यायितं सदा॥
मनस्तापेन निर्व्विसस्त्वान्यः कश्चित् प्रमीयते। १५
आस्वादो मङ्गलस्यापि तेन न प्रापि कर्हिचित्॥
एकत्राधिशयिष्येते धूलिं तौ मानवावुभौ। १६
उभावाच्छादयिष्येते कीटरूपेण वाससा।
वीक्षध्वम् अवगम्यन्ते युष्माकं कल्पना मया। १७
तर्का मत्प्रातिकूल्येन युष्माभी रचिता अपि॥
युष्माभि र्गद्यते कुत्र तस्य देशपते र्गृहं। १८
दुष्टानां वसतिस्थानं शिविरं कुत्र वा गतं॥
युष्माभिः किं न सम्पृष्टा मानवा अध्वगामिनः। १९
किं न दृष्टानि तेषाञ्च लोकानां लक्षणानि हि॥
विनाशस्य दिनं यावत् दुरात्मा परिरक्ष्यते। २०
क्रोधस्यैव दिने नूनं स उपस्थापयिष्यते॥
कस्तं स्वकीयम् आचारं बोधयेत् तस्य सम्मुखे। २१
तेन यत् क्रियते तस्य फलं दीयेत केन वा॥
असौ नीतः शवागारं तत्स्तूपमधितिष्ठति॥ ३२
निम्नभूमेश्च लोष्टाणि सुस्वादूनि स मन्यते। ३३
आकर्षन्ते च तत्पश्चात् सकलास्तेन मानवाः।
तदग्रगामिलोकाश्च गणनातीतसंख्यकाः॥
ईदृग् असारवाक्यैः किं यूयं मां सान्त्वयिष्यथ। ३४
उत्तराणि हि युष्माकं व्यलीकोच्छिष्टभक्ष्यवत्॥

---

## २२ द्वाविंशोऽध्यायः।

१ इलीफसस्योत्तरम् आयूवस्य दोषित्वकरणं १५ परमेश्वरस्य निर्द्दोषकरणं २१ आयूवं प्रति मन्त्रणा च।

अनन्तरं तैमनीय इलीफसः प्रत्यवदत्। १
ईश्वरस्योपकारं किं कर्त्तुं शक्नोति मानवः। २

करोत्यात्मोपकारं हि मनुजः सुविचारकः॥
३ त्वं पुण्ययुक्त एतत् किं सर्व्वशक्तिमतो हितं।
त्वदीयाचारसिद्धत्वात् को लाभस्तस्य जायते॥
४ किं त्वत्तः साध्वसं कृत्वा स त्वां तिरस्करिष्यति।
किं विचारसभां वा स त्वया सार्द्धं गमिष्यति॥
५ न हि किं दुष्टता स्थूला ते ऽनन्ताः कुक्रिया अपि॥
६ भ्रातृणामपि निक्षेपा क्रियन्ते ऽकारणात् त्वया।
गात्रेभ्यस्त्वापकृष्यन्ते नग्नानां वसनान्यपि॥
७ अवसन्नाय पानार्थं तोयं नो दीयते त्वया।
क्षुत्पीडिताय दानञ्च भक्ष्यस्य त्वमपह्नुषे॥
८ बलसंयुक्तबाहुर्यो देशस्तस्यैव विद्यते।
सर्व्वसम्मानितेनैव सोऽधिवस्तुञ्च शक्यते॥
९ विसृष्टा रिक्तहस्ता हि विधवा योषितस्त्वया।
चूर्णिताः पितृहीनानां बालानां बाहवस्तथा॥
१० ततो हेतोश्च पाशास्त्वां वेष्टयन्ति समन्ततः।
अकस्माद् भयमुत्पद्य त्वां विह्वलीकरोति च॥
११ किं न निरीक्षसे ध्वान्तं त्वं छन्नस्तोयराशिना॥
१२ आकाशमण्डलादेव प्रोच्चः किम् ईश्वरो नहि।
ताराणां शीर्षकं पश्य तासां कीदृक् समुच्छ्रयः॥
१३ त्वयेदं गद्यते वाक्यं किं जानाति स ईश्वरः।
अन्धकारस्य मध्येन शासनं किं करोति सः॥
१४ मेघा आवरणं तस्य न शक्नोति स वीक्षितुं।
अन्तरीक्षस्य चक्रे च स विहारं करोति हि॥
१५ पूर्व्वकालिकलोकानां मार्गे त्वं किं चरिष्यसि।
दुर्वृत्ता मानवास्तत्र पथिका येऽभवन् पुरा॥
१६ अकाले ते हतास्तेषां गेहं लीनं नदीसमं॥
१७ अस्मत्तोऽपैहि दूरं त्वम् इति तैरुक्त ईश्वरः।
सर्व्वशक्तिमता तेषां निमित्तं किं क्रियेत वा॥
१८ स हि पूरितवान् तेषां गेहान्युत्तमवस्तुभिः।
दुष्टानां मन्त्रणा मत्तो दूरमेवापसारिता॥
१९ धार्म्मिका वीक्षमाणास्तान् गमिष्यन्ति प्रफुल्लतां।

लोकै र्निरपराधैश्च तान् विहस्य गदिष्यते॥
अस्माकं ये विपक्षाः किं न गतास्ते विलोपनं। २०
तेषां यद् द्रविणं तच्च वह्निना किं न भक्षितं॥
ईशं श्रद्धेहि तेन त्वं शान्तः प्राप्स्यसि मङ्गलं। २१
शिक्षां गृहाण तद्वक्त्रात् चित्ते कुरु च तद्वचः॥ २२
प्रभुं प्रति परावृत्य त्वं पुनः स्थापयिष्यसे। २३
अधर्म्मञ्च सुदूरं चेत् स्वगेहादपसारयेः।
तर्हि स्वर्णं च्युते धूल्यां हेम्नि स्रोतःशिलासु च। २४
प्रभुः स्वर्णं सुशुभ्रञ्च रजतं ते भविष्यति॥ २५
प्रभुरेव तदानीं ते हर्षभूमि र्भविष्यति॥ २६
त्वमपीश्वरम् उद्दिश्य मुखम् उन्नमयिष्यसि॥
तस्मै प्रार्थयमानस्य ते वाक्यं स ग्रहीष्यति। २७
यत् प्रतिश्रुतवान् तत् त्वं सर्व्वं संशोधयिष्यसि॥
त्वया सङ्कल्पितं वाक्यं त्वन्निमित्तञ्च सेत्स्यति। २८
मार्गास्ते दीपयिष्यन्ते चोर्द्धसंस्थेन तेजसा॥
अवनामितलोकांस्त्वं वक्ष्यस्युन्नतिमाप्स्यथ। २९
निस्तारयिष्यते तेन मनुजो नम्रलोचनः॥
यस्य निर्द्दोषता नास्ति सोऽपि तेनोद्धरिष्यते। ३०
उद्धारः प्राप्स्यते तेन शुचित्वात् करयोस्तव॥

---

# २३ त्रयोविंशोऽध्यायः।

१ ईश्वरेण विचारार्थम् आयूबस्य प्रार्थना स्वस्य निर्द्दोषत्वप्रकाशनञ्च १७ ईश्वराद् आयूबस्य भीतिश्च।

अनन्तरम् आयूबः प्रत्यवदत्। १
तीव्रो ऽद्यैव विलापो मे श्वासो दण्डेन रुध्यते। २
आ इयं मम वाञ्छा यत् परिज्ञाय तमाप्नुयां। ३
यत् तदीयासनं यावत् समायातुञ्च शक्नुयां॥
तदा निवेदयिष्यामि मे विवादं तदन्तिके। ४
हेतुवादैश्च वक्त्रं मे पूरयिष्यामि निश्चितं॥
यच्च दास्यति मह्यं स वेदिष्यामि तदुत्तरं। ५

परिष्वास्यामि वाक्यञ्च तेन मां प्रति भाषितं॥
६ किं स्वकीयमहाशक्त्या स मया विवदिष्यते।
नैवं किन्तु मनोयोगो मयि तेन करिष्यते।
७ मानवः सरलस्तत्र तेन सार्द्धं विचारयेत्।
उद्धारं प्राप्नुयाञ्चाहं नित्यं मे दण्डनायकात्।
८ पश्यत प्राङ् अहं यामि नहि तत्र स विद्यते।
पश्चाद् वा वर्त्तमानेन स मया नावगम्यते॥
९ सव्यदिश्यपि कर्म्मिष्ठं तं न शक्नोमि वीक्षितुं।
दक्षिणस्याञ्च गुप्तः स मया द्रष्टुं न शक्यते।
१० किन्तु स एव जानाति मार्गम् आचरितं मया।
कृतायां मे परीक्षायां निर्गमिष्यामि हेमवत्॥
११ मदीयचरणस्तस्य पादचिह्नानि नात्यजत्।
आश्रितस्तस्य पन्था च निश्चलेन मया सदा॥
१२ तस्य चाधरयो र्वाक्यान्नाहं जातः पराङ्मुखः।
तन्मुखान्निर्गता वाचस्तामन्ये स्वान्नतो वरं॥
१३ किन्तु स आत्मतन्त्रः कस्तं परावर्त्तयिष्यति।
यद् इष्टं मनसा तस्य तदेव तेन साध्यते॥
१४ यच्च मामधि निर्णीतं तत् स सम्पादयिष्यति।
तादृशान्येव कर्म्माणि सन्ति तस्य बहूनि हि॥
१५ ततो हेतो र्मम त्रासो जायते तस्य सम्मुखे।
मया विवेचनां कृत्वा तस्मात् कम्पश्च गम्यते॥
१६ ईश्वरेण मे मनो भग्नं त्रस्तोऽहं सर्व्वशक्तिना॥
१७ अन्धकारभयेनैव मे वाग्रोधो न जायते।
न वा मत्तो भयेनापि मैन्यहं तमसावृतः॥

---

## २४ चतुर्विंशोऽध्यायः।

१ दुष्ट पापिनां दण्डस्य सदा न भवत्वकथनं कियद्‌रण्यवासिनां तत्प्रमाणीभवत्वं ६ उपद्रविलोकस्य प्रमाणीभवत्वं १३ दुश्चव्यभिचारिलोकानां प्रमाणीभवत्वं १८ नानाविधलोकानां प्रमाणीभवत्वञ्च।

१ सर्व्वशक्तिमतस्तेन्न गुप्ताः कालास्तदा कुतः।

तस्य मित्रै र्न दृश्यन्ते तदीयानि दिनानि हि ॥
केचित् क्षेत्रान्तचिह्नानि स्वस्थानाद् द्रवयन्ति हि। २
केचिन्मेषव्रजं हृत्वा तस्य कुर्व्वन्ति चारणं ॥
केचिद् वा तातहीनानाम् अपनयन्ति गर्दभं। ३
केचिद् वा विधवाया गां गृह्णन्ति बन्धकीकृतां ॥
केचिद् अकिञ्चनान् लोकान् बहिष्कुर्व्वन्ति मार्गतः। ४
गुप्यन्ते युगपत् तस्मात् देशस्था दुःखिता जनाः ॥
पश्य प्रान्तरमाश्रित्य ते वन्यै र्गर्द्दभैरिव। ५
निजं विधीयते कार्य्यं भक्ष्यस्यैव गवेषणं।
मरुभूमिस्तदीयानां बालानाम् अन्नदायिनी ॥
क्षेत्रे शाकानि छिन्दन्तस्ते संगृह्णन्ति भक्षणं। ६
दुष्टस्योपवने वा तैः शेषं सञ्चीयते फलं ॥
वस्त्राभावाच्च ते नग्ना यामिनीं यापयन्ति हि। ७
किमप्याच्छादनं तेषां शीतकाले न विद्यते।
पर्व्वतीयेन वर्षेण जलसिक्ता भवन्ति ते। ८
आलम्बन्ते च ते शैलान् आश्रयेण विवर्जिताः।
केचिद् हरन्ति बालञ्च पितृहीनं स्तनादपि। ९
बन्धकस्यापहारेण दुर्गतान् पीडयन्ति च ॥
वसनाभावतो नग्नास्ते कुर्व्वन्ति गमागमौ। १०
क्षुधार्त्ताः कृपणास्यैव शस्यभारान् वहन्ति ते ॥
तस्य प्राकारमध्ये वा तैलं निष्पीडयन्ति हि। ११
द्राक्षाणां मर्द्दनं यद्वा तैः कर्त्तव्यं तृषातुरैः ॥
नगरान्म्रियमाणानां श्रूयते परिदेवनं। १२
लोकानां हन्यमानानां प्राणा उच्चै रुदन्ति च।
न करोति मनोयोगम् ईश्वरस्तत्र पातके ॥
आलोकद्वेषिणां मध्ये गणितव्या नरा अमी। १३
तस्य मार्गान् न जानन्ति नासते तस्य वर्त्मसु ॥
प्रातरुत्थाय हन्तासौ हन्ति दीनमकिञ्चनं। १४
यामिन्यां तस्करेणैव निर्व्विशेषः स जायते ॥
पारदारिकलोकस्य नेत्रं सन्ध्यामपेक्षते। १५
मां न द्रक्ष्यति कस्यापि चक्षुरिति प्रभाष्य सः।

स्वकीयं वदनं सम्यग् आच्छादयति वाससा॥
१६ केचिद् गेहेषु कुर्व्वन्ति तमिस्रे सन्धिकर्त्तनं।
दिवा मुद्राङ्कबद्धास्त आलोकं न विदन्ति हि॥
१७ मृत्युच्छायासमानं हि प्रभातं तैश्च मन्यते।
दारुणा मरणच्छाया तत् ते जानन्ति निश्चितं॥
१८ तादृशो मानवस्तूर्णं तरङ्गिण्यापनेष्यते।
मेदिन्यां तस्य वित्तञ्च परिशप्तं भविष्यति।
आरामागाञ्च मार्गे स विहारं न करिष्यति॥
१९ अनावृष्टिनिदाघाभ्यां क्षीयते हिमजं जलं।
नरकेण मनुष्याश्च क्षेष्यन्ते कृतपातकाः॥
२० विस्मरिष्यति तं गर्भः कीटस्तं खादयिष्यति।
लोप्स्यते स्मरणं तस्य पापे छिन्ने पलाशिवत्॥
२१ बन्ध्यां हिंसत्यसूतां स नानुगृह्णात्यभर्त्तृकां॥
२२ धारयति स्वशक्त्या स बलिष्ठानपि मानवान्।
तस्माद् येनोन्नति र्लब्धा जीवने स न विश्वसेत्॥
२३ दत्ते तस्मै भयाभावे स्थिरता तस्य जायते।
किन्त्वीशस्येक्षणं तेषां पद्धतीरधितिष्ठति॥
२४ उन्नतिं प्राप्य तैः शीघ्रम् अन्तर्धानं प्रयास्यते।
उत्सन्ना संग्रहीष्यन्ते प्रेत्य तेऽन्यमनुष्यवत्।
म्लानत्वञ्च गमिष्यन्ति शस्यशीषस्य शूकवत्॥
२५ इत्थं चेन्नहि कस्तर्हि मे वाक्यं खण्डयिष्यति।
उक्तीनाञ्च मदीयानां दर्शयिष्यत्यलीकतां॥

---

## २५ पञ्चविंशोऽध्यायः।

विल्ददस्योत्तरम् ईश्वरस्य निर्दोषत्वं मानुषस्य दोषित्वञ्च।

१ अनन्तरं शूहीयो विल्ददः प्रत्यवदत्।
२ प्रभुत्वं भीषणत्वञ्च तस्मिन्नेव प्रतिष्ठितं।
स्वकीयोच्चनिवासेषु मङ्गलं विदधाति सः॥
३ तदीयानां बलानाञ्च सङ्ख्या किं परिमीयते।
कं जनं प्रति वा तस्य दीपको नाभ्युदेति हि॥

तर्ह्यीश्वरस्य समक्षं किं मनुजः पुण्यवान् भवेत् । ४
अबलाजनितो मर्त्यः किं भविष्यति निर्म्मलः ।
पश्य चन्द्रो ऽपि तेनैव प्रभावान् नहि मन्यते । ५
तारास्तस्य समक्षञ्च शुचयो न भवन्ति हि ॥
तर्हि का कीटकल्पस्य मनुष्यस्य पवित्रता । ६
कथं वा नरसन्तानः क्रिमितुल्यः शुचि र्भवेत्॥

---

## २६ षड्विंशोऽध्यायः ।

विलद्दं प्रति आयूवस्योत्तरम् ईश्वरस्य महिमप्रकाशनञ्च ।

तत आयूब उक्तवान् । १
किमाश्चर्य्यमुपाकारि शक्तिहीनो नरस्त्वया । २
किमाश्चर्य्यं त्वया बाहु दुर्बलस्य स्थिरीकृतः ॥
कीदृशी ज्ञानहीनाय त्वया दत्ता च मन्त्रणा । ३
कीदृक् प्रचुरकौशल्यं त्वया वा सम्प्रकाशितं ॥
कस्त्वयाध्यापितः श्लोकान् कस्य धीरीरिता त्वया ॥ ४
प्रेताः क्षुभ्यन्ति तोयानां गर्भे च तन्निवासिनः ॥ ५
तस्याग्रे नरको नग्नः संहारश्छादितो नहि ॥ ६
शून्ये तेनोत्तरा स्तीर्णालोके चालम्बिता धरा ॥ ७
आपः स्वाम्भेषु बद्धाश्च घनस्ताभि र्न भिद्यते ॥ ८
स्वीयसिंहासनस्यापि दर्शनं स निवारयन् । ९
स्वकीयमेघजालेन प्रच्छादयति तन्मुखं ॥
अकूपारस्य विस्तारे चक्रस्तेनैव चित्रितः । १०
दीप्त्यन्धकारयोः सीमा येन सूक्ष्मं निरूप्यते ॥
नभःस्तम्भाश्च कम्पित्वा त्रस्यन्ति तस्य भर्त्सनात् ॥ ११
स स्वकीयमहाशक्त्या चोद्वेजयति सागरं । १२
निजया प्रज्ञया तेन तस्य गर्व्वो ऽपि चूर्ण्यते ॥
करोति निर्म्मलं तस्य श्वास आकाशमण्डलं । १३
नागं पलायमानञ्च तस्य हस्तः प्रविद्धवान् ॥
पश्यैते तस्य मार्गाणां प्रान्ता एव भवन्ति हि । १४

कीदृग्घोषद्विनादस्तु ततो ऽस्माभि र्निशम्यते।
तदीयस्य महिम्नश्च गर्ज्जनं केन भोत्स्यते॥

---

## २७ सप्तविंशोऽध्यायः।

१ आयूबस्य स्वनिर्दोषत्वकरणं ७ निजाकापट्यप्रकाशनम् १३ पापिनां कदाचित् दण्डितत्वस्य स्वीकरणञ्च।

१ अनन्तरं स्वप्रसङ्गेन पुनरायूब इत्थं कथयामास।
२ मद्धर्म्मस्यापहर्त्ता य ईशः स यदि जीवति।
मत्प्राणक्लेशको वा चेज्जीवन् स्यात् सर्व्वशक्तिमान्॥
३ तर्हि यावन्मम श्वासो देहमध्येऽवतिष्ठते।
वायुरीशेन दत्तश्च नासिकायां प्रवर्त्तते॥
४ तावन्ममाधरौ दुष्टं वचनं न वदिष्यतः।
मदीया रसना कञ्चित् छलं नो कल्पयिष्यति॥
५ यथार्थवादिनो यूयमिति स्वीकरणं मया।
प्राणत्यागदिनं यावत् मैव भूयात् कदाचन।
नाहं वियोजयिष्यामि मत्तः स्वचित्तशुद्धतां॥
६ स्वपुण्यं धारयिष्यामि न हास्यामि कदाचन।
यावज्जीवञ्च मे चित्तं नहि मां दूषयिष्यति॥
७ भूयाद् दुष्टसमो मेऽरि र्मे विपक्षश्च पापिवत्।
८ आशा का धर्म्महीनस्य किं फलं तेन लप्स्यते।
ईश्वरो देहतस्तस्य प्राणान् वहिः करिष्यति॥
९ क्लेशाक्रान्तस्य किं तस्य रोदनं श्रोष्यतीश्वरः॥
१० सर्व्वशक्तिमता तस्य हृदयं किं प्रतुष्यति।
ईशमुद्दिश्य किं तेन प्रार्थना क्रियते सदा॥
११ ईश्वरस्य करे शिक्षा युष्मभ्यं दीयतां मया।
सर्व्वशक्तिमतो भावो मया न छादयिष्यते॥
१२ किं न युष्माभिरप्येतत् सर्व्वैरेव विलोकितं।
तद्विलोकतया यूयं कुतो हेतो र्विमुह्यत॥
१३ अयमंशो मनुष्याय दुष्टायेशेन दीयते।
सर्व्वशक्तिमतश्चायं दायो लभ्यो दुरात्मना॥

वर्द्धते तस्य पुत्राणां सङ्ख्या खड्गस्य दमये। १४
आहारेण न पूर्य्यन्ते शिशवस्तस्य कोमलाः॥
तेनावशिष्टवंशस्य शवदाही च मारकः। १५
तस्य या विधवास्ताभिः क्रन्दनं क्रियते नहि॥
रजतं किं कदाचित् स राशीकरोति धूलिवत्। १६
मृत्तिकाचयवत् वा किं सञ्चिनोति सुचेलकान्॥
भद्रं तथा कृते साधु र्वस्त्रान्वितो भविष्यति। १७
रजतञ्च विभक्ष्यन्ते मानवा दोषवर्ज्जिताः॥
पतङ्गस्य गृहं यादृग् वेश्म वा क्षेत्ररक्षिणा। १८
निर्म्मितं तादृशं स्वार्थं तेन निर्म्मीयते गृहं॥
धनी गत्वा महानिद्रां न समानीयते दिवं। १९
उन्मील्य निजनेत्रे स उपगच्छति लीनतां।
वन्येवोपैति तं त्रासो झञ्झा हरति तं निशि॥ २०
स पूर्व्ववायुना ग्रस्तोऽपैति स्वस्थानतो हृतः॥ २१
निर्द्दयं ताड्यमानः स प्रधाविष्यति तत्करात्॥ २२
करतालं तमुद्दिश्य करिष्यन्ति च मानवाः। २३
श्रोष्ठशब्दञ्च कुर्व्वद्भिस्तैः स दूरीकरिष्यते॥

---

## २८ अष्टाविंशोऽध्यायः।

१ पदार्थविषयकज्ञाने मनुष्याणां नैपुण्यकथनं १२ पारमार्थिकज्ञानस्य म...कथनं २० परमार्थविषयकज्ञानस्य दुष्प्राप्यत्वकथनञ्च।

रौप्यस्य विद्यते योनिः स्थाल्यं हेम्नः स्थलं तथा॥ १
धूलेरुद्धार्य्यते लौहं ताम्रायाश्मा विलाप्यते॥ २
अन्धकारस्य सीमापि मानवेन निरूप्यते। ३
मृत्युध्वान्ते तमिस्रे च स्थितानामश्मनामपि।
स करोत्यनुसन्धानं परिपूर्णमखण्डतः॥
जृम्भिते खातकूपे हि प्रवासस्थानपार्श्वतः। ४
विस्मृताश्चरणै र्लोका दोलायन्त इतस्ततः।
यान्ति चञ्चल्यमानास्ते स्थानं मानववर्ज्जितं॥
यया चोत्पाद्यते भक्ष्यं तस्या भूमेरधः स्थितं। ५

तत्तं विदार्य्यमाणं तैर्जायते ऽग्निवदुज्ज्वलं॥
६ तच्छिला नीलकान्तस्य स्थानं हेमस्य तद्रजः॥
७ पक्षिराजोऽपि तं मार्गं नाभ्यजानात् कदाचन।
न सन्दृष्टः कदाचित् स चक्षुषा दूरदर्शिनः॥
८ पशुराजस्य पोतैर्न कृतौ तत्र गमागमौ।
न कदाचिद् विहारो वा तत्र केशरिणा कृतः॥
९ क्रियते वज्रशैले हि मनुष्येण करार्पणं।
उत्पाद्यन्ते समूलाश्च तेन महीधरा अपि॥
१० पाषाणानाञ्च मध्येन खन्यन्ते तेन निम्नगाः।
सकलान्येव रत्नानि दृश्यन्ते तस्य चक्षुषा॥
११ सरितामश्रुपातश्च तेन बद्धा निवार्य्यते।
गूढं वस्तु बहिष्कृत्य दीप्तिस्थानञ्च नीयते।
१२ किन्तु क्व प्राप्यते विद्या धीस्थानमस्ति कुत्र वा॥
१३ मर्त्त्यैर्नाज्ञेयमूल्या सा न प्राप्या जीवतां भुवि॥
१४ गम्भीरं वदति स्थानं मयि सा नहि विद्यते।
सागरो ऽपि तथा वक्ति सा न मत्सहवर्त्तिनी॥
१५ तप्तस्वर्णस्य दानं न तस्या विनिमयो भवेत्।
न तया सममूल्यं वा रजतस्यापि तोलनं॥
१६ ओफीरीयहिरण्येन तौले सा नोपमीयते।
वैदूर्य्येण महार्घेण नीलकान्तेन वा नहि॥
१७ नहि काञ्चनमच्छो वा याति तस्याः समानतां।
स्वर्णभूषापि नाप्नोति तत्परिवर्त्तयोग्यतां॥
१८ विद्रुमस्फटिकानाञ्च नाम नोच्चार्य्यतामपि।
विद्यारत्नं यतो हेतो मुक्ताभ्यो ऽप्युत्तमं धनं॥
१९ कूशदेशीयपीतो न याति तस्याः समानतां।
निर्म्मलेन हिरण्येन तौले सा नोपमीयते॥
२० कुतस्तोत्पद्यते विद्या धीस्थानमस्ति कुत्र वा॥
२१ सा हि तिष्ठति संगुप्ता नेत्रेभ्यः सर्व्वजीविनां।
पक्षिणां खेचराणाञ्च दृष्टितः सा तिरोहिता॥
२२ ब्रूतः संहारकालौ हि नौ कर्णैस्तच्छ्रुतिः श्रुता।
२३ ईशो जानाति तन्मार्गं तस्याः स्थानञ्च वेत्ति सः॥

यस्माद् भूमण्डलस्यान्तान् यावद् दृष्टिं करोति सः॥ १४
आकाशमण्डलस्याधःस्थितं सर्व्वञ्च पश्यति॥
निश्चिन्वन् गुरुतां वायोरपां मानं निरूपयन्॥ १५
वर्षायाश्चां यदा सोऽदाद् वज्राघाताय चायनं। १६
तस्मिन् काले समालोक्य सा तेनैवोपवर्णिता। १७
तां संस्थाप्यानुसन्धानं तस्यास्तेनाप्यनुष्ठितं॥
मानवञ्च समुद्दिश्य तेनेदमीरितं वचः। १८
पश्य प्रभो र्भयं विद्या दुष्टताप्रोज्झनञ्च धीः॥

---

## २९ ऊनत्रिंशोऽध्यायः।

१ स्वपूर्व्वीयसौभाग्य आयूबस्य विलपनं २१ पूर्व्वीयसम्माने विलपनञ्च।

अनन्तरम् आयूबः स्वप्रस्तावतः पुनरवोचत्। १
पूर्व्वकालिकमासेषु रक्षितस्येश्वरेण मे। २
शुभकाले च यावस्था प्राप्तुमिच्छामि तां पुनः॥
तदानीं तस्य दीपेन मम शीर्षमदीप्यत। ३
अन्धकारोऽपि गन्तव्यो मयाभूत् तस्य तेजसा॥
मम वसन्तकालस्य लिप्सितां सुस्थितिं पुनः। ४
अध्यतिष्ठन्ममावासम् ईशस्यात्मीयता तदा॥
आसीन्मम सहायश्च तदानीं सर्व्वशक्तिमान्। ५
सन्ताना मामकीनाश्च मामवेष्टन्त सर्व्वतः॥
क्षीरेणाक्षालयञ्चाहं स्वकीयौ चरणौ व्रजन्। ६
मत्समीपस्थशैलश्च तैलस्रोतांस्यवाहयत्॥
वहिर्गत्य पुरद्वारं नगरस्य मुखे स्थितं। ७
सन्निवेशस्य मध्ये हि स्वासने स्थापिते मया॥
युवानो मां समालोक्य गूढस्थानं समाश्रयन्। ८
स्थविराश्च समुत्थायावातिष्ठन्त मदन्तिके॥
अध्यक्षाश्च वचो रुद्ध्वा मुखेऽकुर्व्वन् करार्पणं॥ ९
वाणीहीनकुलीनानां जिह्वासज्यत तालुनि॥ १०
यतः श्रुत्वैव कर्णेन मह्यमाशीरदीयत। ११
लोचनेनापि मां दृष्ट्वाक्रियत स्तवनं मम।

१२ यतो हतो रुदन् दीनो बालकस्तातवर्ज्जितः।
साहाय्यहीनलोकश्चैतेषां रक्षा मयाभवत्॥
१३ विनाशोद्यतलोकस्य मयि चाशीरवर्त्तत।
विधवायाः स्त्रियश्चित्तस्याहं गीतमगापयं।
१४ अहं पर्य्यदधां धर्म्मं सोऽभवन्मे परिच्छदः।
मत्पुण्यं राजवस्त्रं मे किरीटश्चाभ्यजायत॥
१५ अहं लोचनमन्धस्य पदः खञ्जस्य चाभवं॥
१६ तातश्चाहं दरिद्राणां यं नाजानामहं जनं।
अनुसन्धाय तस्यापि विसंवादं व्यचारयं॥
१७ भंक्त्वा दुरात्मनो दन्तान् तद्दन्तेभ्योऽहरं मृगं॥
१८ मया प्रोक्तं सनीडो हि प्रमरिष्याम्यहं मृतिं।
वासरा मे भविष्यन्ति भूयिष्ठाः सिकता इव॥
१९ विस्तीर्णमम्भसां पार्श्वे मम मूलं हि तिष्ठति।
मम पर्णशिखायाञ्च वर्त्तते रजनीजलं॥
२० नवतेजोविशिष्टोऽहम् अस्त्रानं मत्करे धनुः॥
२१ धृतश्वान्तो मम वाक्यानि प्रत्यैक्षन्त नरास्तदा।
मदीयां मन्त्रणां लोका अन्वगच्छंश्च नीरवाः॥
२२ मम वाक्यस्य पश्चात् ते किञ्चिन्नाकथयन् पुनः।
मामकीनोपदेशेन ते न्यसिच्यन्त भूमिवत्॥
२३ मां प्रत्यैक्षन्त ते सर्व्वे वर्षाकाङ्क्षिनरा इव।
व्यात्तमुखा अतिष्ठंश्च मेघतोयार्थिनो यथा॥
२४ तेषु विश्वासहीनेषु तानुद्दिश्याहमहसये।
न व्यकार्य्यत वा तैर्मे वदनस्य प्रफुल्लता॥
२५ तदाहं रोचयन् तेषां मार्गं मुख्य उपाविशं।
आसीनो निजवाहिन्या वेष्टितो भूपति र्यथा।
शोकसागरमग्नानां वा प्रबोधयिता यथा॥

---

# ३० त्रिंशोऽध्यायः।

१ आयूबस्य सम्मानस्य विनिमयेन निन्दाभोगकथनं १५ तस्य दुःखवर्णनं १५ तस्य खेदोक्तिश्च।

इदानीन्तु विश्वस्तोऽहं लोकै र्मत्तो जघन्यजैः। १
मम मेषव्रजानां हि रक्षकैः कुक्कुरैः सह।
वासात् तेषामहं तातान् अवज्ञाय न्यवारयं॥
तेषां हस्तबलादेव किं फलं मेऽजनिष्यत। २
यस्मात्तेषां गतं तेषां पलितं शिरसि स्थितं॥
शुष्का दैन्यक्षुधाभ्यां ते मरुभूमिं चरन्ति हि। ३
दीर्घकालात् समुच्छिन्नां नरशून्याञ्च सर्व्वशः॥
उत्कर्षन्ति च शाकानि स्तम्बानामेव पार्श्वतः। ४
रेतमाख्यस्य वृक्षस्य मूलं तेषाञ्च भोजनं॥
प्रजा निरस्य संसर्गाच्चौरान् संघोषयन्ति तान्॥ ५
दरी र्घोरा रजोगर्त्तान् शैलांश्चाप्याश्रयन्ति ते॥ ६
क्रोषन्ते झाटमध्ये ते गोक्षुराधो मिलन्ति च॥ ७
मूढानां ख्यातिहीनानां जनानां वंश एव ते। ८
कशाघातेन देशस्य मध्यतस्ते प्रवासिताः॥
अद्य तैरभवं गेयो तेषाञ्चाहं रसास्पदं॥ ९
माञ्चावगर्हमाणास्ते मत्तस्तिष्ठन्ति दूरतः। १०
अकार्पण्येन लालाञ्च निष्ठीवन्ति मदन्तिके॥
शिथिलीकृत्य मे रश्मिं मामक्लेशयदीश्वरः। ११
तस्मान्मुक्तखलीनास्ते सञ्जाता मम सम्मुखे॥
दक्षिणे सर्पवंशास्त उत्थायाघ्नन्ति मे पदौ। १२
मामुद्दिश्य विनाशस्य मार्गान् ते रोचयन्ति च॥
ते प्रभञ्जन्ति मे वर्त्म मम भ्रंशाय संहताः। १३
कोऽपि तेषां प्रतीकारम् अनुष्ठातुं न चेष्टते॥
पृथुना सेतुभङ्गेन ते समायान्ति सिन्धुवत्। १४
झञ्झानादं प्रकुर्व्वन्तो विश्रुवन्त्यूर्म्मिमालिनः॥
त्रासा मत्सम्मुखीभूताः श्रीश्च मे वायुचालिता। १५
मामकीनञ्च कल्याणम् अतीतं व्योमधूमवत्॥
साम्प्रतं शोकमग्नस्य हृदयं मे विलीयते। १६
मम दुर्गतिकालस्य वासराश्च धरन्ति मां॥
विद्धा मत्तो वियुज्यन्ते यामिन्या कीकसानि मे। १७
निद्राश्च न हि गच्छन्ति मद्दंष्टारः कदाचन॥

१८ अतिरिक्तबलेनैव वेशो मे परिवर्त्तितः।
चोलवक्त्रं यथा ग्रीवां स पीडयति मां तथा॥
१९ निक्षिप्तस्तेन पङ्के ऽहं धूलिभस्मसमो ऽभवं॥
२० त्वां प्रति रुदते मह्यं न ददासि त्वमुत्तरं।
तिष्ठन्तं तव साक्षान्मां वीक्षसे स्तब्धलोचनः॥
२१ त्वं स्वभावान्तरं गत्वा मयि निष्करुणो ऽभवः।
निजबाहुबलेनैव हिंसितुं माञ्च चेष्टसे॥
२२ गन्धवाहं समारोप्य मां वाहयसि वेगतः।
आलीनमवसन्नञ्च साध्वसेन करोषि मां॥
२३ अहं जानामि यत् त्वं मां मरणं गमयिष्यसि।
सकलैरेव जीवद्भिस्तद् गन्तव्यं सभागृहं॥
२४ अस्तु किं गृहभङ्गे न लोकै र्विस्तार्य्यते करः।
निजसम्पत्तिनाशे वा विलापं न करोति कः॥
२५ मया दुर्गतलोकेषु किं नाक्रियत रोदनं।
दरिद्रस्य निमित्तं किं नाशोचद्धृदयं मम॥
२६ प्रतीक्षे मङ्गलं तस्मात् किन्त्वनिष्टमुपस्थितं।
दीप्तेराकाङ्क्षयातिष्ठं किन्तु ध्वान्तमुपस्थितं॥
२७ प्रज्वलन्ति मदन्त्राणि शान्तिं न प्राप्नुवन्ति हि।
मम दुर्गतिकालस्य दिवसा मामुपागताः॥
२८ परिभ्राम्याम्यहं म्लानो न च सूर्य्यस्य तापतः।
समुत्थाय समाजे ऽपि कुर्व्वे ऽहं परिदेवनं॥
२९ क्रोष्टूनामभवं भ्राता सखाहञ्चोष्ट्रपक्षिणां॥
३० कृष्णीभूतश्च मे चर्म्म दह्यन्ते ऽस्थीनि तापतः।
३१ वीणा मे युज्यते शोके वंशी मे रुदतां स्वरैः॥

---

## ३१ एकत्रिंशोऽध्यायः।

१ आयूबस्य कर्म्मणां निर्दोषत्वं १३ दासान् प्रति तस्य निर्दोषत्वं १६ दरिद्रान् प्रति तस्य निर्दोषता २४ अन्येषु नानाकर्म्मसु निर्दोषत्वं ३५ ईश्वरोपविचारप्रार्थनञ्च।

१ साद्धं स्वकीयचक्षुर्भ्यां नियमं कृतवानहं।
कुतो हेतोरहं कुर्य्यां तरुणीं प्रति वीक्षणं॥

कोऽंशो दीयत ईशेन प्रांशुस्थाननिवासिना। २
कं प्रयच्छति वा दायम् ऊर्द्धस्थः सर्व्वशक्तिमान्॥
किं न दुष्टाय दुर्भाग्यं पापकृद्भ्यश्च निग्रहं॥ ३
मामकीनानि वर्त्मानि परिपश्यति किं न सः। ४
सर्व्वे मे पादविक्षेपा गण्यन्ते किं न तेन च॥
किमहं वितथाचारी लघुपादश्छलाय वा॥ ५
धर्म्ममापनदण्डेन तोलनं मे विधीयतां। ६
तदा मदीयसुद्धत्वम् ईश्वरो ऽवगमिष्यति॥
मदीयपादविक्षेपश्चेत् सन्मार्गाद् बहिर्गतः॥ ७
मदीयं हृदयं जातं नेत्रयोरनुगामि वा।
यदि मामककहस्ते वा कलङ्कस्य मलं लगेत्॥
तर्हि मयोप्यतां वीजं फलश्चान्येन भुज्यतां। ८
यावन्तश्च प्ररोहा मे तेषामुन्मूलनं भवेत्॥
कदाचिद् यदि मे चित्तं विलुब्धं परयोषिति। ९
समीपवासिनो द्वारे चेत् प्रतीक्षा कृता मया॥
तर्ह्यन्यस्य निमित्तं मे भार्य्या पिंष्याद्धि पेषिणों। १०
अपरै मानवैस्तस्याः सम्भोगश्च विधीयतां॥
यस्मात् तद् गुरु दुष्कर्म्म शास्यं तद् दण्डनायकैः॥ ११
यस्माद् तद् आश्रयध्वंसि संहारस्पर्शि दाहनं। १२
मामकीनञ्च सर्व्वस्वं तेनोदमूलयिष्यत॥
मम दासेन दास्या वा विसंवादे मया सह। १३
कृते यदि तयो धर्म्मः कदाचापकृतो मया॥
तर्हीश्वरो यदोत्थाता किं करिष्याम्यहं तदा। १४
कृते तेनानुसन्धाने वा दास्यामि किमुत्तरं॥
जरायौ येन सृष्टो ऽहं स्रष्टा दासस्य किं न सः। १५
एकस्मिन् गर्भकोषे किमावां निर्म्मितवान् न सः॥
दरिद्राणामभीष्टं चेत् प्रतिषिद्धं भवेन्मया। १६
लोचने विधवायाश्चेत् कृते निस्तेजसी मया॥
मदीयाहारभागश्चेद् भुक्त एकाकिना मया। १७
तातहीनेन बालेन चेत्तस्यांशो न भक्षितः॥
(मया यौवनमारभ्य तातेनेव स पालितः। १८

मातृगर्भाशयादेव रक्षिता विधवा मया ॥)
१९ नष्टकल्पे मनुष्ये च हीनवस्त्रे निरीक्षिते ।
अप्राप्ताच्छादने दृष्टे वा दरिद्रे जने मया ॥
२० तदीयकटिदेशस्य नाशीर्वाद् वर्त्तिता मयि ।
स चेन्मे मेषवत्सानां लोम्ना नोष्णीकृतो भवेत् ।
२१ मया धर्म्मसभायां वा स्वपक्षान् वीक्ष्य मानवान् ।
अनाथस्य विपक्षं चेत् कदाप्युत्तोलितः करः ॥
२२ तर्हि पतेत् मम स्कन्धो वियुक्तो बाहुमूलतः ।
प्रगण्डस्यास्थि चारभ्य मे भुजो ऽपि प्रभज्यतां ॥
२३ यतस्तर्हीश्वरस्यैव भेतव्यं निग्रहान्मया ।
तस्य राजप्रतापस्तु मया सोढुं न शक्यते ॥
२४ यदि विश्वासभूमिं मे जातरूपं मया कृतं ।
त्वं मदीयाश्रयो ऽसीति हेम्ने चेत् कथितं मया ।
२५ निजैश्वर्य्यमहत्त्वाद् वा यदि हर्षमहं गतः ।
हस्तस्थितधनेभ्यो वा चेन्मे जाता प्रफुल्लता ॥
२६ भानौ दृष्टे मया दीप्ते किंवा शुभ्रगतौ विधौ ।
२७ भ्रान्ते मे हृदि चेद् गुप्तं पाणिरास्येन चुम्बितः ॥
२८ तर्हि मे सोऽपराधोऽपि दण्ड्यो धर्म्माधिकारिभिः ।
उपरिस्थितमीशस्य प्रति विश्वासघात्यहं ॥
२९ द्वेषिणो वा विनाशं किम् अभिनन्दितवानहं ।
तस्मिंश्चामङ्गलापन्ने जाता किं मे प्रफुल्लता ॥
३० नानुज्ञातं मया तच्च मद्वक्त्रस्यापि पातकं ।
द्वेषिणः प्राणनाशाय शापेन प्रार्थनस्य वा ॥
३१ अतृप्तं तस्य मांसेन मानवं को निदर्शयेत् ।
मद्गृहस्यान्तरङ्गैः किं वच एतन्न भाषितं ॥
३२ विदेशी मानवो मार्गे नाकरोद् रात्रियापनं ।
पथिकानां कृते यस्मान्मया द्वारममुच्यत ॥
३३ आदमवत् स्वदोषो वा किं समाच्छादितो मया ।
मामकीनापराधस्य गोपितो निजवक्षसि ॥
३४ सत्यमुद्विग्नता जाता महामानुष्यकान्मम ।
भयोत्साहीकृतश्चाहं गोत्राणामपमानतः ।

मौनीभूय न गच्छामि सभास्थानमहं पुनः ॥
हाहा किं मम वाक्यानां श्रोता कोऽपि न विद्यते। ३५
इदं पश्यत मे पत्रं मया हस्ताक्षरीकृतं ॥ ३६
एतस्यैवोत्तरं मह्यं प्रयच्छेत् सर्व्वशक्तिमान्।
रचयेत् प्रतिवादी मे स्वकीयामपि पत्रिकां ॥
स्कन्धेनैव तदाहं तां धारयिष्यामि वस्त्रवत्। ३७
मामकीनोत्तमाङ्गे वा तां भंत्स्यामि किरीटवत् ॥
मत्पादन्याससङ्ख्याश्च स मया ज्ञापयिष्यते। ३८
उपस्थास्यामि तस्याहं तदानीन्तु नरेन्द्रवत् ॥
मद्विरुद्धं मम क्षेत्रम् आर्त्तनादं करोति चेत्। ३९
तस्य सीतासमूहश्च यदि क्रन्दति योगतः।
अदत्त्वा रजतं वा चेत् तत्फलं भक्षितं मया। ४०
चेद्वा वियोजिताः प्राणा मया तदधिकारिणः ॥
तर्हि गोधूमभूमि मे कण्टकानां वनं भवेत्। ४१
विषवृक्षाः प्ररोहन्तु यवानाञ्च स्थले तथा ॥
इत्यायूबस्य वाक्यानि समाप्तानि ॥

---

# ३२ द्वात्रिंशोऽध्यायः।

१ इलीहूसंबधि कथनं ६ तस्य प्रस्तावस्यारम्भः ११ आयूबं तस्य बन्धूंश्च प्रति इलीहोस्तिरस्कारः।

अनन्तरं ते त्रयो मानवा आयूबस्य वाक्यं प्रतिवक्तुं तत्यजुः, एतो हेतो १
र्निजदृष्टौ स पुण्यवान्। तस्माद् अरामवंशीयो बूषीयवारखेलस्य सुत २
इलीहूः क्रोधेन प्रजज्वाल। आयूब ईश्वरस्य गोचरे स्वं पुण्यवन्तम्
अज्ञासीत् तस्मात् तं प्रति क्रोधेन प्रजज्वाल। आयूबस्य त्रयो बन्धवस्तस्य ३
वचनस्योत्तरं दातुं न पारयन्तस्तं दोषिणमकुर्व्वन् अतः कारणात् तान्
प्रति क्रोधेन प्रजज्वाल। इलीहोर्वयसस्तेषां सर्व्वेषां वयांस्यधिकान्यासन् ४
तत्कारणात् स आयूबस्य वाक्यानां समाप्तिं यावत् प्रतीक्षाञ्चक्रे। किन्तु ५
तेषां त्रयाणां वदनानि निरुत्तराणि दृष्ट्वा स महाक्रुद्धो बभूव।

अतः स बूषीयवारखेलस्य पुत्र इलीहूरित्थं प्रतिजगाद। ६
अहमल्पवयस्को ऽस्मि यूयं सर्व्वे वयोऽधिकाः।

तस्माद् विलम्ब्य भीत्वा च युष्मान् मे नावदं मतिं ॥
७ मयोक्तं वासरा ब्रूयु र्वर्षश्रेणी धियं दिशेत् ॥
८ तथाप्यात्मैव मर्त्त्यानाम् अन्तरं ह्यधितिष्ठति।
सर्व्वशक्तिमतः श्वासो ज्ञानिनश्च करोति तान् ॥
९ न सर्व्वे प्रमुखा विज्ञा वृद्धा वा सुविचारकाः ॥
१० अतो हेतोरहं वच्मि मे वाक्यं श्रूयतां त्वया।
तर्हि निजानुमानं यत् तन्मयापि गदिष्यते ॥
११ पश्यताहं व उक्तीनां समाप्तिं प्रत्यपालयं।
आकर्णयन् विचारान् वः शब्दान्वेषणकारिणां ॥
१२ आयूवस्य वचःखण्डी तत्प्रत्युत्तरदायकः।
कोऽपि नास्तीति सन्दृष्टं मया युष्मान् विलोक्य वै ॥
१३ युष्माभि र्नोच्यतामेतत् ज्ञानप्राप्ता नरा वयं।
ईश्वरस्तं निराकर्त्तुं शक्नुयान्न च मानवः ॥
१४ तेन मत्प्रतिकूलं न रचिता वाक्यवाहिनी।
नाहं युष्मद्वचोभि र्वा प्रतिवक्ष्यामि तं किल।
१५ विस्मिता अभवन्नेते न ददत्युत्तरं पुनः।
वचनान्यपि सर्व्वाणि तान् त्यक्त्वापगतानि हि।
१६ अधिकं किं प्रतीक्षिष्ये सञ्जाता नीरवा अमी।
मौनीभूताश्च तिष्ठन्ति न ददत्युत्तरं पुनः ॥
१७ अतो ऽहमपि दास्यामि स्वपर्य्यायत उत्तरं।
मामकीनानुमानं यत् तन्मयापि गदिष्यते ॥
१८ यस्मात् पूर्णस्य वाक्यै र्मे पीड्यते ऽन्तरमात्मना ॥
१९ रुद्धवक्त्रसुरायाः हि तुल्यं पश्य ममान्तरं।
कुतूनां भिद्यमानानां वा नवमद्यतेजसा ॥
२० भाषिष्ये ऽहं ततः शान्ति र्मम नूनं जनिष्यते।
मोचयित्वाधरौ वाक्यं मया चोदीरयिष्यते ॥
२१ पक्षपातं मनुष्यस्य न करिष्यामि कस्यचित्।
स्तुतिवादश्च मर्त्त्यस्य नानुष्ठास्यामि कर्हिचित्।
२२ स्तुतिवादमनुष्ठातुं यतो हेतो र्न वेद्म्यहं।
अनुष्ठिते च मे स्रष्टा सद्यो मां नाशयिष्यति ॥

# ३३ त्रयस्त्रिंशोऽध्यायः।

१ ईश्वरस्य प्रतिनिधीभूय इलीहूना तेषां दोषप्रकाशनं १८ शास्तेरभिप्रायप्रकाशनं २८ आयूबं प्रति मन्त्रणा च।

हे आयूब त्वयेदानीं श्रूयतां वचनं मम। १
मामकीनानि वाक्यानि चानुश्रोतुं त्वमर्हसि॥
पश्य मे वदनं मुक्तं वक्त्रे जिह्वा प्रभाषते॥ २
मम चित्तस्य सारल्याद् उत्पद्यन्ते वचांसि मे। ३
यच्च ज्ञातमाधराभ्यां मे शुद्धं ताभ्यां तदुच्यते॥
ईश्वरस्य य आत्मास्ति तेनैवाहं विनिर्म्मितः। ४
सर्व्वशक्तिमतः श्वासः सजीवञ्च करोति मां॥
त्वया चेच्छक्यते तर्हि दीयतां मह्यमुत्तरं। ५
सुसज्जीभूय मत्साक्षात् त्वं प्रत्युत्तिष्ठ वीरवत्॥
पश्य वाक्यानुसारात् त ईशस्य प्रतिभूरहं। ६
तच्छितो मृत्तिकाखण्डश्चाहमपि भवामि हि॥
पश्य भयानकत्वं मे त्वां न सन्त्रासयिष्यति। ७
मामकीनगुरुत्वञ्च भारस्ते न भविष्यति॥
त्वयोक्तं मम कर्णे ऽहं गिरमेतां न्यशामयं॥ ८
शुचिर्निरपराधो ऽहं निर्म्मलो दोषवर्जितः॥ ९
पश्य मद्वैपरीत्येन छिद्रान् मृगयते स मे। १०
स्वकीयद्वेषिणश्चैव स हि मामभिमन्यते॥
यन्त्रे मे चरणौ बद्धा सर्व्वां रक्षति मे गतिं॥ ११
पश्यैतेन सदोषस्त्वं दातव्यञ्च मयोत्तरं। १२
यतो हेतो नरादीशो माहात्म्येनातिरिच्यते॥
तेन सार्द्धं विवादं त्वं किमर्थमनुतिष्ठसि। १३
सर्व्वेषां स्वीयवाक्यानां नोच्यन्ते तेन हेतवः।
यस्माद् ईशेन वक्तव्यम् एककृत्वो निगद्यते। १४
न चानुष्ठीयते तस्य द्वितीयं वारमीक्षणं॥
स्वप्ने वा दर्शने नैशे निद्रा घोरतरा यदा। १५
पतेन्मर्त्त्येषु शय्यायां सुषुप्तिं गतवत्सु हि॥
तदा तेन मनुष्याणां निर्मलीक्रियते श्रुतिः। १६

तेषां हितोपदेशस्य मुद्राङ्कश्च विधीयते ॥
१७ स हि दुष्कर्म्मतो मर्त्यं निवर्त्तयितुमिच्छति।
मानवाच्च तिरस्कर्त्तुम् अहङ्कारं विचेष्टते ॥
१८ तस्यात्मानं विनाशाच्च रक्षितुं सोऽभिवाञ्छति।
शूलस्याग्रेण विद्धत्वात् तत्प्राणान् त्रायते च सः ॥
१९ स्वशय्यायां यदा मर्त्त्यो दण्ड्यते वेदनातुरः।
तदीयास्थिषु सङ्ग्रामो जायते च निरन्तरः ॥
२० भोजनं गर्ह्यते प्राणैरिष्टमन्नञ्च देहिना ॥
२१ क्षीयमाणञ्च तन्मांसम् अदृश्यत्वं प्रगच्छति।
अदृश्यानि पुरास्थीनि विवृतानि भवन्ति च ॥
२२ प्राणा गर्त्तमुपायान्ति प्रेतलोकञ्च चेतना ॥
२३ तदा चेद् विद्यते दूतो मध्यस्थस्तस्य रक्षकः।
सहस्रस्याग्रिमो मर्त्यं धर्म्मं ज्ञापयितुं क्षमः ॥
२४ तर्ह्यीशेन प्रसन्नेन वाक्यमेतद् गदिष्यते।
मुञ्चेमं पतनाद् गर्त्ते प्रायश्चित्तं मयार्जितं ॥
२५ ततः शोभिष्यते तस्य पललं शैशवादपि।
स च यौवनकालस्य तेजः पुनः समाप्स्यति ॥
२६ ईश्वरञ्च समुद्दिश्य प्रार्थनां स करिष्यति।
तेनानुगृह्य सानन्दो निजास्यं दर्शयिष्यते।
स्वपुण्यञ्च मनुष्याय तेन दायिष्यते पुनः ॥
२७ मानवांश्च समुद्दिश्य तदा गायन् स वक्ष्यति।
अपराधमकुर्व्वेऽहं सरलञ्च व्यकारयं।
तस्य तुल्यप्रमाणञ्च नाहमन्वभुजं फलं ॥
२८ यतो ऽधोगमनाद् गर्त्ते प्राणान् स मुक्तवान् मम।
मामकीनश्च जीवात्मा भुंक्त आलोकदर्शनं ॥
२९ पश्यैतानि करोतीशो द्विस्त्रिर्वा मानवं प्रति।
३० परावर्त्तयितुं तस्य प्राणान् गर्त्तावरोहणात् ॥
जीवतां तञ्च दीपेन दीपयितुं स चेष्टते ॥
३१ हे आयूब मनोयोगं विधाय शृणु मे वचः।
मौनीभव मया तर्हि वक्तव्यं निगदिष्यते ॥
३२ उत्तरं यदि जानासि तर्हि देहि म उत्तरं।

प्रभाषस्व यता मह्यं तव पुण्यं हि रोचते ॥
उत्तरं चेन्न जानासि तर्ह्याकर्णय मे वचः। १९
मौनीभव तदाहं त्वां शिक्षयिष्यामि विज्ञतां ॥

---

## ३४ चतुस्त्रिंशोऽध्यायः।

१ इलीहूना परमेश्वरस्य निर्दोषत्वकरणं आयूवस्य दोषित्वकरणं १० पापिनो अनान् प्रतीश्वरीयो दण्डः १९ तस्य तात्पर्य्यं ३१ आयूवं प्रति मन्त्रणा च।

अनन्तरम् इलीहूरपरं वक्तुमारेभे। १
हे विद्वांसो मदीयानि वाक्यानि श्रोतुमर्हथ। २
हे विज्ञा उपदेशो मे युष्माभिश्च निशम्यतां ॥
यतः कर्णेन वाक्यानां क्रियते हि परीक्षणं। ३
भक्ष्यस्यास्वादनं यद्वत् तालुनैव विधीयते ॥
ततो हेतो र्विचाराय प्रवर्त्तेमहि साम्प्रतं। ४
यच्च भद्रं तदस्माभिः सम्यङ्निश्चीयतां मिथः ॥
आयूव उक्तवान् एतत् अहमेवास्मि पुण्यवान्। ५
मामकीनश्च यो धर्म्मः स ईशेनापसारितः ॥
भवितव्यं मया तस्मात् स्वधर्म्मे ऽनृतवादिना। ६
दुष्टवाणेन विद्धो ऽहम् अपराधेन वर्जितः ॥
आयूवस्य समानः को दुर्वाक्यं जलवत् पिवन् ॥ ७
दुष्क्रियाकारिभिः सार्द्धं सखित्वञ्च समाचरन्। ८
धर्म्महीनमनुष्यैश्च सहगामित्वमाश्रयन् ॥
ईश्वरस्यानुरागेण किं नरस्य भवेत् फलं। ९
आयूवेन किमेतादृग् वाक्यं नोदीरितं पुरा ॥
तस्मात् हे ज्ञानिनो यूयं श्रोतुमर्हथ मे वचः। १०
ईशस्य दुष्कृति र्नास्ति नाधर्म्मी सर्व्वशक्तिमान् ॥
यस्मात् तेन मनुष्याय कर्म्मणो दीयते फलं। ११
नरस्य यादृगाचारो दीयते तादृशी गतिः ॥
सत्यमेव वदाम्येतत् नैवास्तीशस्य दुष्कृतिः। १२
न करोति च धर्म्मस्य विकारं सर्व्वशक्तिमान् ॥

१३ क्षौणिः केनार्पिता तस्मिन् कृत्स्नं कोऽस्थापयज्जगत् ॥
१४ तेन चेन्निजसन्तोषे प्रगल्भैकाग्रचित्ततां ।
निजात्मा प्राणवायुश्च स्वं प्रत्याकृष्यते पुनः ॥
१५ म्रियन्ते युगपत् तर्हि सकला एव जन्मिनः ।
पुनर्व्वारं मनुष्यश्च धूलौ लीनः प्रजायते ॥
१६ तुभ्यं चेद् रोचते बुद्धिस्तर्ह्येतत् श्रूयतां त्वया ।
मामकीनोपदेशस्य निनादे चावधीयतां ॥
१७ धर्म्मं यो द्वेष्टि तेनैव शासनं किं प्रयुज्यते ।
त्वया दूषयितव्यः किं धार्म्मिको वा पराक्रमी ॥
१८ नारकिन्निति वाक्यं किं राजानं कोऽपि भाषते ।
यूयं दुष्टा इदं वा कः प्रमुखान् वक्ति मानवान् ॥
१९ ईश्वरस्तु नरेन्द्राणां पक्षपातं करोति न ।
धनिनश्च दरिद्रेभ्यो नाधिकं सोऽभिवीक्षते ।
यस्मात् तस्यैव हस्ताभ्यां सकलास्ते विनिर्म्मिताः ॥
२० ते क्षणेन मरिष्यन्ति रात्रिमध्य उपस्थिते ।
चालिताश्च गमिष्यन्ति विनाशं सकलाः प्रजाः ।
करादन्येन दण्डेन बली दूरीकरिष्यते ॥
२१ यस्मान्नरस्य मार्गेषु दृष्टिरीशस्य वर्त्तते ।
तदीयपादविक्षेपान् सर्व्वानेव स पश्यति ।
२२ दुष्क्रियाकारिणो यत्र प्रच्छन्ना भवितुं क्षमाः ।
तादृशं तिमिरं किं वा मृत्युच्छाया न विद्यते ॥
२३ विचारार्थञ्च येनैव गन्तव्यमीश्वरान्तिकं ।
न करोति चिरं चिन्तां तं मनुष्यमधीश्वरः ॥
२४ अकृत्वा चानुसन्धानं पराक्रान्तान् भनक्ति सः ।
स तेषां परिवर्त्ते च स्थापयत्यपरान् जनान् ॥
२५ यतो हेतोः क्रियास्तेषां तस्यैव ज्ञानगोचराः ।
तस्मात् स क्षणदायां तान् समुत्पाट्य क्षुणत्ति हि ॥
२६ दुर्व्वृत्तानिव तान् सर्व्वै दृश्ये स्थाने निहन्ति च ॥
२७ यस्मात् तस्यानुगामित्वात् ते सञ्जाताः पराङ्मुखाः ।
सकलान् तस्य मार्गांश्च प्रति भूत्वाविवेचकाः ॥
२८ आर्त्तनादं दरिद्राणां तस्य प्रत्यक्षमानयन् ।

दुर्गतानाञ्च चीत्कारं तस्यैव श्रोत्रगोचरं ॥
शान्तौ तेन प्रदत्तायाम् उपरोधं करोति कः। १९
समाच्छादितवक्त्रं वा कस्तं शक्नोति वीक्षितुं।
देशं प्रति नरैकं वा तेन तत् क्रियते हठात् ॥
नो चेत् प्राप्स्यति राजत्वं मानवो धर्म्मवर्ज्जितः। २०
प्रजोन्माथस्वरूपाश्च भविष्यन्ति प्रजेश्वराः ॥
तस्माद् ईश्वरमुद्दिश्य मर्त्त्यो ब्रूयाद् इदं वचः। २१
शास्ति र्लब्धा मया पापं पुन र्नहि करिष्यते ॥
यन्मे दृष्टे र्वहिर्भूतं मां शिक्षय त्वमेव तत्। २२
यद्यहं कृतवान् दोषं करिष्यामि पुन र्नहि ॥
फलं किं तेन दातव्यं त्वदीयेच्छानुसारतः। २३
असन्तुष्टो ऽसि न तुष्टि र्मे तव तुष्टि र्गरीयसी।
भद्रं यदभिजानासि तत् प्रभाषितुमर्हसि ॥
मम पक्षे वदिष्यन्ति मानवाः सुविवेचकाः। २४
यो मनुष्यश्च मेधावी स ग्रहीष्यति मे वचः ॥
न ज्ञानाद् ब्रूत आयूबो न सुयुक्तास्तदुक्तयः ॥ २५
अहं वाञ्छामि साद्यन्तम् आयूबस्य परीक्षणं। २६
यस्माद् दुर्वृत्तलोकानां पक्षे स प्रत्यभाषत ॥
नो चेत् स धर्म्मलोपेन स्वपापं वर्द्धयिष्यति। २७
अस्मन्मध्ये ऽपि दर्पेण दास्यते करतालिकां।
ईश्वरस्य विरुद्धञ्च बहुवाक्यानि वक्ष्यति ॥

---

## ३५ पञ्चत्रिंशो ऽध्यायः।

१ परमेश्वरस्य महिम्नः कथनं ५ मानुषस्य धर्म्मेणेश्वरस्य लाभाभावो गर्व्विखेदिमनुष्याणां पापमार्ज्जनानधिकारित्वञ्च।

अनन्तरम् इलीहूः पुनरुवाच। १
ईश्वरस्यापि धर्म्माद्धि मम धर्म्मो ऽतिरिच्यते। २
त्वया किं प्रकृतं बुद्ध्वा वाक्यमेतदुदीर्य्यते ॥
किं लभ्यं तव धर्म्मेण तज्जिज्ञासुश्च पृच्छसि। ३
पापस्याचरणात् तेन किं फलं भविता मम ॥

४ तुभ्यं ते बान्धवेभ्यश्च प्रदास्याम्युत्तमुत्तरं॥
५ नभ उद्दिश्य वीक्षस्व पश्य खं त्वत्त उन्नतं।
६ त्वया चेत् क्रियते पापं का क्षतिस्तस्य जायते।
बहुभिस्ते ऽपराधैश्च का हानिस्तस्य जायते॥
७ धार्म्मिकेण त्वया वापि तस्मै किं वितरिष्यते।
स त्वदीयकराभ्यां कं वोपहारं ग्रहीष्यति॥
८ त्वत्तुल्याय मनुष्याय फलदा तव दुष्टता।
मानवस्य सुतायापि फलदा तव पुण्यता॥
९ दौरात्म्यस्य बहुत्वेन लोकाः कुर्व्वन्ति रोदनं।
महतां बाहुभाराच्च कुर्व्वते परिदेवनं॥
१० किन्तु कोऽपि न वक्तीदं कुत्र स्रष्टा म ईश्वरः।
यामिन्या अपि मध्ये यः सद्गीतानि प्रयच्छति॥
११ भूचरेभ्यः खगेभ्यश्च ज्ञानिनो ऽस्मान् करोति च॥
१२ न शृणोति स क्रन्दत्सु तेषु दर्पेण पापिनां॥
१३ यस्माद् व्यलीकतामीशो न कदाच ग्रहीष्यति।
सर्व्वशक्तिमता तत्र दृष्टिर्न न करिष्यते॥
१४ मया द्रष्टुं न शक्यः स इति त्वं भाषसे कुतः।
विवादस्तस्य प्रत्यक्षः कुरु तस्य प्रतीक्षणं॥
१५ अधुनापि फलं तेन सकोपेन न दीयते।
तस्मादेव महापापं तेन किं नावगम्यते॥
१६ आयूवस्य तु वक्त्रेण वाष्पीयं वच ईर्य्यते।
ज्ञानहीनतया शब्दान् बहून् राशीकरोति सः॥

---

## ३६ षट्त्रिंशोऽध्यायः।

१ ईश्वरस्य सर्व्वकर्म्मसु तस्य सत्यत्वम् आयूवस्य कर्म्मसु दोषकथनं २४ ईश्वरीयं सर्व्वकर्म्म विवेच्यं।

१ अनन्तरम् इलीहूः पुनरुवाच।
२ प्रतीक्षस्व क्षणैकं मां त्वां शिक्षयितुमिच्छुकं।
अधुनापीश्वरार्थं मे प्रतिवादो ऽवशिष्यते॥
३ ज्ञानं दूरान्मयानीय स्रष्टा शोधयिष्यते॥

नूनं मदीयवाक्यानि ह्यलीकानि न सन्ति हि। ४
पूर्णज्ञानो मनुष्यो ऽत्र त्वया साईञ्च विद्यते॥
ईशः पश्य पराक्रान्तो न च निन्दति कञ्चन। ५
प्राज्ञतायाः प्रभावेन स चातीव महाबलः॥
न जीवयति दुष्टं स स शोधयति दुःखिनः। ६
धार्म्मिकाच्च मनुष्यात् स स्वनेत्रे नापकर्षति। ७
नृपैः सिंहासनस्थैश्च सङ्गिनी तस्य लोचने।
उपवेश्य चिरार्थं तान् स करोति समुन्नतान्॥
यदा शृङ्खलबद्धान् तान् धृतांश्च क्लेशरज्जुभिः। ८
स बोधयति दुष्कर्म्म तेषां दोषांश्च गर्व्विणां। ९
उपदेशाय तेषाञ्च मोचयित्वा ध्वनिग्रहं। १०
दुराचारान्निवर्त्तध्वमिति तान् अभिभाषते॥
तदा वाक्यं गृहीत्वा तैः स्वीकृते तस्य सेवने। ११
सुस्थित्या यापयिष्यन्ते यावज्जीवं दिनानि हि।
वत्सरान् विहरिष्यन्ति सुखभोगेन ते तथा॥
अाज्ञायाञ्चागृहीतायां प्रपतिष्यन्ति ते ऽसिना। १२
परलोकञ्च यास्यन्ति ज्ञानहीनत्वकारणात्॥
धर्म्मवर्ज्जितचित्तैस्तु लोकैः कोपः प्रचीयते। १३
ईश्वरेण निबद्धास्ते हाहाकारं न कुर्व्वते॥
तेषां प्राणवियोगो ऽपि यौवने सम्भविष्यति। १४
भ्रष्टैरिव मनुष्यैस्तै र्जीवोत्सर्गः करिष्यते॥
ईश्वरो दुर्दशाकाल उद्धरिष्यति दुर्गतं। १५
स दौरात्म्यस्य मध्ये ऽपि तच्छ्रोत्रं मोचयिष्यति॥
विस्तीर्णं सङ्कटात् तेन स्थानं त्वय्यपि तारिते। १६
न भविष्यति सङ्कीर्णो मार्गस्ते पादयोरधः।
तव भोजनमञ्चो ऽपि मेदोभारेण नंस्यति॥
किन्तु त्वं यदि दुष्टस्य विचारेणैव तृप्यसि। १७
विचारात् तर्हि दण्डाज्ञा न वियोज्या भविष्यति॥
तस्मात् त्वां तस्य रुष्टस्य प्रहारो मावतारयेत्। १८
प्रायश्चित्तस्य बाहुल्यम् अत्र त्वाञ्च न वञ्चयेत्॥
स किं ते मंस्यते वित्तं स सुवर्णं न मन्यते। १९

ऐश्वर्य्यस्यापरं कश्चिद् उपायं बलवर्द्धकं॥
२० रात्रिं मा काङ्क्ष लोकानां स्थानभ्रष्टत्वकारिणीं।
२१ सावधानो भवाधर्म्मं प्रति मा वर्त्ततां मनः।
यस्मात् स रोचते तुभ्यम् अधिकं दुःखभोगतः॥
२२ ईशः पश्य बलेनोच्चः शासने तस्य कः समः॥
२३ कस्तस्याचरणं तस्य साक्षाद् आविष्करिष्यति।
कृतो ऽन्यायस्त्वया वाक्यमिदं कस्तं गदिष्यति॥
२४ स्मर तस्य क्रियोच्चास्ति कीर्त्तिता मानवैश्च सा॥
२५ सर्व्वे पश्यन्ति तां मर्त्या दूरात् तां वीक्षते नरः॥
२६ पश्येशस्योच्छ्रयः कीदृक् सो ऽस्माभि र्नावगम्यते।
तस्य वत्सरसङ्ख्यापि विनिश्चेतुं न शक्यते॥
२७ आकृष्यन्ते यदा तेन तोयानां सूक्ष्मविन्दवः।
ते क्षरन्ति तदा वर्षं बाष्पवत् तेन निर्म्मितं॥
२८ उत्सृजन्ति हि मेघास्तं सिञ्चन्तो मानवान् बहून्॥
२९ नीलाभ्राणां वितानं किं बोद्धुं केनापि शक्यते।
आवासस्य तदीयस्य गर्ज्जनं को ऽवगच्छति॥
३० पश्य तस्योपरि स्वीया दीप्तिस्तेन विकीर्य्यते।
पारावारस्य मूलैश्च स समाच्छाद्यते पुनः॥
३१ यस्माद् एतेन लोकानां विचारं विदधाति सः।
भक्ष्यद्रव्याणि वा तेभ्यो बाहुल्येन प्रयच्छति॥
३२ विद्युताच्छाद्य हस्तौ स रिपवे प्रहिणोति तां॥
३३ तमाख्याति ध्वनिस्तस्य तमायान्तञ्च गोव्रजः॥

---

## ३७ सप्तत्रिंशोऽध्यायः।

१ झञ्झावर्णनं ६ हिमवर्णनं ९ दक्षिणवायुवर्णनं ११ विद्युद्वर्णनं १४ मेघादिवर्णनञ्च।

१ एतच्छब्देन मे चित्तं कम्पित्वोत्पतति स्थलात्।
२ युष्माभिः श्रूयतां तस्य रवस्येदश्च गर्ज्जनं।
श्रूयतां सिंहनादश्च निर्गतस्तस्य वक्त्रतः॥
३ गगनाधः स्थितं सर्व्वं स्थानं स प्रहिणोति तं।
पृथिव्यन्तानि यावच्च निजां प्रेषयति द्युतिं॥

नादो नर्द्दति तत्पश्चाद् गर्ज्जतो जयनादिनः॥ ४
प्रतिनादितनादेन तेन को न धरिष्यते॥
तेन स्वकीयनादेन स्वाश्चर्य्यं गर्ज्जतीश्वरः। ५
स महाकर्म्मकृत् तच्च किं ज्ञातुं शक्नुमो वयं॥
भूमौ पतेति तेनैव हिमानों प्रति गद्यते। ६
शीकरश्चातिवृष्टिश्च प्रति तच्छक्तिसूचकां॥
सर्व्वलोकस्य हस्तञ्च मुद्रितं स करोति हि। ७
तस्माज्ज्ञानन्तु तं सर्व्वे मानवास्तेन निर्म्मिताः॥
पशवो ऽप्याश्रयं प्राप्य तिष्ठन्ति स्वगुहागृहे॥ ८
झञ्झागच्छत्यवाचीत उदीच्याः शीतमेति च। ९
ईश्वरस्यैव निःश्वासाज्जायते हिमसंहतिः। १०
सलिलानाञ्च विस्तारो याति सङ्कीर्णतां तदा॥
ईशेनोदकभारोऽपि वारिवाहे समर्प्यते। ११
तस्य तडित्त्वतां माला पुनस्तेन विकीर्य्यते॥
रथवत् सा च तस्यैव चालनात् परिवर्त्तते। १२
तस्मात् तैरपि कर्त्तव्यं यद्यत् तस्य निदेशतः।
तत् सर्व्वं कर्म्म मेदिन्या मण्डले परिसाध्यते॥
दण्डार्थं वा स्वदेशार्थं वा हितार्थं निरूपितं॥ १३
आयूब त्वमिदं शृण्वन् मनसा भव सुस्थिरः। १४
ईश्वरस्य च कर्म्माणि स्वाश्चर्य्याणि विचिन्तय॥
मेघान् प्रतीश्वरस्याज्ञा बोद्धुं किं शक्यते त्वया। १५
किं तदीयपयोदस्य कृतं वा तेन दीपनं॥
नीलाभ्राणां वितानं वा किं बोद्धुं शक्यते त्वया। १६
सिद्धज्ञानविशिष्टस्य कर्म्माण्यद्भुतानि वा॥
क्षित्यां सन्नीकृतायाञ्च तेन दक्षिणवायुतः। १७
कथमुष्णानि जायन्ते त्वदीयवसनानि वा॥
सिक्तधातुमयादर्श इव सम्यक् सुसंहतं। १८
अन्तरीक्षं त्वया वा किं तेन सार्द्धं परिस्तृतं॥
वयं तं किं वदिष्यामस्तदस्मान् वक्तुमर्हसि। १९
असमर्थास्तमिस्राद्धि तन्निरूपयितुं वयं॥
अहं किञ्चित् प्रभाषिष्य इति किं को ऽपि तं वदेत्॥ २०

अहं नश्यामि मर्त्यः किम् एतत् तस्मै निवेदयेत्॥
२१. अदृश्या साम्प्रतं दीप्तिः स मेघान् दीपयिष्यति।
तदा वायुः समागत्य तान् सर्व्वान् लोपयिष्यति॥
२२ उत्तरस्या दिशः स्वर्णम् उत्पन्नमुपतिष्ठति।
तेजसा च भयार्हेण समाच्छाद्यत ईश्वरः॥
२३ सर्व्वशक्तिविशिष्टः स नास्माभिस्तोपलभ्यते।
प्रोच्चशक्तिविचारः स महाधर्म्मा न पीडकः॥
२४ अतो हेतो मनुष्याणां भीतिस्तस्मात् प्रजायते।
प्राज्ञचित्तस्य कस्यापि मुखं नो स व्यपेक्षते॥

---

## ३८ अष्टत्रिंशोऽध्यायः।

१ झञ्झावाताद्दायूबं प्रतिश्रुय परमेश्वरेण स्वकर्म्मणां महिम्नायूबस्य दुर्बलत्वप्रकाशनं ११ आलोककथनं १६ समुद्रकथनं १८ वरुणकथनं २२ हिमकथनं २४ विद्युत्कथनं २८ दृष्ट्यादिकथनं ३१ गगनस्य मेघानाञ्च कथनं।

१ अनन्तरं परमेश्वरो झञ्झावातमध्याद् आयूबं प्रत्युवाच।
२ उक्तिभिः र्ज्ञानहीनाभिः मन्त्रमन्धीकरोति कः॥
३ इदानीं कटिदेशस्ते बध्यतां वीरवत् त्वया।
परिप्रक्ष्यामि यच्चाहं देहि मह्यं तदुत्तरं॥
४ स्थाप्यमाने मया क्षित्या मूले त्वं क्वाभवः पुरा।
यदि बुद्धिविशिष्टो ऽसि तर्हि मां ब्रूहि तद् वचः॥
५ तस्या मानञ्च निर्णीय केन तुभ्यं निवेदितं।
परिमापकसूत्रं कस्तस्याः पृष्ठे ततान वा॥
६ तस्याः सर्व्वे पदाधारा बद्धमूलाः क्व सन्ति वा।
तस्याः कोणस्थपाषाणं को वा निक्षिप्तवान् पुरा॥
७ प्रभातीयास्तदा तारा अन्वतिष्ठन् महोत्सवं।
ईशस्यापि सुताः सर्व्वे हर्षनादमकुर्व्वत॥
८ कः कपाटद्वयेनेव सिन्धुनाथं निरुद्धवान्।
प्रपतन् निरगच्छत् स तदानीं निजयोनितः॥
९ वस्त्रार्थञ्च मया तस्मै मेघजालमदीयत।
गात्रसंवेष्टनार्थञ्च रात्रिवासो व्यतीर्य्यत॥

पर्य्यच्छिद्यत सीमा च तदर्थं कल्पिता मया। १०
अर्गलश्च कपाटे च मया संस्थाप्य तत्कृते॥
उक्तं स्थानमिदं प्राप्य त्वया नातिक्रमिष्यते। ११
अत्र स्थाने तवोर्म्मीणां दर्पः संवारयिष्यते॥
यावज्जीवं त्वया वा किं प्रत्यूषस्य विधिः कृतः। १२
अरुणास्य निजं स्थानं किं समाज्ञापितस्त्वया॥
तस्मात् सर्व्वसृष्टायाः किं कोणान् सन्धार्य्य तौ करैः। १३
विधून्वन्तौ दुराचारान् तस्या मध्यान्निरस्यतः॥
सा मुद्राङ्कितलाक्षावद् यात्याकारान्तरं तदा। १४
तौ परिच्छदवत् शुभ्रौ तदानीञ्चोपतिष्ठतः॥
दुराचारमनुष्येभ्यः स्वदीपस्च निवार्य्यते। १५
ऊर्द्धमुत्तोलितो बाहुस्तदानीञ्च प्रभज्यते॥
सागरस्योद्गमस्थानं प्राविशस्त्वं कदापि किं। १६
जलधेरन्तरागारे ऽकरो वा किं गमागमौ॥
कृतान्तस्य कपाटे किं विवृते तव सम्मुखे। १७
मृत्युध्वान्तस्य द्वारे वा किं समालोकिते त्वया॥
भुवनस्यापि विस्तारः किं त्वया समवेक्षितः। १८
यदि जानासि तत् सर्व्वं तर्हि मह्यं निवेदय॥
दीप्तिवासस्य मार्गः क्व तिमिरस्य स्थानं क्व वा॥ १९
किं तयोः परिसीमां ते समानेतुं क्षमो ऽसि वा। २०
किं तदीयनिवासस्य पद्धतीश्चावगच्छसि॥
अवगच्छसि यस्मात् त्वं तदानीं समजायथाः। २१
तावकीनदिनानाञ्च सङ्ख्यातीव गरीयसी॥
त्वं तुषारस्य कोषेषु किं प्रविष्टः कदाचन। २२
करकाधनशाला वा किं कदापीक्षितास्त्वया॥
सा तु दुर्गतिकालस्य निमित्तं रक्ष्यते मया। २३
सङ्ग्रामस्य नियुद्धस्य वा दिनार्थं हि सञ्चिता॥
यत्र निर्भिद्यते दीप्तिः क्व तत्स्थानस्य पद्धतिः। २४
पूर्व्वीयवायुना चोर्व्वीराक्रमस्यायनं क्व वा॥
धारासारनिमित्तञ्च प्रणालः केन कल्पितः। २५
केन गर्ज्जनयुक्तायाः सौदामिन्याश्च पद्धतिः॥

२६ तेन निर्जनदेशे ऽपि जायते तोयसेचनं।
उद्यते मरुभूमिश्च मानवेन विवर्ज्जिता॥
२७ शून्यं निरालयं स्थानञ्चार्द्रत्या परितृप्यति।
तत्रत्या शस्ययोनिश्च प्राप्नोत्यङ्कुरभूषणां॥
२८ वृष्टेः किं विद्यते तातो जन्मदः को निशाम्बुनः॥
२९ कस्या गर्भे हिमं जातं कया सूतं खवारि वा॥
३० पाषाणस्येव वेशेन छाद्यन्ते सलिलान्यपि।
अपान्नाथस्य दृश्याङ्गं दृढपाशैश्च बध्यते॥
३१ बन्धनं बङ्कलानां किं त्वं संयोजयितुं क्षमः।
मृगशीर्षस्य पाशान् वा त्वं हि किं मोचयिष्यसि॥
३२ त्वया वा किं प्रणीयन्ते स्वीयमासेषु राशयः।
सप्तर्षीणां सवंशानां त्वं वा किं पथदर्शकः॥
३३ त्वं किं ज्योतिषचक्रस्य सकलान् बुध्यसे विधीन्।
पृथिव्यां तस्य कर्तृत्वं किं समस्थाप्यत त्वया॥
३४ त्वं स्वकीयरवं मेघान् यावत् किं गमयिष्यसि।
इत्थञ्चाप्लावितोयेन किं समाच्छादयिष्यसे॥
३५ प्रतिष्ठन्ति त्वया वा किं प्रेषिताः शतकोटयः।
अस्मानुपस्थितान् पश्य वागियं तैः किमुच्यते॥
३६ ज्ञानं केनार्पितं चित्ते धीर्दत्ता केन वा हृदे॥
३७ ज्ञानात् तोयधराणां वा सङ्ख्यां को निश्चिनोति हि।
केन न्युब्जीक्रियन्ते वा गगनस्था अलिञ्जराः॥
३८ तदा विलीयते धूली धातुर्द्रवकृतो यथा।
मृत्तिकायाश्च लोष्टाणि प्रसज्यन्ते परस्परं॥

---

## ३९ ऊनचत्वारिंशोऽध्यायः।

३९ सिंहीया कथा ४१ द्रोणकाकीया कथा १ छागीया कथा ५ वन्यगर्द्दभीया कथा ९ खङ्गीया कथा १३ उष्ट्रपक्षीया कथा १९ अश्वीया कथा २६ वाजपक्षीया कथा गृध्र-पक्षीया कथा च।

३९ केशरिण्या निमित्तं किं त्वं भक्ष्यं मृगयिष्यसे।
पशुराजस्य वत्सानां क्षुधां वा तर्पयिष्यसि॥

गह्वरेषु नताङ्गानां मांसार्थं गुप्तसेविनां॥ ४०
द्रोणकाकस्य सन्तानाः क्रन्दन्त ईश्वरं प्रति। ४१
यस्मिन् काले निराहारा विभ्रमन्ति समन्ततः।
तदा तस्य निमित्तं कः निश्चिनोत्युपजीविकां॥

छाग्याः पर्व्वतवासिन्याः सूतिकालमवैषि किं। १
किं प्रत्यक्षं त्वया दृष्टा मृगीणां गर्भवेदना॥
तासां वा पूर्णगर्भाणां मासाः किं गणितास्त्वया। २
तासां प्रसवकालो वा ज्ञातुं किं शक्यते त्वया॥
नत्वा ताभिरपत्यानि सुत्वा प्रस्थाप्यते व्यथा॥ ३
तासां वत्सा बलं प्राप्य वर्द्धन्ते शस्यभूमिषु। ४
ते प्रस्थाय पुनस्तासां समीपं प्रतियान्ति न॥

केन स्वाधीनता दत्त्वा विसृष्टो वनगर्द्दभः। ५
स आरण्यखरः केन बन्धनेभ्यो विमोचितः॥
निम्नभूमि मया तस्य सदनार्थं व्यवस्थिता। ६
ऊषरञ्च मरुस्थानं कृतं तस्य निकेतनं॥
पुरवासिमनुष्याणां जनता तेन हस्यते। ७
पशुताडयितुः शब्दो नहि तेन निशम्यते॥
गिरीणां पृष्ठतो दृष्टं स्थानं तस्य विहारभूः। ८
हरिद्वर्णञ्च यत् किञ्चित् स तदेवानुधावति॥

तव दासत्ववृत्त्यां किं गण्डकः परितोक्ष्यति। ९
तावकीनगवादन्याः पार्श्वे वा किं शयिष्यते॥
रज्जुना हलरेखायां किं त्वं भंत्स्यसि खड्गिनं। १०
स केदारान् समीकुर्व्वन् किं त्वत्पश्चाद् व्रजिष्यति॥
स महाबलवान् तस्मात् किं तस्मिन् विश्वसिष्यसि। ११
निजधान्यादिवित्तञ्च किं तस्मिन्नर्पयिष्यसि॥
किं विश्वसिषि तस्मिन् यत् ते शस्यानि स वक्ष्यति। १२
मर्द्दनस्थानतो धान्यं तत्र वा संग्रहीष्यति॥

दर्पिण्या उष्ट्रपक्षिण्या यो गरुत् स हि कीदृशः। १३
स वाजो वत्सलायाः किं लक्ष्मणायास्तनूरुहं॥
भूमौ त्यक्त्वा स्वडिम्बान् सा धूलावष्णीकरोति हि। १४
भंक्ष्यन्ते चरणैर्यत्ते किं वा यद् वनवासिभिः। १५

श्वापदैश्चूर्णयिष्यन्ते तन्न संस्मर्य्यते तया॥
१६ आत्मजान् परजान् मत्वा सास्ति तान् प्रति निष्ठुरा॥
जायते निष्फला तस्या व्यथा दुःसाहसेन च॥
१७ ज्ञानमीशेन विस्मार्य्य न दत्ता सा धियोऽंशिनी॥
१८ ऊर्द्धमुखी यदा सा तु धावनाय प्रवर्त्तते।
तया तर्हि तुरङ्गश्च तदारोही च हस्यते॥
१९ वाजिने किं प्रभावो वा प्रदातुं शक्यते त्वया।
तस्य ग्रीवा त्वया वा किं मेघशब्देन वेष्ट्यते॥
२० किं त्वयैव स वा सृष्टः प्लवगामी पतङ्गवत्।
उग्रश्वासस्तदीयो हि प्रतापेन भयङ्करः॥
२१ खुरै र्लिखन् समां भूमिं स्वबलेन स नन्दति।
सुसज्जीभूतसेनानां विरुद्धश्चाभिगच्छति॥
२२ त्रासे हसत्यशङ्कः स खड्गतो न पलायते॥
२३ तस्मिन् स्वनति तूणीरः शैल्यं शक्तिश्च तैजसी॥
२४ स उद्वेगादमर्षाच्च रणभूमिं पिपासति।
तूरीवादनमाकर्ण्य गतशान्तिश्च जायते॥
२५ तूरीवादे नदत्युच्चै र्दूराज्जिघ्रति चाहवं।
गर्ज्जनञ्च पुरोगानां योधानाञ्च महाध्वनिं॥
२६ तव ज्ञानप्रभावेन श्येनो वा किं प्रडीयते।
दक्षिणां दिशमुद्दिश्य स्वपक्षौ विस्तृणोति च॥
२७ किं त्वदीयाज्ञया गृध्र ऊर्द्धं यात्युच्चनीडकृत्॥
२८ शैलस्तस्य निवासो ऽस्ति रात्रौ तिष्ठति तत्र सः।
शिलोच्चयस्य शृङ्गाग्रे दुर्गमं दुर्गमाश्रितः॥
२९ तस्मात् स प्रेक्षते भक्ष्यं तन्नेत्रे दूरदर्शिनी॥
३० तद्वत्सा रक्तपातारः कुणपा यत्र तत्र सः॥

---

## ४० चत्वारिंशोऽध्यायः।

१ आयूबं प्रति परमेश्वरस्य वचनं ३ आयूबस्य स्वदोषाङ्गीकरणं ६ परमेश्वरस्य स्वीयाश्चर्य्यकर्म्मभिरायूबस्याज्ञानतायाः प्रकाशनं १५ विहेमोतपशोः कथनञ्च।

१ अनन्तरं परमेश्वर आयूबं जगाद।
२ सर्व्वशक्तिमता सार्द्धं विवादी किं तमादिशेत्।

ईश्वरस्यापवादी यः स तस्मै यच्छतूत्तरं॥

तत आयूबः परमेश्वरं प्रत्युवाच। ३

पश्याहं तुच्छनीयो ऽस्मि किं दास्ये तुभ्यमुत्तरं। ४
मामकीनमुखे तस्मात् करिष्यामि करार्पणं॥
एककृत्वो मयाभाषि नहि भाषिष्यते पुनः। ५
द्वौ वारावीरितं वाक्यं न पुनस्त्वेरयिष्यते॥

ततः परं परमेश्वरो झञ्झावाते तिष्ठन् आयूबं प्रतिजगाद। ६

इदानीं कटिदेशस्ते बध्यतां वीरवत् त्वया। ७
परिप्रक्ष्यामि यच्चाहं देहि मह्यं तदुत्तरं॥
मम धर्म्मविचारो ऽपि किं त्वया परिलोप्स्यते। ८
निजपुण्यस्य रक्षार्थं माञ्च किं दूषयिष्यसि॥
ईश्वरस्य भुजो यादृक् ते भुजस्तादृगस्ति किं। ९
किं तेनेवोच्चशब्देन शक्यते गर्ज्जितुं त्वया॥
तर्हि तेजो महत्त्वञ्च कुरुष्व स्वीयभूषणं। १०
गौरवञ्च प्रभावञ्च कुरुष्व स्वपरिच्छदं॥
तव क्रोधानलस्यापि शिखाः सर्व्वत्र विक्षिप। ११
यच्च किञ्चिद् उदग्रं तद् दृक्पातेन निपातय॥
यच्च किञ्चिद् उदग्रं तद् दृक्पातेन विनामय। १२
दुश्चरित्रांश्च तत्रैव स्वपदाभ्यां विमर्द्दय॥
धूलौ तान् गोपयैकत्र तमिस्रे संवृताननान्॥ १३
तदानीन्तु प्रशंसा ते मयापि कीर्त्तयिष्यते। १४
निजदक्षिणहस्तेन त्वं यस्मादभवो जयी॥

विहेमोतं पशुं पश्य मया सृष्टं त्वया समं। १५
बलीवर्द्दो यथा तद्वत् तृणानि सो ऽपि खादति॥
पश्य कीदृग् बलं तस्य कटिदेशे हि विद्यते। १६
कुक्षिस्नायुषु शक्तिश्च कीदृशी तस्य वर्त्तते॥
एरसाख्यतरोस्तुल्यं लाङ्गूलं तेन चाल्यते। १७
तस्य श्रोणितटस्थानां शिराणां योजनं दृढं॥
तस्यास्थीन्यारकूटस्य नालानाञ्च समानि हि। १८
लौहदण्डसमानानि सन्ति तत्कीकसानि वा॥
ईशनिर्म्मितवस्तूनां श्रेण्यामग्र्यः स एव हि। १९

तदीयसृष्टिकर्त्ता च खड्गस्तस्मिन् समर्पितः ॥
२० गिरयस्तन्निमित्तञ्च भक्ष्यमुत्पादयन्ति हि।
तत्र क्रीडन्ति सर्व्वे च पशवोऽरण्यवासिनः ॥
२१ स स्तम्बानामधः शेते नलैः पङ्केन चावृतः ॥
२२ स्तम्बानां छायया तस्य पर्य्यशाला च जायते।
स्रोतःपार्श्वस्थगुल्मैः स प्राचीरेणेव वेष्ट्यते ॥
२३ उद्धृतायां तरङ्गिण्यां तस्य त्रासो न जायते।
यर्द्दनेनापि सिक्तास्यो धैर्य्ययुक्तः स तिष्ठति ॥
२४ साक्षाद् धृत्वा नरैस्तस्य नासा नास्यैश्च विध्यते ॥

---

## ४१ एकचत्वारिंशोऽध्यायः।

१ लिवियाथनस्य कथनं १२ तदीयविशेषाङ्गानां वर्णनञ्च।

१ वडिशेन समर्थः किं त्वं वेद्धुं लिवियाथनं।
किं वा त्वं रज्जुना तस्य जिह्वां सम्पीडयिष्यसि ॥
२ वेत्रं वा तस्य नासायां त्वया किं स्थापयिष्यते।
किं त्वया शक्यते तस्य हनु वेद्धुं शलाकया ॥
३ त्वयि किं स बहुत्वेन देवनं वा करिष्यति।
स वा किं कोमलै र्वाक्यैरभिभाषिष्यते त्वया ॥
४ नियमो वा त्वया सार्द्धं तेन किं स्थापयिष्यते।
चिरकालीयदासत्वे स त्वया किं नियोक्ष्यते ॥
५ किं क्रीडिष्यसि वा तेन सार्द्धं त्वं पक्षिणा यथा।
त्वं किं स्वतरुणीनां वा कृते तं बन्धयिष्यसि ॥
६ सार्थिकास्तस्य मूल्यार्थं किं करिष्यन्ति वा पणं।
किनानीयाश्च लोकाः किम् अंशयिष्यन्ति तं मिथः ॥
७ पूरयिष्यसि किं तस्य चर्म्म तीक्ष्णाग्रकण्टकैः।
मीनवेधकशूलानां शिञ्जितेन च तच्छिरः ॥
८ कुरु हस्तार्पणं तस्मिन् स्मृत्वा नो योत्स्यसे पुनः ॥
९ पश्य निरर्थकैवास्ति प्रत्याशा तद्विरोधिनः ॥
तस्य दर्शनमात्रात् स किं नो निपातयिष्यते ॥
१० धृष्टो न विद्यते कोऽपि तमुद्वेजयितुं क्षमः।

तर्हि मदन्तिकं स्थातुं कः समर्थो भविष्यति॥
मया प्रत्युपकर्त्तव्यः को मे पूर्व्वोपकारकृत्। ११
कृत्स्नद्युमण्डलस्याधो यद्यदस्ति ममैव तत्।
अमुकेन मया तस्य सर्व्वाङ्गं वर्णयिष्यते। १२
प्रभावस्यापि वृत्तान्तः सज्जाया अपि सौष्ठवं॥
तद्वस्त्रस्य वहिर्भागं दूरीकर्त्तुं हि कः क्षमः। १३
तदीयद्विजपङ्क्तौ च प्रवेष्टुं पारको ऽस्ति कः॥
तन्मुखस्य कपाटे च को विस्तारयितुं क्षमः। १४
तस्य वक्त्रखुराणाञ्च चतुर्द्दिक्षु भयं स्थितं॥
तदीयचर्म्मणां रेखाः सन्त्यहङ्कारभूमयः। १५
मुद्रया दृढसन्धा च बध्यन्ते तानि सर्व्वतः।
एकमासज्यते ऽन्यस्मिन् प्रवेष्टुं वायुरक्षमः॥ १६
एकं संलग्नमन्यस्मिन् तेषां योगो न भिद्यते॥ १७
तत्क्षुतं रश्मिविक्षेपि नेत्रे चारुणनेत्रवत्। १८
उल्का निर्यान्ति तद्वक्त्रात् स्फुरन्त्यो ऽग्निकणा यथा। १९
तस्य नासाग्ररन्ध्राभ्यां धूममाला निरेति च। २०
कटाहादिव सन्तप्तात् तालवृन्तेन वीजितात्॥
तस्य श्वासेन चाङ्गारा अभिजायन्त उज्ज्वलाः। २१
तदीयाननमध्याच्च निर्यान्त्यग्निशिखा अपि॥
तस्य ग्रीवा बलावासः शङ्का नृत्यति तत्पुरः॥ २२
तस्य पुष्टानि चाङ्गानि सुसंसक्तानि धातुवत्। २३
तस्मिन् सिक्तानि तिष्ठन्ति न च गच्छन्ति चालनं॥
सिक्तधातुसमं तस्य चित्तं पाषाणसन्निभं। २४
अधःस्थः पेषणीपट्ट इव तद्धृदयं घनं॥
तस्मिन् समुत्थिते वीरा अपि त्रस्ता भवन्ति हि। २५
बह्वल्पभयात् ते च जायन्ते क्षीनबुद्धयः॥
स येनाक्रम्यते तस्य खड्गो नाप्नोति सुस्थितिं। २६
न शूलं गोफणा वापि शिरस्त्रं वा कथञ्चन॥
स लौहं मन्यते नाडं रीतिञ्च शीर्णकाष्ठवत्॥ २७
न हि शरासनारोही तं विद्रावयितुं क्षमः। २८
गोफणाश्मशिलास्तस्य कृते सन्ति तृणोपमाः॥

२९ स गदां मन्यते नाडं स शक्ते र्हसति ध्वनिं॥
३० तीक्ष्णाग्राश्छुरिकास्तस्य निम्नभागे ऽपि सन्ति हि।
छिद्रं तेन यानस्य कर्द्दमोपरि चाल्यते॥
३१ तप्तस्थाली यथा तद्वत् तेन फेणायते ऽम्बुधिः।
स करोति पयोराशिम् यद्वत्कर्द्दमपात्रवत्॥
३२ तत्पश्चाद् राजते मार्गो दृश्यते पलितो ऽर्णवः॥
३३ तत्समो भूतले नास्ति स सृष्टो भयवर्ज्जितः॥
३४ ईक्षते सर्व्वमुच्चं स सर्व्वस्फीतात्मनां प्रभुः॥

---

# ४२ द्विचत्वारिंशो ऽध्यायः।

१ ईश्वरस्य निर्द्दोषत्वम् आयूबेन स्वदोषाङ्गीकरणं ७ तद्बन्धूनां प्रायश्चित्तकथनं १० आयूबस्य पुनरैश्वर्य्यप्राप्तिः १२ तस्य कन्यापुत्त्रकथनं १६ तस्य मरणञ्च।

१ अनन्तरम् आयूबः परमेश्वरं प्रतिजगाद।
२ सर्व्वमेव त्वया कर्त्तुं शक्यं तज्ज्ञायते मया।
एको ऽपि त्वदसाध्यश्च सङ्कल्पो नहि विद्यते॥
३ "उक्तिभि र्ज्ञानहीनाभि र्मन्त्रमन्धीकरोति कः।"
मयैव ज्ञानहीनेन यन्न बोध्यमभाषि तत्।
यद्यन्मत्तो ऽद्भुतं तद्धि न ज्ञात्वा कथितं मया॥
४ "त्वया निशम्यतां तर्हि वाक्यं भाषिष्यते मया।
परिप्रक्ष्यामि यच्चाहं देहि मह्यं तदुत्तरं॥"
५ कर्णस्याकर्णनेनाहं ते श्रुतिं श्रुतवान् पुरा।
लोचनं मामकीनञ्च त्वामिदानीं निरीक्षते॥
६ तस्मादात्मतिरस्कारो मनस्तापश्च जायते।
उपविष्टस्य मे धूलावासीनस्य च भस्मनि॥

७ परमेश्वर आयूबं प्रत्येतानि वाक्यानि कथयित्वा तैमनीयम् इलीफसं व्याजहार, तुभ्यं तव बन्धुद्वयाय च मम क्रोधः प्राज्वलत्, यतो मम
८ सेवक आयूबो यादृगवोचत्, यूयं मामधि तादृक् सत्यं नावोचत। अतो यूयमिदानीं सप्त वृषभान् सप्त मेषांश्चादाय मम सेवकमायूबम् उपागत्यात्ममङ्गलार्थं होमार्थकयज्ञेन मह्यं दत्त, मम सेवक आयूबश्च युष्मन्नि-

मित्तं प्रार्थनां करोतु, यस्मात् तेनैवाहं प्रसादयिष्ये, न चेद् युष्मासु मढ़ता सेत्स्यति, यतो हेतो मम सेवक आयूब इव यूयं मामधि सत्यं न कथितवन्तः। ततस्तैमनीय इलीफसः शूहीयो विल्ददो नामाथीयः ९
सोफरश्च गत्वा परमेश्वरेण यदाज्ञापितास्तदेव चक्रुस्ततः परमेश्वर आयूबेन प्रसादितः।

स्वबन्धूनां कृत आयूबेन प्रार्थनायां क्रियमाणायां परमेश्वरस्तस्य १०
दुर्दशां प्रतिचकार। फलतः परमेश्वर आयूबस्य सम्पत्तिं द्विगुणीकृत्य
वर्द्धयामास। ततस्तस्य सर्व्वा भ्रातृभगिन्यः पूर्व्वसंसर्गिणश्च सर्व्वे तमुपा- ११
गत्य तस्य गृहे तेन सार्द्धं बुभुजिरे परमेश्वरेण तस्मिन् प्रयोजितां सर्व्वाम् आपदमधि तं शुशुचुः सान्त्वयामासुश्च, तेषां प्रत्येकश्च तस्मै
स्वर्णमुद्रामेकां स्वर्णकुण्डलमेकञ्च ददौ। अपरं परमेश्वरेणायूबस्य १२
प्रथमावस्थातः शेषावस्थायां कुशलीकृतायां तस्य चतुर्दशसहस्राणि मेषाः षट्सहस्राणि महाङ्गा एकसहस्रं गोयुगान्येकसहस्रं गर्द्दभ्यश्च बभूवुः।

तस्य सप्तपुत्रास्तिस्रो दुहितरश्च बभूवुः। स तासां ज्येष्ठाया यिमी- १३
मेति नाम द्वितीयायाश्च किस्रियेति नाम तृतीयायाश्च केरणहप्पूकेति १४
नाम विदधौ। आयूबस्य ता दुहितर इव रूपवत्यः कामिन्यः पृथिव्यां १५
कुत्रापि नाविद्यन्त, ताभ्यं तातश्च तासां भ्रातृणां मध्ये ताभ्योऽप्यंशान् दायभागेन ददौ।

ततः परम् आयूबश्चत्वारिंशदधिकशतं वत्सरान् जीवन् चतुर्थपुरुष- १६
पर्य्यन्तं निजपुत्रपौत्रान् ददर्श। अनन्तरम् आयूबः स्थविरः पूर्णायुश्च १७
प्राणान् तत्याज।

# गीतसंहिता।

## १ प्रथमं गीतं।

पुण्यवतां सुखं पापवतां दुःखं।

१ धन्यः स मानवो यो न दुष्टानां मन्त्रणां चरेत्।
न तिष्ठेत् पापिनां मार्गे नासीत निन्दकासने॥
२ किन्तु शास्त्रे परेशस्य मनस्तुष्टिमवाप्नुयात्।
विदधीत च तस्यैव शास्त्रे ध्यानं दिवानिशं॥
३ स जलस्रोतसां पार्श्वे रोपितस्य तरोः समः।
फलदस्य निजे काले चाम्लानपल्लवस्य च।
यत् किञ्चित् क्रियते तेन तत् सर्व्वञ्च प्रसिध्यति॥
४ दुष्टा न तादृशाः किन्तु वायुकीर्णतुषोपमाः॥
५ अतो हेतो विचारेऽपि नहि स्थास्यन्ति दुर्जनाः।
धार्म्मिकाणां सभायाञ्च नहि स्थास्यन्ति पापिनः॥
६ धार्म्मिकाणां यतो मार्गं मन्यते परमेश्वरः।
किन्तु दुष्टमनुष्याणां मार्गो नाशं गमिष्यति॥

## २ द्वितीयं गीतं।

१ ख्रीष्टस्य रिपूणां कथनं ४ तस्य राजत्वस्थापनस्य भविष्यद्वाक्यं १० राजसु निवेदनञ्च।

१ किमर्थं भिन्नजातीया लोकाः कुर्व्वन्ति गर्ज्जनं।
देशवासिप्रजाश्चापि चिन्तयन्ति व्यलीकतां॥
२ उत्तिष्ठन्ति महीपाला मन्त्रयन्त्यग्रगा मिथः।
परमेशस्य तेनैव चाभिषिक्तस्य शात्रवात्॥
३ ते सङ्कल्पन्ति छेत्स्यामो बन्धनानि तयो र्वयं।
सुदूरे च तयो रज्जूः क्षेप्स्यामोऽस्मत्समीपतः॥
४ स्वर्गवासी हसत्यत्र तांश्चाकारयति प्रभुः।
५ तानुद्दिश्य स्वकोपेन स प्रभाषिष्यते तदा।

ताम् करिष्यति सन्त्रस्तान् निजक्रोधानलेन च॥
मयापि ह्यात्मसम्बन्धी सष्टजे पृथिवीपतिः। ६
मामकीने सियोनाख्ये पवित्रे धरणीधरे॥
विधिं निवेदयिष्यामि माम् अवोचत् परेश्वरः। ७
मदीयस्तनयोऽसि त्वम् अद्याहं त्वामजीजनं॥
मत्तो याचस्व तेनाहं तुभ्यं पैतृकवित्तवत्। ८
सर्व्वजातीः प्रदास्यामि क्षितेरन्तांश्च दायवत्॥
त्वञ्च लौहेन दण्डेन तान् लोकान् चारयिष्यसि। ९
पात्राणीव कुलालस्य तांश्च चूर्णीकरिष्यसि॥
अतो हे क्षितिपा यूयं ज्ञानिनो भवताधुना। १०
हे पृथिव्या नियन्तारो यूयं गृह्णीत शासनं॥
युष्माभिः साध्वसं प्राप्य सेव्यतां परमेश्वरः। ११
कम्पमानैस्तमुद्दिश्य क्रियताञ्च जयध्वनिः॥
पुत्रं चुम्बत नो चेत् स क्रोधाक्रान्तो भविष्यति। १२
मार्गे नंक्ष्यत यूयञ्च तत्कोपो ज्वलिताचिरात्।
धन्यास्ते मानवाः सर्व्वे ये तस्मिन् विश्वसन्ति हि॥

---

## ३ तृतीयं गीतं।

ईश्वरात् प्राप्याया रक्षाया वर्णना।

दायूदो धर्म्मगीतं।

अवशालोमनामधेयस्य तनयस्य समीपात् पलायनकाले रचितं।

हे परेश विपक्षा मे जाताः किं बहुसंख्यकाः। १
बहुसंख्यकलोका हि मद्विरुद्धं समुत्थिताः॥
बहुभिश्च मम प्राणानधीदं वाक्यमीर्य्यते। २
ईश्वरेण परित्राणं तस्य नो सम्भविष्यति॥ सेला॥
हे परेश त्वमेवासि चर्म्म मत्परिवेष्टकं। ३
मम शोभा मदीयस्य मूर्द्धस्योन्नतिकारकः॥
यदा स्वीयरवेणाहम् आह्वये परमेश्वरं। ४
स ददात्युत्तरं मह्यं तदा स्वपुण्यपर्व्वतात्॥ सेला॥

५ शयित्वाहं प्रबिद्रामि पुन र्जागर्म्मि सुस्थितः।
यतो हेतोः परेशो हि मामकीनावलम्बनं॥
६ न भेष्याम्ययुते लोके मत्समक्षं स्थिते र्हतः॥
७ परमेश त्वमुत्तिष्ठ मां त्रायस्व मदीश्वर।
यस्मान्मे द्वेषिणः सर्व्वे त्वयैवाहतगण्डकाः।
त्वया दुष्टमनुष्याश्च सञ्जाता भग्नदन्तकाः॥
८ परेशे विद्यते त्राणं तवाशीस्त्वत्प्रजासु च॥ सेला॥

---

## ४ चतुर्थं गीतं।

१ ईश्वरं प्रति दायूदो निवेदनं २ शत्रून् प्रति भर्त्सनं ६ तथा बलेन नहि किन्त्वीश्वरस्यानुग्रहेण सुखस्य भवनं।

यन्त्रवाद्यनियन्त्रे दातव्यं दायूदो धर्म्मगीतं।

१ प्रतिब्रूह्याह्वयन्तं माम् ईश धर्म्मस्वरूप मे।
त्वं हि सङ्कटकालेषु विस्तृणोषि ममायनं।
अतो मयि प्रसन्नः सन् मदीयां प्रार्थनां शृणु॥
२ वीरपुत्त्राः कियत्कालं यूयं शप्स्यथ मे श्रियं।
प्रेष्यध्वे ऽलीकतायाश्च म्षोक्तिश्चानुयास्यथ॥ सेला॥
३ बुध्यध्वं परमेशेन स्वार्थं साधुः पृथक्कृतः।
श्रोष्यते तेन चाह्वानं तमुद्दिश्य मया कृतं॥
४ अतः संक्रुध्य युष्माभिः क्रियतां नहि पातकं।
स्वशय्यासु मनोमध्ये प्रभाषध्वं हि मौनिनः॥ सेला॥
५ यूयं धर्म्मबलीन् दत्त श्रद्धद्ध्वञ्च परेश्वरं॥
६ बहुभि र्गद्यते कोऽस्मान् दर्शयिष्यति मङ्गलं।
हे परेश त्वयास्मासु स्वमुखस्योदियाद् द्युतिः॥
७ शस्यद्राक्षारसास्तेषां जायन्ते प्रचुरा यदा।
तत्कालात् श्रेष्ठमाह्लादं हृदि मे दीयते त्वया॥
८ अहं शान्त्या शयिष्ये च निद्रास्यामि च तत्क्षणे।
यस्मादेकः परेश त्वं मां वासयसि निर्भयं॥

---

# ५ पञ्चमं गीतं।

१ ईश्वराय दायूदो निवेदनं ८ शत्रूणां विरुद्धं धार्म्मिकाणां निमित्तञ्च तस्य प्रार्थना।

वाद्यनियन्त्रे दातव्यं निह्नीलोन्नामकस्वरयुक्तं दायूदो धर्म्मगीतं।

परेश शृणु मे वाचो बुध्यस्व चिन्तनं मम॥ १
मम राजन् मदीश त्वं मे खेदोक्तिं निशामय। २
त्वामुद्दिश्य यतो हेतोः प्रार्थनां प्रकरोम्यहं॥
हे परेश दिनारम्भे मे रवः श्रूयतां त्वया। ३
त्वत्साक्षात् प्रार्थनां प्रातो रचयामि प्रतीक्षकः॥
यतो नासि कथञ्चित् त्वं दुष्टताप्रिय ईश्वरः। ४
दुश्चरित्रो मनुष्यस्त्वां न कदाप्यनुवत्स्यति॥
तव लोचनयोरग्रे न स्थास्यन्त्यभिमानिनः। ५
विद्विष्यन्ते त्वया सर्व्वे चाधर्म्माचारिमानवाः॥
त्वया विनाशयिष्यन्ते लोकास्वान्ततवादिनः। ६
रक्तपाती छली चापि परेश गर्ह्यते त्वया॥
किन्त्वहं ते महाक्लेशात् प्रवेक्ष्यामि तवालयं। ७
त्वाद्भादृत्य प्रणंस्यामि पूतं ते मन्दिरं प्रति॥
परेश मां स्वधर्म्मेण नय मद्द्वेषिणां कृते। ८
उरलं कुरु पन्थानं त्वदीयं मम सम्मुखे॥
नास्ति तेषां मुखे सत्यं तेषामन्तर्भवा विपत्। ९
कण्ठस्तेषां मनुष्याणां शवगर्त्तो ह्यनावृतः।
रसनाञ्च स्वकीयां ते कुर्व्वते चाटुवादिनीं॥
दोषिणः कुरु तान् ईश निजमन्त्रैः पतन्तु ते। १०
अपराधबहुत्वाद्धि निक्षिप्यन्तां च ते त्वया।
यतो हेतोरकुर्व्वन् ते तव शासनलंघनं॥
तेन त्वदाश्रिताः सर्व्वे गमिष्यन्ति प्रफुल्लतां। ११
आनन्दिष्यन्ति नित्यञ्च रक्षिष्यन्ते त्वया च ते।
त्वन्नाम्नि प्रीयमाणाश्च करिष्यन्ति जयध्वनिं॥
यतो हे परमेश त्वं धन्यं करोषि धार्म्मिकं। १२
चर्म्मणेव प्रसादेन तञ्चाच्छादयसि ध्रुवं॥

## ६ षष्ठं गीतं।

विपदि दायूदो विलापः।

यन्त्रवाद्यनियन्त्रे दातव्यम् अष्टमस्वरयुक्तं दायूदो धर्म्मगीतं।

१ परमेश्वर कोपेन नहि मां परिभर्त्सय।
तव क्रोधस्य तापेन दण्डनं मम मा कुरु॥
२ हे परेश विषस्नोऽहं प्रसादं कुरु मां प्रति।
हे परेश मदस्थीनि त्रस्यन्ति त्वं भिषज्य मां॥
३ त्रस्यन्त्यतीव मे प्राणास्त्वं परेश कियच्चिरं॥
४ हे परेश परागच्छ मम प्राणान् विमोचय।
तावकीनप्रसादेन परित्राणञ्च मे कुरु॥
५ यस्मात् प्राणवियोगे हि ते स्मृति र्नहि विद्यते।
प्रशंसा तव वा केन परलोके करिष्यते॥
६ मम क्लान्ति र्हि सञ्जाता दीर्घनिःश्वासतो मम।
कृत्स्नां रात्रिं निजां शय्यां जलसिक्तां करोम्यहं।
मामकीनाश्रुभिः खट्वां द्रवीभूतां करोमि च॥
७ मच्चक्षुः क्षीयते दुःखात् शत्रुसङ्घाच्च जीर्य्यति॥
८ हे दुष्कर्म्मकृतो यूयं सर्व्वे मत्तः प्रगच्छत।
यस्मान्मत्क्रन्दितं रावं श्रुतवान् परमेश्वरः॥
९ मदीयानुनयोक्ति र्हि परमेशेन संश्रुता।
प्रार्थना मामकीना च परमेशेन गृह्यते॥
१० लज्जिष्यन्ते त्रसिष्यन्ति चारयः सकला मम।
सर्व्वे प्रत्यागमिष्यन्ति चाकस्मादेव लज्जिताः॥

---

## ७ सप्तमं गीतं।

१ शत्रोः कूशस्यापवादे दायूदा स्वनिर्द्दोषत्वप्रकाशनं १० कूशस्य विनाशप्रकाशनञ्च।

बिन्यामीनीयकूशस्य वाक्यान्यधि परमेश्वराय निवेदितं दायूदो व्याकुलतासूचकं गीतं।

१ हे मत्प्रभो परेश त्वां शरणं गतवानहं।
मदुपद्राविसङ्घात् त्वं मां त्रायस्वाभिरक्ष च॥

नो चेन्मज्जीवितं तेन सिंहेनेव विभेत्स्यते। २
परिदारयता मन्दं पश्चं रक्षकवर्ज्जितं॥
मया चेत् तत् कृतं कर्म्म मत्प्रभो परमेश्वर। ३
मम हस्तद्वये लग्ना खलता यदि विद्यते॥
स्वमित्रस्यापकारो वा मया चेत् परिकल्पितः। ४
माद्य यो ऽकारणाद् द्वेष्टि स चेन्नमीकृतो मया॥
तर्हि मे जीवितं शत्रुरनुद्रुत्य समाप्नुयात्॥ ५
मत्प्राणान् मर्द्दयेद् भूमौ धूलौ मे वासयेत् श्रियं॥ सेला॥
परमेश त्वमुत्तिष्ठ निजकोपपुरःसरं॥ ६
मामकीनविपक्षेषु क्रोधाविष्टेषु प्रोन्नम।
मदर्थञ्च प्रबुध्यस्व त्वं विचारस्य नायकः॥
प्रजानाञ्च समाजस्त्वां चतुर्द्दिक्षु प्रवेष्टतां। ७
तदूर्द्ध्वेनैव चारोह स्थानमुच्चतमं पुनः॥
परमेशेन जातीनां विचारः संविधीयते। ८
परमेश त्वया तस्मान्मे विचारो विधीयतां।
पुण्यशुद्धत्वयो र्योग्यो मयि सन्तिष्ठमानयोः॥
प्रार्थये दुश्चरित्राणां दुष्टता शेषमाप्नुयात्। ९
धर्म्माचारिमनुष्यस्य त्वया संस्थाप्यतां ध्रुवं।
अन्तर्याम्यसि चित्तज्ञस्त्वं परेश्वर धार्म्मिक॥
मत्त्राणमीश्वरावस्थं स रक्षी सरलात्मनां॥ १०
ईश्वरेण विचारो हि धार्म्मिकस्य विधीयते। ११
परिक्रुध्यति सर्व्वाहम् ईश्वरो दुर्ज्जनाय च॥
न परावर्त्तिते तस्मिन् स खासिं शाययिष्यति। १२
स्वीयचापञ्च विस्फार्य्य मौर्व्वा संयोजयिष्यति॥
तं कृतान्तस्य चास्त्राणां लक्ष्यवत् स्थापयिष्यति। १३
स्वकीयांश्च शरान् सर्व्वान् अग्निवाणान् करिष्यति॥
पश्य स व्यथयाधर्म्मम् उत्पादयितुमुद्यतः। १४
लोभस्तेन धृतो गर्भे व्यर्थता चाभिजायते॥
भूमिं छित्त्वा गभीरश्च कूपस्तेन विनिर्म्मितः। १५
तस्मिन्नात्मकृते खाते पतनं तस्य जायते॥
तेन सङ्कल्पितः लोभस्तच्छिरस्याश्रयिष्यति। १६

दौरात्म्यञ्च कृतं तेन तत्सीमन्ते पतिष्यति ॥
१७ परमेशं नविष्यामि तदीयन्यायकारणात्।
प्रगास्यामि परेशस्य सर्व्वोत्कृष्टस्य नाम च ॥

## ८ अष्टमं गीतं।

१ ईश्वरीयगुणानां ३ मनुष्यान् प्रति तदीयानुग्रहस्य च प्रशंसनं।

वाद्यनियन्त्रे दातव्यं गित्तीन्नामकस्वरयुक्तं दायूदो धर्म्मगीतं।

१ परमेश्वर नः स्वामिन् सर्व्वत्र पृथिवीतले।
कीदृगादरणीयं हि त्वदीयं नाम विद्यते।
तव प्रतापदानेन शोभते व्योममण्डलं ॥
२ बालानां स्तनपानाञ्च वक्त्रात् त्वं व्यदधा बलं।
त्वदीयद्वेषिणां हेतोः शत्रो रैरुञ्च दान्तये ॥
३ यदा पश्यामि ते व्योम त्वदीयाङ्गुलिभिः कृतं।
चन्द्रबिम्बञ्च ताराश्च तत्र संस्थापितास्त्वया ॥
४ तदा वदामि मर्त्त्यः को यत् स संस्मर्य्यते त्वया।
को वा मानवसन्तानो यत् त्वया समवेक्ष्यते ॥
५ दिव्यदूतगणेभ्यः स किञ्चिन्न्यूनः कृतस्त्वया।
तेजोगौरवरूपेण किरीटेन च भूषितः ॥
६ करयोस्तव कार्य्याणां प्रभुत्वे स नियोजितः।
स्थापितञ्च त्वया सर्व्वं वस्तु तत्पादयोरधः ॥
७ मेषा गावश्च सर्व्वे हि सर्व्वे चारण्यजन्तवः ॥
८ खेचराः पक्षिणश्चापि मीनाश्चार्णववासिनः।
सामुद्रमार्गगामीनि सर्व्वाणि तदृशानि च ॥
९ परमेश्वर नः स्वामिन् सर्व्वत्र पृथिवीतले।
कीदृगादरणीयं हि त्वदीयं नाम विद्यते ॥

## ९ नवमं गीतं।

१ जयस्य निमित्तमीश्वरस्य प्रशंसनं १३ भाविन उपकारस्य हेतोः प्रार्थनं।

वाद्यनियन्त्रे दातव्यं मुत्तमरणनामकस्वरयुक्तं दायूदो धर्म्मगीतं।

१ सर्व्वान्तःकरणेनाहं त्वां स्तोष्यामि परेश्वर।

वर्णयिष्यामि सर्व्वाणि ते कर्म्माण्यद्भुतानि च ॥
त्वय्यहं परितोक्ष्यामि करिष्यामि च नन्दनं। २
उपगास्याम्यहं नाम तव सर्व्वोपरिस्थित ॥
यतो हेतो र्विपक्षा मे पलायन्ते पराङ्मुखाः। ३
स्खलन्तस्तव साक्षात्ते विनाशं प्राप्नुवन्ति च ॥
यतः कृत्वा विचारं त्वं धर्म्मं निर्णीतवान् मम। ४
स्वसिंहासन आसीनो न्यायकारी विचारकः ॥
भर्त्सयित्वान्यजातीयान् दुरात्मानं विनाश्य च। ५
त्वमेवानन्तकालार्थं तेषां नाम विलुप्तवान् ॥
वैरिणां जीर्णगेहानि ध्वंसितानि निरन्तरं। ६
त्वया पुरेषु भग्नेषु लुप्ता तेषामपि स्मृतिः ॥
परमेशः सदाकालम् अध्यासीनो भविष्यति। ७
निजसिंहासनं तेन विचारार्थं स्थिरीकृतं ॥
शासनं नरलोकस्य स न्यायेन विधास्यति। ८
जातीनाञ्च विचारं स याथार्थ्येन करिष्यति ॥
पीडितस्य मनुष्यस्य प्रोच्चदुर्गं परेश्वरः। ९
सङ्कटस्यैव कालेषु प्रोच्चदुर्गस्वरूपकः ॥
येऽभिजानन्ति ते नाम त्वयि ते विश्वसन्ति हि। १०
परमेश त्वदन्वेष्टॄन् त्वं न त्यक्ष्यसि कर्हिचित् ॥
अध्यासीनाय सीयोने परमेशाय गायत। ११
तस्योत्कृष्टानि कर्म्माणि सर्व्वलोकेषु शंसत ॥
यस्माद् रक्तानुसन्धात्रा रक्तपातो ऽनुचिन्त्यते। १२
दुर्गतानां विलापश्च तेन विस्मर्य्यते नहि ॥
मां परेश दयस्व त्वं दुर्गतिं पश्य मेऽरिजां। १३
त्वं द्वारेभ्यः कृतान्तस्य मदीयोन्नतिकारकः ॥
सियोनाख्यकुमार्य्या हि गोपुरेषु यतो मया। १४
वक्तव्या तेऽखिला कीर्त्ति र्नन्दता तव तारणात् ॥
अमज्जन् स्वकृते गर्त्ते मानवा भिन्नवंशजाः। १५
अपतन् बद्धपादास्ते कूटयन्त्रे स्वपातिते ॥
परमेशो विचारेण स्वकृतेन प्रकाशते। १६
जालबद्धोऽभवद्दुष्टः स्वहस्तकृतकर्म्मणा ॥ हिगायोन्। सेला ॥

१७ नरके निपतिष्यन्ति दुरात्मानो हि मानवाः।
भिन्नजातीयलोकाश्च सकला विस्मृतेश्वराः॥
१८ यतो हतोदरिद्रो न भविष्यत्यस्मृतः सदा।
दीनानाञ्च प्रतीक्षा न सर्व्वकालं विनंक्ष्यति॥
१९ परमेश त्वमुत्तिष्ठ मर्त्यो मा प्रबलो भवेत्।
मानवा अन्यजातीया विचार्य्यन्तां तवान्तिके॥
२० परमेश त्वया तेषां चित्ते त्रासो नियुज्यतां।
विजानन्त्वन्यजातीयाः स्वान् हि मर्त्यस्वरूपकान्॥ सेला॥

---

## १० दशमं गीतं।

१ पापिलोकानां विषये दायूदः खेदकरणं १२ ईश्वरं प्रति तेभ्यो रक्षायाः प्रार्थनं।

१ परमेश किमर्थं त्वं दूरवर्त्त्यवतिष्ठसे।
कुतो विपत्तिकालेषु तव नेत्रे निमीलिते॥
२ दुष्टलोकस्य दर्पेण ताप्यन्ते दीनमानवाः।
छलैः सङ्कल्पितैस्तेन जालबद्धा भवन्ति च॥
३ निजचित्तस्य लोभेन दुरात्मा कत्थते ध्रुवं।
प्राप्तलाभः परेशञ्च धन्यमुक्त्वावमन्यते॥
४ ऊर्द्धदृष्ट्या दुरात्मा च न करोति विवेचनां।
सर्व्वासां तस्य चिन्तानां सारो नास्तीश्वरस्त्विति॥
५ सर्व्वकाले गतिस्तस्य समाप्नोति कृतार्थतां।
उन्नतास्तव दण्डाज्ञा न तस्येन्द्रियगोचराः॥
तस्य विरोधिनः सर्व्वे विध्मायन्ते च तेन हि॥
६ स स्वान्तःकरणे वक्ति न चलिष्यामि कर्हिचित्।
पुरुषानुक्रमं यावद् भविष्यामि निरापदः॥
७ शापकापट्यदौरात्म्यैः परिपूर्णं तदाननं।
तज्जिह्वाया अधः क्लेशो द्वेषभावश्च तिष्ठतः॥
८ स पल्लीनां रहःस्थाने चोपविष्टः प्रतीक्षते।
तिष्ठन् छद्मेषु वासेषु निर्द्दोषं हन्ति मानवं।
तस्य लोचनयुग्मञ्च दुःखार्त्तान् अनुसर्पति॥

स गुप्ते तिष्ठति स्थाने गह्वराश्रितसिंहवत्। ९
दीनहीनं मनुष्यञ्च दिधीर्षुः सोऽवतिष्ठते।
तेन स्वजालमाकृष्य ध्रियते दीनमानवः॥
चूर्णः सीदति दुःखार्त्तस्तस्य दोर्भ्याञ्च पात्यते॥ १०
चित्ते वक्ति दुरात्मेदम् ईश्वरो नष्टसंस्मृतिः। ११
वक्त्रमाच्छाद्य दृष्टिं स न कदापि करिष्यति॥
परमेश त्वमुत्तिष्ठ करमुत्थापयेश्वर। १२
दीनहीनमनुष्या न भवेयु र्विस्मृतास्त्वया॥
किमर्थमवजानीयाद् ईश्वरं दुष्टमानवः। १३
त्वया न क्रियते दृष्टिरिति चित्ते वदेत् कुतः॥
कृता दृष्टिस्त्वया यस्मात् निजहस्तेऽर्पयिष्यता। १४
क्लेशकोपौ त्वयेक्ष्येते दुःखार्त्तस्य त्वमाश्रयः।
अनाथस्यापि लोकस्य त्वमेवास्युपकारकः॥
भंग्धि दुरात्मनो बाहुं दुश्चरित्रजनस्य च। १५
दुष्टतामनुसन्धाय तस्या लेशं न शेषय॥
अनन्तकालपर्य्यन्तं राजास्ते परमेश्वरः। १६
उच्छिद्यन्ते ऽन्यजातीया लोकास्तद्राष्ट्रमध्यतः॥
परमेश मनोवाञ्छा नम्राणां श्रूयते त्वया। १७
जायन्ते स्थिरचित्तास्ते कृत्वा चाकर्णनं त्वया॥
अनाथक्लिष्टयो धर्म्मः सम्यक् प्रकाशयिष्यते। १८
न पुन र्भूमिजो मर्त्त्यो दौरात्म्यमाचरिष्यति॥

---

## ११ एकादशं गीतं।

१ शत्रुभि र्दायूदः क्लिष्टत्वं ४ परमेश्वरे तस्याश्रयग्रहणं।

वाद्यनियन्त्रे दातव्यं दायूदो गीतं।

परेशं श्रद्दधानोऽस्मि पक्षिवत् स्वशिलोच्चयम्। १
उत्पत्य यात मत्प्राणान् ब्रूत यूयमिदं कुतः॥
पश्य दुरात्मनो लोकास्तमिस्रे सरलात्मनः। २
आहन्तुं धनुराकृष्य विन्यस्यन्ति गुणे शरं॥
उत्पाटितेषु मूलेषु किं करिष्यति धार्म्मिकः॥ ३

४ स्वकीये पुण्यप्रासादे विद्यते परमेश्वरः।
परेशस्यासनं स्वर्गे तन्नेत्रे सूक्ष्मदर्शिनी।
परीक्षेते नरसन्तानान् तदीयौ नयनच्छदौ॥
५ धार्म्मिकस्य परीक्षां हि विदधाति परेश्वरः।
दुष्टं दौराम्यकामञ्च स चित्तेनावगर्हते॥
६ स वर्षिष्यति दुष्टेषु पाशपावकगन्धकान्।
तेषां पानीयवत् कंसे चण्डवायु र्भविष्यति॥
७ धार्म्मिकः परमेशः स प्रीयते धर्म्मकर्म्मसु।
सरलं मानवं तस्य वदनञ्च निरीक्षते॥

---

## १२ द्वादशं गीतं।

दायूदो निन्दितत्वं २ परमेश्वरे तस्याश्रयग्रहणं।

वाद्यनियन्त्रे दातव्यमष्टमस्वरयुक्तं दायूदो धर्म्मगीतं।

१ परेश कुरु साहाय्यं यतः साधु र्विलुप्यते।
नरसन्तानवर्गे च विश्वास्या यान्ति सङ्क्षयं॥
२ स्वमित्रं प्रति चैकैकः स्निग्धोष्ठं भाषते मृषा।
द्विप्रकारेण चित्तेन ते सम्भाषञ्च कुर्व्वते॥
३ उच्छेत्स्यन्ते परेशेन स्निग्धोष्ठाः सकला नराः।
तद्वदुच्छेत्स्यते तेन रसना प्रोच्चभाषिणी॥
४ तैरुक्तं प्रभविष्यामः स्वजिह्वाभि र्वयं किल।
स्वाधराः सहसेना नः को भविष्यति नः प्रभुः॥
५ दुःखिनां पीडितत्वाद्धि दुर्गतानाञ्च रोदनात्।
उत्तिष्ठाम्यधुनैवाहमिति ब्रूते परेश्वरः।
त्राणाकाङ्क्षी मया मर्त्यस्त्राणप्राप्तः करिष्यते॥
६ परमेशस्य या वाचस्ता वाचः सन्ति निर्म्मलाः।
ता भूपस्थामलं रौप्यं सप्तकृत्वः परिष्कृतं॥
७ रक्षिष्यन्ते मनुष्यास्ते त्वया हे परमेश्वर।
इदानीन्तनवंशात् त्वं सदा तान् उद्धरिष्यसि॥
८ चतुर्दिक्षु दुरात्मानो प्रकुर्व्वन्ति गमागमौ।
अधमो नरसन्तानैः सर्व्वोत्कृष्टः प्रगण्यते॥

## १३ त्रयोदशं गीतं।

दायूदो विलपनं प्रार्थनं धन्यवादश्च।

वाद्यनियन्त्रे दातव्यं दायूदो धर्म्मगीतं।

परेश कतिकालं मां विस्मरिष्यसि किं सदा। १
कतिकालं निजं वक्त्रं मत्त आच्छादयिष्यसि॥
कतिकालमहं चिन्ताः स्थापयिष्यामि मे हृदि। २
प्रत्यहञ्च निजे चित्ते निधास्यामि मनोव्यथां।
कतिकालं मम द्वेषी मत्त उच्चो भविष्यति॥
मामालोक्योत्तरं देहि मत्प्रभो परमेश्वर। ३
प्रसन्ने कुरु मन्नेत्रे नो चेत् स्वप्स्यामि मृत्यवे॥
तेन वक्ष्यति मद्द्वेषी पश्यासौ विजितो मया। ४
विचलन्तञ्च मां दृष्ट्वा हर्षिष्यन्त्यरयो मम॥
अहन्तु श्रद्दधामि स्म तावकीनमनुग्रहं। ५
त्राणेन तावकीनेन चानन्दिष्यति मे मनः।
गास्याम्यहं परेशाय यस्मान्मां स उपाकरोत्॥ ६

---

## १४ चतुर्द्दशं गीतं।

पापिलोकानां दुष्टता भाविदुःखञ्च।

वाद्यनियन्त्रे दातव्यं दायूदो गीतं।

ईश्वरो नास्ति वागेषा चित्ते मूढेन गद्यते। १
ते भ्रष्टा गर्हिताचारा नास्ति कोऽपि सुकर्म्मकृत्॥
स्वर्गान्मानवसन्तानान् परमेशो निरीक्षते। २
ज्ञानाचारीश्वरान्वेषी कोऽप्यस्तीति दिदृक्षते॥
सर्व्वे पराङ्मुखा जाता युगपद् विकृतिं गताः। ३
नास्ति कोऽपि सदाचार एकोऽपि नहि विद्यते॥
किं न जानन्ति किञ्चित् ते सर्व्वे दुष्कर्म्मकारिणः। ४
अन्नवन्मत्प्रजाभक्षा नाह्वयन्तः परेश्वरं॥
महात्रासेन सन्त्रस्तास्तत्र स्थाने भवन्ति ते। ५
यस्माद् धार्म्मिकवंशस्य मध्यवर्त्ती परेश्वरः॥

६ दुःखिनो मन्त्रणां यूयं किं कलङ्कं करिष्यथ।
तदीयाश्रयभूमिस्तु जायते परमेश्वरः॥
७ इस्रायेलः परित्राणं सियोनाद् उदियाद् द्रुतं।
बन्दीभूतान् निजान् लोकान् प्रत्यायाते परेश्वरे।
आनन्दिष्यति याकूब इस्रायेलपि हर्षिता॥

---

## १५ पञ्चदशं गीतं।

सियोननिवासिनो वर्णनं।

दायूदो धर्म्मगीतं॥

१ परमेश तवावासे कः करिष्यत्यवस्थितिं।
पवित्रे तव शैले वा को निवासं करिष्यति॥
२ मानवः सरलाचारो धर्म्मकृद्हृदि सत्यवाक्।
३ जिह्वायाश्च न वाग्दुष्टो मित्रं प्रति न हिंसकः।
समीपवासिलोकञ्च प्रति नापयशस्करः॥
४ यस्य दृष्ट्या मनुष्यश्च धर्म्महीनोऽवमन्यते।
परमेश्वरभक्तानां क्रियते येन सत्कृतिः।
क्षतये शपथं कृत्वा येन न क्रियतेऽन्यथा॥
५ स्वरौप्यं येन वृद्ध्यर्थं परस्मिन् न समर्प्यते।
निर्द्दोषस्य विरुद्धञ्च येनोत्कोचो न गृह्यते।
नर एतादृगाचारो न कदापि स्खलिष्यति॥

---

## १६ षोडशं गीतं।

१ परमेश्वरे दायूद आश्रयणं ८ अनन्तपरमायुषः प्रतीक्षणञ्च।

दायूदो गुप्तधनरूपं गीतं।

१ हे मदीश्वर मां रक्ष यतो विश्वसिमि त्वयि।
२ परेशं मन्मनो वक्ति त्वमेवासि प्रभु मम।
क्षेमं त्वद्व्यतिरिक्तं हि मम किञ्चिन्न विद्यते॥
३ पवित्राणामहं सङ्गी धरणीतलवासिनां।

नृणामादरणीयानां येषु सर्व्वा रुचि र्मम ॥
परदेवग्रहीतारो वर्द्धयन्ति स्वयातनाः। ४
तेषु रक्तनिषेकश्च मया नैव करिष्यते।
नाधराभ्यां ग्रहीष्यन्ते तेषां नामानि वा मया ॥
परेशो मम दायांशः पानपात्रं स एव मे। ५
त्वञ्च भागं मया लब्धं सम्यक् समेधयिष्यसि ॥
मत्कृते मापनीरज्जु र्न्यपतत् सुन्दरे स्थले। ६
मामकीनोऽधिकारोऽपि सम्यगेव विशोभते ॥
धन्यं वच्मि परेशं तं यो मह्यं मन्त्रणामदात्। ७
अत्र मे हृदयं रात्रौ मह्यं यच्छति चेतनां ॥
निजसाक्षादहं नित्यं स्थापयामि परेश्वरं। ८
स मद्दक्षिणपार्श्वस्थो न स्खलिष्यामि कर्हिचित् ॥
तस्माद्धृष्यति मच्चित्तं मम स्वान्तञ्च नन्दति। ९
मामकीनशरीरञ्च निर्व्विघ्नं सुशयिष्यते ॥
परलोके मम प्राणान् यस्मात् त्वं न विहास्यसि। १०
स्वकीयं पुण्यवन्तं त्वं क्षयं प्राप्तुं न दास्यसि ॥
जीवनस्यापि पन्थानं त्वं मां विज्ञापयिष्यसि। ११
महानन्दस्य बाहुल्यं प्राप्यते तव सम्मुखे।
नित्यवर्त्तिविलासश्च विद्यते तव दक्षिणे ॥

---

## १७ सप्तदशं गीतं।

निन्दायां दायूदा आत्मनो निर्दोषीकरणम् अपवादकस्य विरुद्धं प्रार्थनञ्च।

दायूदः प्रार्थना।

परमेश शृणु न्यायं मद्रवञ्च निशामय। १
त्वमाकर्णय याच्ञाञ्च निष्कापट्याधरस्य मे ॥
यो धर्म्मो मामकीनः स तव साक्षात् प्रकाशतां। २
तव नेत्रद्वयं सम्यक् सारल्यञ्च निरीक्षतां ॥
अनुसन्धाय मच्चित्तं रात्रौ मामवलोक्य च। ३
त्वं परीक्षितवान् मां हि किन्तु दोषं न लब्धवान्।

मम मानसचिन्ताभ्यां विभिन्नं वदनं नहि ॥
४ मानवानां क्रिया दृष्ट्वा त्वदीयाधरनिर्गतैः।
वाक्यै र्विनाशकस्याहं पदवीः पर्य्यवर्ज्जयं ॥
५ कुरु मे पादविक्षेपान् तव मार्गेषु सुस्थिरान्।
चरणौ मामकीनौ च स्खलतां न कदाचन ॥
६ अहं त्वामाह्वयामीश त्वं ममोत्तरदायकः।
निधाय श्रवणं त्वं हि मम वाचं निशामय ॥
७ निजदक्षिणहस्तेन नृणां विश्वसतां त्वयि।
प्रतिरोधिभ्य उद्धारिन् स्वकृपामद्भुतां कुरु ॥
८ अक्ष्णः कनीनिकां यद्वत् तद्वत् त्वं परिरक्ष मां।
त्वदीयपक्षयुग्मस्य छायया माञ्च गोपय ॥
९ मां नाशयन्ति ये दुष्टास्तेभ्यस्त्वं परिरक्ष मां।
रिपुभ्यो मां जिघांसुभ्यो यैरहं परिवेष्टितः ॥
१० मेदसा स्थूलकायास्ते भाषन्ते गर्व्वितै र्मुखैः ॥
११ अस्माकं पादविक्षेपान् इदानीं वेष्टयन्ति ते।
देशे पराङ्मुखत्वाय तिष्ठन्ति स्थिरदृष्टयः ॥
१२ विदारणोत्सुकस्यैव पशुराजस्य सन्निभाः।
युवसिंहस्य वा तुल्याः स्थितस्य निभृते स्थले ॥
१३ परमेश त्वमुत्तिष्ठ तमाक्रम्य निपातय।
यो दुष्टस्तव खड्गस्त्वं तस्मान्मज्जीवमुद्धर ॥
१४ ये नरास्तव मुष्टिस्थ तेभ्यो रक्ष परेश मां।
नराः संसारनिष्ठास्त इह जीवनभोगिनः।
त्वया गूढधनैस्तेषां पूर्य्यन्ते जठराणि हि।
पुत्रैस्तृप्यन्ति ते वित्तं स्वबालेष्वर्पयन्ति च ॥
१५ अहं प्राप्स्यामि धर्म्मेण तव वक्त्रस्य दर्शनं।
जागरित्वा गमिष्यामि त्वत्सादृश्येन तर्पणं ॥

---

## १८ अष्टादशं गीतं।

१ दायूदः कथा ४ परमेश्वरस्य नानाश्चर्य्यक्रिया १६ ईश्वरीयोपकारेण दायूदो रक्षणं ४४ तन्निमित्तं तस्य धन्यवदनं।

वाद्यनियन्त्रे दातव्यं परमेश्वरीयदासस्य दायूदो गीतं।

यस्मिन् काले परमेश्वरः सर्व्वेषां रिपूणां शौलस्य च हस्तात् दायूदम् उद्धार तस्मिन् काले स परमेश्वरम् उद्दिश्यैतद् गीतं जगौ।

दायूद् उवाच।

परमेश्वर मच्छक्ते त्वयि प्रेम करोम्यहं॥ १

परमेशोऽस्ति शैलो मे मद्दुर्गं मम रक्षकः। २

मदीशोऽद्रिस्वरूपो मे तमहं शरणं गतः।

चर्म्म मे मम शृङ्गञ्च मत्राता प्रांशु मे गृहं॥

अहं प्रशंसनीयं तम् आह्वये परमेश्वरं। ३

तेन मद्द्वेषकारिभ्यो जायते मम रक्षणं॥

वेष्टितो मरणोन्माथैस्त्रासितः पातकोर्म्मिभिः। ४

श्लिष्टो नारकपाशैश्च मृत्युजालैश्च संवृतः॥ ५

अहमान्तरिकोद्वेगात् परमेश्वरमाह्वयं। ६

मदीयेश्वरमुद्दिश्य चाकुर्व्वं परिदेवनं।

मदीयार्त्तस्वरस्तेन तदाश्रावि स्वमन्दिरे।

प्राविशत् तस्य कर्णौ च मदीयं परिदेवनं॥

तस्य कोपाग्निना पृथ्वी कम्पित्वा प्राचलत् तदा। ७

पर्व्वतानाञ्च मूलानि चलित्वा प्रचकम्पिरे॥

तदीयनासिकारन्ध्राद् धूम उद्गतवांस्तदा। ८

जग्रास सकलं वह्नि र्निर्गतस्तस्य वक्त्रतः।

तस्मादुत्पद्य चाङ्गाराः सर्व्वतः प्राज्वलन् तदा॥

आकाशं नमयित्वा स यथा तेनावरूढवान्। ९

अन्धकारश्च विस्तीर्णस्तदीयपादयोरधः॥

ततः किरूवमारुह्य तूर्णमुड्डयते स्म सः। १०

वायुपक्षौ समाश्रित्य गगनेन ययौ च॥

तमस्त्वावरणं कृत्वा चतुर्दिक्षु स्ववेश्मवत्। ११

स्थापयामास नीलाभ्भान् जीमूतानाञ्च संवृतिं॥

तत्प्रत्यक्षप्रतापेन ते घनाः सम्पलायिताः। १२

सञ्जाता च शिलावृष्टिरङ्गाराश्च प्रजज्वलुः॥

परमेश्वर आकाशे तदानीं प्रजगर्ज च। १३

सर्व्वेषामुपरिस्थः स प्रैरयच्च निजं रवं।

शिलावृष्टिं तथाङ्गारान् वह्निना चोज्ज्वलान् बहून्॥
१४ परिक्षिप्य निजान् वाणान् व्यकिरत् सर्व्ववैरिणः।
वज्राघातैश्च भूयिष्ठैस्तानुद्विग्नान् चकार च॥
१५ परेश तव हुङ्कारात् नासावायोश्च वेगतः।
जलराशीयखातानि सुदृश्यान्यभवन् तदा।
भूमण्डलस्य मूलानि तदैवाविष्कृतानि च॥
१६ ऊर्द्ध्वस्थानान्निजं हस्तं स प्रसार्य्य ररक्ष मां।
बहुकीलालमध्यान्माम उद्धरन् निर्गृहीतवान्॥
१७ बलिष्ठेभ्यश्च वैरिभ्यः स मां रक्षितवान् तदा।
यतो हेतो र्बलाधिक्यात् दुर्जयास्ते ऽभवन् मया॥
१८ यदा ते मां समाक्राम्यन् आशङ्काजनके दिने।
तदानीं परमेशो ऽभून्ममालम्बनयष्टिका॥
१९ विस्तीर्णं स्थानमानीय तेनाहं रक्षितस्तदा।
मयि यस्मात् तदीया हि मनस्तुष्टिरजायत॥
२० मम धर्म्मानुसारान्मां प्रत्यकार्षीत् परेश्वरः।
मेध्यत्वात् करयो र्मह्यं यथायोग्यमदात् फलं॥
२१ यतो ऽहं परमेशस्य पदव्याः पथिको ऽभवं।
मदीशस्य विरुद्धश्च नापराधो मया कृतः॥
२२ सकलास्तस्य राजाज्ञा आसन् मज्ज्ञानगोचरे।
तदीयांश्च विधीन् मत्तो न व्यसर्जं कदाचन॥
२३ आसं तं प्रति निर्द्दोषः सावधानः स्वपातके॥
२४ तत्साक्षान्मम यो धर्म्मः करयो र्या च मेध्यता।
तद्योग्यं सुफलं मह्यं दत्तवान् परमेश्वरः॥
२५ दयालवे दयालुस्त्वं सज्जनाय च सज्जनः॥
२६ शुद्धाचाराय शुद्धस्त्वं कुटिलः कुटिलाय च॥
२७ रक्षी दीनप्रजानां त्वं पातयस्युच्चलोचनान्॥
२८ त्वं ज्वालयसि मद्दीपं मत्प्रभुः परमेश्वरः।
मामकीनमपि ध्वान्तम् उज्ज्वलं विदधाति हि॥
२९ त्वत्साहाय्येन शक्नोमि सैन्यमध्येन धावितुं।
मदीशस्योपकारेण प्राचीराण्यप्यहं प्लवे॥
३० स ईशो निर्म्मलाचारः परेशस्य वचः शुचि।

तदाश्रितमनुष्याणां सर्व्वेषां फलकश्च सः॥
तस्मात् परेश्वरादन्य ईश्वरः को हि वर्त्तते। ३१
अस्मदीयेश्वराद् भिन्नः कोऽचलो वा प्रविद्यते॥
स ईशश्च बलं मह्यं दत्तवान् कटिबन्धनं। ३२
पदवीं मामकीनाञ्च कृतवान् विघ्नवर्ज्जितां॥
मदीयौ चरणौ तेन मृगीपादसमौ कृतौ। ३३
संस्थापितश्च तेनैव मदीयोच्चपदेष्वहं॥
मदीयं हस्तयुग्मं स युद्धं कर्त्तुमशिक्षयत्। ३४
ततो मदीयबाहुभ्यां भग्नं ताम्रमयं धनुः॥
परित्राणस्वरूपं त्वं फलकं मे प्रदत्तवान्। ३५
तव दक्षिणहस्तेन चाहमस्मि स्थिरीकृतः।
त्वदीयनम्रभावेन सम्पन्ना चोन्नति मम॥
पादक्षेपस्थलं प्रस्तं मदधस्तात् त्वया कृतं। ३६
तस्मान्न विचलन्ति स्म चरणग्रन्थयो मम॥
मामकीनरिपूंश्चाहम् अनुधावन्नवाप्नवं। ३७
अविनाश्य समूलं तान् नो परावृत्तवांस्तदा॥
मया खण्डीकृतास्ते च पुनरुत्थातुमक्षमाः। ३८
न्यपतन् लम्बमाना हि मदीयपादयोरधः॥
त्वं युद्धार्थं बलं मह्यं दत्तवान् कटिबन्धनं। ३९
मामकीनविपक्षांश्च व्यदधा मद्वशीकृतान्॥
शत्रवो मे त्वया सर्व्वे कृता मत्तः पराङ्मुखाः। ४०
समूलञ्च मयोच्छिन्ना मानवा मां जिहिंसवः॥
अकुर्व्वन्नार्त्तरावं ते नासीत् कोऽप्युपकारकः। ४१
तेराहूतः परेशो ऽपि न प्रादात् किञ्चनोत्तरं॥
अचूर्णयं तदाहं तान् वायुचालितधूलिवत्। ४२
रथ्यास्थं कर्द्दमं यद्वत् प्राक्षिपञ्चावमन्य तान्॥
स्वजातीयविपक्षेभ्यस्त्वयैवाहं समुद्धृतः। ४३
भिन्नजातीयलोकानां मूर्ध्नि संस्थापितस्त्वया।
तेन लोका मदज्ञाताः कुर्व्वते मम सेवनं॥
कर्णाभ्यामेव येषाञ्च मया श्रुता जनश्रुतिः। ४४
परदेशीयलोकास्ते कीर्त्तयन्ति मम स्तुतिं॥

४५ क्षीणा विदेशिनो लोकाः स्वदुर्गेभ्यस्खलन्ति च ॥
४६ अमरः परमेशोऽस्ति धन्यो मे स शिलोच्चयः।
ईश्वरस्त्राणदाता मे भविष्यत्युन्नतः सदा ॥
४७ कृतवैरप्रतीकारं मां करोति स ईश्वरः।
दमयित्वा च तेनैव जातयो मद्वशीकृताः ॥
४८ मदीयद्वेषिलोकेभ्यस्त्वयाहं परिरक्षितः।
त्वं मदीयविपक्षेभ्योऽप्युन्नतं मां करिष्यसि।
दौरात्म्याचारिलोकाच्च मां त्वमेवोद्धरिष्यसि ॥
४९ अतोऽहं भिन्नजातीनां सन्निधौ परमेश्वर।
त्वत्स्तवं कीर्त्तयिष्यामि गास्यामि तव नाम च ॥
५० आत्मसम्बन्धिने राज्ञे त्वं महात्राणदायकः।
तस्मिन् त्वयाभिषिक्ते च दायूदि तस्य चान्वये।
सर्व्वकालं दयाचारस्त्वया कारिष्यते ध्रुवं ॥

---

# १९ ऊनविंशतितमं गीतं।

१ परमेशस्य महिमस्तस्य कर्म्मभिः प्रकाशनं ७ शास्त्रिण च तस्य पवित्रतायाः प्रकाशन।

वाद्यनियन्त्रे दातव्यं दायूदो धर्म्मगीतं।

१ नभोमण्डलमीशस्य महिमानं प्रशंसति।
तस्य हस्तकृतं कर्म्म वर्ण्यते गगनेन च ॥
२ दिनमेकं दिनञ्चान्यत् प्रति वार्त्ताप्रवाहकं।
एका निशा निशाञ्चान्यां प्रति ज्ञानप्रकाशिका ॥
३ नात्र गी नात्र वाक्यानि तेषां न श्रूयते रवः ॥
४ कृत्स्नं भूमण्डलं गत्वा ध्वनिस्तेषां प्रविष्टवान्।
जगतः प्रान्तभागे ऽपि तेषां वाच उपस्थिताः।
तत्र व्योम्नि स सूर्य्यस्य स्थापयामास मण्डपं ॥
५ स वरस्य समानश्च निर्गच्छन् वासगेहतः।
गन्तव्ये पथि धाविष्यन्नभिनन्दति वीरवत् ॥
६ व्योमान्तादुदयस्तस्य परिवृत्ति र्दिगन्तगा।
तस्य प्रतापतो गुप्तं वस्तु किञ्चिन्न विद्यते ॥

शास्त्रं सिद्धं परेशस्य मनसः परिवर्त्तकं। ७
साक्ष्यं सत्यं परेशस्य ज्ञानदञ्चाल्पमेधसे॥
विधयः परमेशस्य न्याय्याश्चित्तस्य नन्दनाः। ८
आज्ञा शुद्धा परेशस्य नेत्रयो र्दीप्तिवर्द्धिनी॥
परमेशाच्च या भीतिः सा शुचि र्नित्यवर्त्तिनी। ९
राज्यनीतिः परेशस्य सत्या साध्वी च सर्व्वथा॥
वाञ्छनीया सुवर्णात् सा कनकात् प्रचुरादपि। १०
सुस्वादी पुष्पनिर्यासात् मधुवासस्य वा रसात्॥
अयं त्वदीयदासोऽपि भवत्येतैः सुशिक्षितः। ११
एतेषां पालनादेव लाभश्चोत्पद्यते महान्।
स्वभ्रमाः केन बुध्यन्ते गुप्तापेभ्यो विमुञ्च मां॥ १२
गर्व्वजेभ्योऽपि दोषेभ्यो निजदासं निवारय। १३
ममोपर्य्याधिपत्यं ते मा कुर्व्वन्तु कदाचन।
तेन सिद्धो भविष्यामि महापातकतः शुचिः॥
परमेश्वर मद्दुर्ग मत्त्रातस्तव दृष्टये। १४
रोचन्तां मम वक्त्रस्य वाचो ध्यानञ्च हृद्गतं॥

---

# २० विंशतितमं गीतं।

१ राज्ञः कृते प्रजानां प्रार्थनं ६ तस्योत्तरं ७ परमेश्वरे प्रजानां प्रत्याशा च।

वाद्यनियन्त्रे दातव्यं दायूदो धर्म्मगीतं।

परमेशो विपत्काले गृह्णातु प्रार्थनां तव। १
याकूबीयेशितु र्नाम त्वां करोतु समुन्नतं॥
स प्रेषयतु साहाय्यं त्वत्कृते धर्म्मधामतः। २
सियोनाद्री समास्थाय त्वां करोतु च सुस्थिरं॥
त्वदीयान् उपहारांश्च सकलाननुचिन्तयेत्। ३
तव हव्यबले दानमपि तेनानुगृह्यतां॥ सेला॥
तव यद्यन्मनोऽभीष्टं तत्तत् तुभ्यं ददातु सः। ४
विदधातु कृतार्थांश्च सकलां तव मन्त्रणां॥
वयं तव परित्राणात् करिष्यामो जयध्वनिं। ५

ध्वजस्तोन्नामयिष्यामः स्वकीयेशस्य नामनि।
त्वदीयाः प्रार्थनाः सर्व्वाः साधयेत् परमेश्वरः॥
६ नरं स्वेनाभिषिक्तं यत् त्रायते परमेश्वरः।
तदिदानीमहं जाने स स्वपूतदिवि स्थितः।
तदीयप्रार्थनां श्रुत्वा सफलां विदधाति हि।
निजदक्षिणहस्तस्य त्राणदैः शौर्य्यकर्म्मभिः॥
७ स्यन्दनान् कीर्त्तयन्तीमे तुरङ्गान् कीर्त्तयन्त्यमी।
निजप्रभोः परेशस्य नामास्माभिस्तु कीर्त्त्यते॥
८ ते नत्वा पतिता जाता वयमुत्थाय सुस्थिराः॥
९ परेश त्राहि रक्षातु राजास्मान् प्रार्थनादिने॥

---

## २१ एकविंशतितमं गीतं।

१ जयस्य निमित्तम् ईश्वरस्य धन्यवदनं ८ उपकारार्थं तस्मिन् प्रत्याशा च

वाद्यनियन्त्रे दातव्यं दायूदो धर्म्मगीतं।

१ हे परेश्वर शक्त्या ते ह्लादते पृथिवीपतिः।
कीदृशस्त्वत्परित्राणाद् आनन्दस्तस्य जायते॥
२ यद्यत् तस्य मनोऽभीष्टं तत् त्वं तस्मै वितीर्णवान्।
ओष्ठाभ्यामीरिता तस्य वाञ्छा नापहृता त्वया॥ सेला॥
३ आशीर्व्वादैः शुभैस्तस्य विस्मयो जनितस्त्वया।
जातरौप्यः किरीटश्च स्थापितस्तस्य मस्तके॥
४ जीवनं याचितस्तेन त्वं तस्मै दत्तवान् वरं।
अनन्तकालमानञ्च दीर्घत्वं परमायुषः॥
५ तावकीनपरित्राणात् सुमहत् तस्य गौरवं।
महिमा च प्रतापश्च त्वया तस्मिन् समर्पितौ॥
६ नित्याशीर्व्वादपात्रार्थं स त्वया विनिरूपितः।
तव वक्त्रप्रसादाच्च स हर्षेण प्रफुल्लितः॥
७ यतो हेतो महीपालः श्रद्दधाति परेश्वरं।
स च सर्व्वोपरिस्थस्य कृपया न स्खलिष्यति॥
८ त्वत्करेण धरिष्यन्ते सकलास्तव वैरिणः।

तव दक्षिणहस्तेन धरिष्यन्ते ऽरयस्तव ॥
त्वं निजक्रोधदृष्ट्या तान् करिष्यस्यग्निचुल्लिवत्। ९
परमेशः स्वकोपेन तान् सर्व्वान् सङ्ग्रसिष्यते।
इन्धनानि यथा तद्वत् तान् भक्षिष्यति पावकः ॥
त्वं तेषां फलमुच्छिद्य भुवनाद्द्वयिष्यसि। १०
नरसन्तानमध्ये च तेषां वंशोऽपि लोप्स्यते ॥
यस्मात् त्वत्प्रातिकूल्येन ते दौरात्म्यं न्यरूपयन्। ११
कुसङ्कल्पमकुर्व्वंश्च न च साद्धमशक्नुवन् ॥
यतो हेतोः करिष्यन्ते ते त्वयैव पराङ्मुखाः। १२
तेषामास्यदिशि ज्यायां त्वं शरान् योजयिष्यसि ॥
परमेश त्वमुत्कृष्टो निजविक्रमहेतुतः। १३
गानवाद्ये करिष्यामो वयं त्वच्छौर्य्यकारणात् ॥

---

## २२ द्वाविंशतितमं गीतं।

१ खीष्टस्य विलापः १९ प्रार्थना च २२ प्रशंसनञ्च।

वाद्यनियन्त्रे दातव्यम् अरुणमृगीनामकस्वरयुक्तं दायूदो धर्म्मगीतं।

हे मदीश मदीश त्वं मां परित्यक्तवान् कुतः। १
दूरे तिष्ठन् मम त्राणात् क्रन्दनाच्च मयेरितात् ॥
दिवाह्वये मदीश त्वञ्चोत्तरं न प्रयच्छसि। २
आह्वये क्षणदायाञ्च शान्तिं नाप्नोमि काञ्चन ॥
पूतस्त्वं राजमञ्चस्ते चेस्रायेला कृताः स्तवाः। ३
अकारि त्वयि विश्वासो ऽस्माकं पूर्व्वीयपूरुषैः। ४
अकारि तैर्हि विश्वासो रक्षितास्च त्वयैव ते ॥
त्वामुद्दिश्याह्वयन्तस्ते सम्प्राप्ताः परिरक्षणं। ५
कृत्वा त्वय्येव विश्वासमभवन् लज्जिता न ते ॥
किन्त्वहं कृमिसङ्काशो न गण्यो मानवेष्वपि। ६
निन्दनीयो मनुष्याणां प्रजाभिस्चापमानितः ॥
यावन्तो मां निरीक्षन्ते ते सर्व्वे विहसन्ति मां। ७
वक्रीकृत्याधरौ मूर्द्धञ्चालयन्ति च मां प्रति ॥

८ परमेशे ऽर्पयन् भारमसौ तेनैव रक्ष्यतां।
असौ निस्तार्य्यतां तेन यतस्तस्मै हि रोचते॥
९ किञ्च त्वं जननीगर्भान्मां समुद्धृतवान् पुरा।
आसीर्विश्वासभूमिस्त्वं मे मातृस्तन्यपायिनः॥
१० गर्भकोषाच्च निष्क्रान्तस्त्वय्येवाहं समर्पितः।
आ मातृकुक्षिवासाच्च त्वमेवासि मदीश्वरः॥
११ मत्तो दूरे न वर्त्तस्व यतो दुःखमुपस्थितं।
उपकारी च कुत्रापि कोऽपि नो विद्यते मम॥
१२ बहुभिर्वृषभैश्चाहं समन्तात् परिवेष्टितः।
वाशनीयबलीवर्द्दैर्बलिष्ठैरहमावृतः॥
१३ मामुद्दिश्य स्ववक्त्राणां व्यादानं ते च कुर्व्वते।
पशोर्विदारणेच्छातो गर्ज्जयन् केशरी यथा॥
१४ अहं तोयवदुत्सृष्टो मदस्थीनि स्रयानि च।
मधूच्छिष्टसमं चित्तं द्रवीभूतं मदन्तरे॥
१५ मद्बलं भाण्डवच्छुष्कं लग्ना जिह्वा च तालुनि।
कालधर्म्मस्य धूलौ च त्वयैवाहं निपातितः॥
१६ मां श्वानः परिवृण्वन्ति खलसङ्घश्च वेष्टते।
छिदितं पाणियुग्मञ्च पादयुग्मञ्च तैर्मम॥
१७ गणयामि मदस्थीनि ते मां पश्यन्ति लोचनैः॥
१८ मामकीनानि वस्त्राणि स्वमध्ये विभजन्ति ते।
मम परिच्छदार्थञ्च गुटिकां पातयन्ति हि॥
१९ हे परेश भवान् मत्तो दूरवर्त्ती न तिष्ठतु।
मदीयशक्तिदातस्त्वम् उपकर्त्तुं त्वरस्व मां।
२० मत्प्राणान् खड्गतो रक्ष दीनं चेतः शुनः करात्॥
२१ त्रायस्व सिंहवक्त्रान्मां मत्तातः खड्गिशृङ्गतः॥
२२ प्रशंसिष्यामि ते नाम निजभ्रातृगणं प्रति।
समितेर्मध्यसंस्थो ऽहं करिष्यामि तव स्तवं॥
२३ हे हे परेशितु र्भक्ता यूयं तं समभिष्टुत।
हे याकूबो ऽखिला वंशा यूयं तं हि समर्चत।
इस्रायेलो ऽखिला वंशा यूयं तस्माद् बिभीत च॥
२४ यतः स दुःखिनो दुःखं नावजानादुपेक्षया।

स्वास्यं तस्मादनाच्छाद्य सोऽकथयीत् तस्य दवनं।
त्वामुद्दिश्य करिष्यामि महासंसद्यहं स्तुतिं। १५
त्वद्भक्तानां समक्षे च शोधयिष्यामि मे व्रतान्।
अन्नं सम्भक्ष्य तप्स्यन्ति मानवा नम्रचेतसः॥ १६
स्तोष्यते परमेशश्च परमेशार्थिभि र्जनैः।
युष्माकमन्तरात्मा च नित्यजीवी भविष्यति॥
पृथिवीप्रान्तभागस्थैः सर्व्वैः कृत्वानुचिन्तनं। १७
परमेश्वरमुद्दिश्य परावृत्तिः करिष्यते॥
भिन्नजातीयलोकानां सकलानि कुलानि च।
भवतः सम्मुखे नत्वा करिष्यन्त उपासनां॥
यस्माद्राज्यं परेशस्य भिन्नजातिषु शास्ति सः॥ १८
पृथिवीवासिनां मध्ये यावन्तः पुष्टमानवाः। १९
अन्नं सम्भक्ष्य ते सर्व्वे करिष्यन्त उपासनां॥
धूलिमध्ये ऽवरोहन्तः प्राणरक्षणवर्जिताः।
यावन्तो मानवास्ते ऽपि प्रणंस्यन्ति मुखं तव॥
अन्ववायेन चैकेन तव सेवा विधास्यते। ३०
तेन कारिष्यते नित्यं प्रभुमुद्दिश्यकीर्त्तनं॥
ते च जनिष्यमाणानां नृणां मध्य उपस्थिताः। ३१
तस्य धर्म्मं गदिष्यन्ति यस्मात् सिद्धीचकार सः॥

---

## २३ त्रयोविंशं गीतं।

पालकं परमेश्वरं प्रति प्रत्याशा।

दायूदो धर्म्मगीतं।

पालको ऽस्ति परेशो मे न भविष्यामि दुर्गतः॥ १
स मां हरितशष्पेषु क्षेत्रेषु शाययिष्यति। २
सुशान्तानां जलानाञ्च पार्श्वे मां चारयिष्यति॥
जीवयिष्यति मत्प्राणान् माञ्च स्वनामहेतुना। ३
धर्म्मरूपेषु मार्गेषु गमनं कारयिष्यति॥
मृत्युच्छायास्वरूपेण कन्दरेण व्रजन्नपि। ४

न भेष्याम्यापदो यस्मात् मत्सङ्गी त्वं भविष्यसि।
तव दण्डेन यष्ट्या च सान्त्वना मे जनिष्यते॥
५ ममारीणां समक्षं त्वं भोज्यं मे रचयिष्यसि।
त्वत्तस्तैलाक्तशीर्षोऽहं मत्कंसश्च समाप्लुतः॥
६ यावज्जीवञ्च मां क्षेमं दया चानुचरिष्यतः।
दीर्घकालञ्च वत्स्यामि परमेशस्य मन्दिरे॥

---

## २४ चतुर्विंशं गीतं।

१ परमेश्वरस्य राजत्वं २ तदीयलोकानां वर्णनं ७ तदीयग्रहणीयलोकानां निवेदनं।

दायूदो धर्म्मगीतं।

१ आस्ते वसुन्धरा तस्याः पूरकञ्च परेशितुः।
तस्यैव जगती कृत्स्ना संहिता तन्निवासिभिः॥
२ यस्मात् सा स्थापयाञ्चक्रे तेन कीलालराशिषु।
सरितामुपरिष्टाच्च सा तेनैव विनिर्म्ममे॥
३ पर्व्वतं परमेशस्य समारोक्ष्यति को जनः।
कः करिष्यत्यवस्थानं तदीयधर्म्मधाम्नि वा॥
४ यस्य हस्तद्वयं शुद्धं यस्य चित्तञ्च निर्म्मलं।
न प्रवृत्तं मनोऽसारे न जातः शपथश्छलात्॥
५ शुभाशिषं मनुष्यः स लप्स्यते परमेश्वरात्।
स समाप्स्यति पुण्यञ्च निजत्राणाकरेश्वरात्॥
६ एतादृशो भवेद्वंशस्तवान्वेषणकारिणां।
ये तवास्यं दिदृक्षन्ते ते याकूबीयजातयः॥ सेला॥
७ भो भो द्वाराणि युष्माभिरुन्नम्यन्तां शिरांसि हि।
चिरस्थायिकवाटानि यूयं यात समुच्छ्रयं।
सुमहामहिमा राजा विदधातु प्रवेशनं॥
८ सुमहामहिमा राजा योऽसौ को नु भवेत् स वा।
परमेशो बली शूरो युद्धवीरः परेश्वरः॥
९ भो भो द्वाराणि युष्माभिरुन्नम्यन्तां शिरांसि हि।

चिरस्थायिकवाटानि यूयं यात समुच्छ्रयं।
सुमहामहिमा राजा विदधातु प्रवेशनं॥
सुमहामहिमा राजा योऽसौ को नु भवेत् स वा। १०
सैन्याध्यक्षः परेशो यः स महामहिमा प्रभुः॥

---

## २५ पञ्चविंशं गीतं।

इब्रीयभाषया ककारादिगीतेन पापमार्ज्जनार्थमुपकारार्थञ्च दायूदः प्रार्थना।

दायूदो गीतं।

त्वामुद्दिश्य परेशाहम् उन्नयामि निजं मनः॥ १
श्रद्दधामि मदीश त्वां लज्जा मा सम्भवेन्मम। २
न करोतु मम द्वेषी जयगर्व्वञ्च मामधि॥
त्वामाकाङ्क्षन्ति यावन्तो व्रीडितत्वं न यान्ति ते। ३
निर्निमित्तछलाचारा ये समाप्स्यन्ति ते त्रपां॥
त्वं परेश निजान् मार्गान् मां ज्ञापयितुमर्हसि। ४
देहि सुशिक्षणं मह्यं स्वकीयाः पदवीरधि॥
यापयन् मां स्वसत्येन देहि मह्यं सुशिक्षणं। ५
त्वं त्राणाकर ईशो मे त्वामाकाङ्क्षाम्यहं सदा॥
हे परेश निजं स्नेहं विविधाञ्च दयां स्मर। ६
यस्मादनादिकालात् सा विद्यमाना प्रकाशते॥
मम बाल्यस्य पापानि मम दोषांश्च मा स्मर। ७
स्मर स्वीयकृपातो मां सद्भावेन परेश ते॥
सद्भावः सरलात्मा च विद्यते परमेश्वरः। ८
तस्मात् पापिमनुष्यान् स बोधयिष्यति सत्पथं॥
नम्रलोकान् स धर्म्मेण गमनं कारयिष्यति। ९
दास्यते नम्रलोकेभ्यः स्वमार्गस्याधि शिक्षणं॥
ये लोका नियमादेशौ तस्याचरन्ति तान् प्रति। १०
परमेशस्य पन्थानः सर्व्वे सत्यदयामयाः॥
हे परेश स्वकीयस्य नामधेयस्य कारणात्। ११
त्वं क्षमस्वापराधं मे यस्मात् सोऽस्ति महत्तमः॥

१२ परमेश्वरतो भीतो मानवः कः प्रविद्यते।
यः पन्था तेन धर्त्तव्यस्तं स तं दर्शयिष्यति॥
१३ क्षेमे वत्स्यन्ति तत्प्राणास्तद्वंशो भोक्ष्यते धरां॥
१४ परमेशस्य सौहार्द्दं तद्भक्तेष्वेव वर्त्तते।
तस्य यो नियमस्तं स तानेव ज्ञापयिष्यति॥
१५ परमेशमपेक्षेते मम नेत्रे निरन्तरं।
यस्मात् स एव मत्पादावुद्धरिष्यति जालतः॥
१६ मां निरीक्ष्यानुकम्पस्वानाथो दीनो यतोऽस्म्यहं॥
१७ विरुद्धं मे मनोदुःखं त्वं मां कष्टेभ्य उद्धर॥
१८ वीक्षस्व दैन्यदुःखे मे सर्व्वाघानि क्षमस्व मे॥
१९ अवलोकय मद्द्वेष्टॄन् यस्मात् ते बहुसंख्यकाः।
ते च दौरात्म्ययुक्तेन द्वेषेण प्रद्विषन्ति मां॥
२० मामकीनात्मनो रक्षां कुरु माञ्च समुद्धर।
मा सम्भवतु लज्जा मे यस्मात् त्वां श्रद्दधाम्यहं॥
२१ रक्षतां सिद्धिसारल्ये मां यतस्त्वदपेक्ष्यहं॥
२२ ईश त्वं सर्व्वदुःखेभ्य इस्रायेलं विमोचय॥

---

## २६ षड्विंशं गीतं।

दायूदः सरलत्वं प्रार्थनञ्च।

दायूदो गीतं।

१ परमेश्वर धर्म्मं मे भवान् निर्णेतुमर्हति।
यतो ऽहं सरलाचारः परेशं शरणं गतः।
न कदाचन तस्मान्मे स्खलनं सम्भविष्यति॥
२ मां परेशानुसन्धेहि मत्परीक्षां विधेहि च।
मानसं मम चित्तञ्च निर्म्मलीक्रियतां त्वया॥
३ यस्मात् तव दया नित्यमस्ति मद्दृष्टिगोचरे।
त्वदीयसत्यमार्गेण गमनञ्च करोम्यहं॥
४ नरैरसारतासक्तैः सार्द्धं नोपविशाम्यहं।
छद्मयुक्तमनुष्याणां सभां न प्रविशामि च॥

समाजो दुश्चरित्राणां घृणार्हो मन्यते मया। ५
दुष्टानाञ्च समीपे ऽहं न करोम्युपवेशनं॥
शुद्धतारूपतोयेन क्षालयित्वा निजौ करौ। ६
वेदिं प्रदक्षिणीकुर्व्वन् तव हे परमेश्वर॥
उच्चमुच्चेन शब्देन कीर्त्तयामि तव स्तवान्। ७
तवाश्चर्य्याणि कर्म्माणि सर्व्वाणि कथयामि च॥
अहं परेश सम्प्रीये त्वदीयावासवेश्मनि। ८
तस्मिन्नेव स्थले यत्र महिमा ते ऽधितिष्ठति॥
मा संहर मम प्राणान् पापिभि र्मानवैः सह। ९
जीवितं मम वा लोकै रक्तपातप्रियैः सह॥
येषां हस्ताश्छलाधाराः पाणिश्चोत्कोचपूरितः॥ १०
किन्त्वहं सरलाचारी मां त्रायस्व दयस्व च॥ ११
चरणं मामकीनं तु समाने तिष्ठति स्थले। १२
अहं समाजमध्ये च त्वां स्तोष्यामि परेश्वर॥

---

## २७ सप्तविंशं गीतं।

परमेश्वरं प्रति दायूदः प्रत्याशा प्रेमा प्रार्थना च।

दायूदो गीतं।

ज्योतिस्त्राणं परेशो मे कस्माद् भेष्याम्यहं पुनः। १
प्राणस्थैर्य्यं परेशो मे कस्मात् प्राप्स्यामि साध्वसं॥
दुश्चरित्रा मनुष्या ये पीडका द्वेषिणश्च मे। २
ते यदा मामुपातिष्ठन् मम मांसं बुभुक्षवः।
तदानीं स्खलनं गत्वा न्यपतन् स्वयमेव ते॥
शिविरेणापि रुद्धस्य मम चित्तं न भेष्यति। ३
मद्विरुद्धं रणे जातेऽप्यहं स्थास्यामि निर्भयः॥
परमेशादयाचेऽहं वरमेकं मयेप्सितं। ४
यावज्जीवं परेशस्य मन्दिरे निवसन्नहं।
शोभां परेशितु र्दृष्ट्वा ध्यातुं वाञ्छामि तद्गृहे॥
यस्मान्निजोटजे मां स गोपयिष्यति दुर्द्दिने। ५

खदूष्यस्य रहःस्थाने माञ्च प्रच्छादयिष्यति।
शिलोच्चयोपरिष्टाच्च मामध्यारोपयिष्यति॥
६ चतुर्द्दिक्स्थरिपुभ्यो मे ह्युन्नमत्यधुना शिरः।
तस्माद् दास्यामि तद्दूष्ये हर्षनादैर्बलीनहं।
करिष्यामि परेशस्य स्तुतये गानवादनं॥
७ शृणु मे परमेश त्वं स्वरवेणाह्वमाङ्कये।
मां त्वमेवानुकम्पस्व देहि त्वं मह्यमुत्तरं॥
८ मद्वक्त्रं मार्गतेत्युक्त्वा पाथ्यते मन्मनस्त्वया।
अन्वेषिष्याम्यहं तस्मात् तव वक्त्रं परेश्वर॥
९ स्वकीयं वदनं मत्तो न समाच्छाद्यतां त्वया।
मा क्रुद्धापास्य ते दासं त्वं मदीयोपकारकः।
मा परित्यज मा प्रोज्झ मां मत्त्राणकरेश्वर॥
१० पित्रा मात्रा च सन्त्यक्तं मां परेशो ग्रहीष्यति॥
११ त्वं परेश स्ववर्त्मानि मां ज्ञापयितुमर्हसि।
ममारीणां निमित्तं माम् ऋजुमार्गेण यापय॥
१२ माञ्च त्वं मद्विपक्षाणां स्वेच्छायां न समर्पय।
यतो हेतो र्विरुद्धं मे साक्षिणोऽनृतवादिनः।
छलोद्गीरकलोकाश्च समुत्तिष्ठन्ति सर्व्वतः॥
१३ परमेशस्य सौजन्यं वीक्षिष्ये जीवतां भुवि।
करोम्येतादृशीमाशां न चेत् किं मम मङ्गलं॥
१४ परमेशं प्रतीक्षस्व त्वमित्थं बलवान् भव।
सुस्थिरश्चास्तु ते चित्तं प्रतीक्षस्व परेश्वरं॥

---

## २८ अष्टाविंशं गीतं।

१ आत्मनो निमित्तम् आत्मीयलोकानाञ्च निमित्तं दायूदः प्रार्थना ६ परमेश्वरस्य धन्यवदनञ्च।

दायूदो गीतं।

१ त्वामुद्दिश्य मयाह्वानं क्रियते परमेश्वर।
हे मदीयगिरे त्वं मां प्रति मा भव नीरवः॥

नो चेत् त्वं यदि निःशब्दो भवे मां प्रति साम्प्रतं।
तर्हि गर्त्तेऽवरूढानां यास्यामि तुल्यतामहं॥
त्वमाकर्णय काकूक्तिं त्वां प्रति क्रन्दतो मम। २
पवित्रञ्च त्वदागारं प्रत्युत्तोलयतः करौ॥
मापसारय मां दुष्टै मां वा कुकर्म्मभिः सह। ३
मित्रं प्रति प्रियालापैश्चित्ते दौर्जन्यकल्पकैः॥
यादृगस्ति क्रिया तेषां चरित्रस्य च दुष्टता। ४
फलदानं त्वया तेभ्यस्तादृगेव विधीयतां॥
हस्तानां कर्म्मणो योग्यं फलं तेभ्यो वितीर्य्यतां।
आचारो यादृशस्तेषां तादृशं कुरु तान् प्रति॥
यतो हेतो र्मनुष्यास्त आचारान् परमेशितुः। ५
तस्य वा हस्तयोः कर्म्म न पर्य्यालोचयन्ति हि।
तस्मादुत्पाटनं तेषां न वृद्धिं स करिष्यति॥
धन्यः परेश्वरो यस्मात् काकूक्तिं मम सोऽशृणोत्॥ ६
बलं मे परमेशोऽस्ति फलकश्च स एव मे। ७
मच्चित्तं व्यश्वसत् तस्मिन् अहञ्चोपकृतोऽभवं।
तस्माद् हृष्यति मे चित्तं मद्गीतैः स्तोष्यते च सः॥
बलमस्ति स्वकीयानां प्रजानां परमेश्वरः। ८
स्वीयाभिषिक्तलोकस्य दुर्गञ्च त्राणदायि सः॥
त्वं त्रायस्व निजांल्लोकान् स्वाधिकारे वदाशिषं। ९
चारयंश्च सदाकालं तान् विधेहि समुन्नतान्॥

---

## २९ ऊनत्रिंशत्तमं गीतं।

मेघगर्जनेनेश्वरस्य महिम्नः प्रकाशनं।

दायूदो धर्म्मगीतं।

परमेशस्य युष्माभि र्हे पराक्रमिणां सुताः। १
परमेशस्य युष्माभिः स्तूयेतां बलगौरवे॥
यूयञ्च परमेशस्य नाम्नोऽभिस्तुत गौरवं। २
परेशाय प्रणामञ्च कुरुध्वं पूतशोभया॥

३ परमेशस्य निर्घोषः सलिलान्यधितिष्ठति।
सुमहामहिमा चेशो मेघनादं करोति हि।
राशीकृतानि तोयानि परमेशोऽधितिष्ठति॥
४ परमेशस्य निर्घोषो विद्यते सपराक्रमः।
परमेशस्य निर्घोषो विद्यते हि प्रतापवान्॥
५ परमेशस्य निर्घोषस्तरुराजविदारकः।
प्रभनक्त्येरसाख्यान् द्रून् लिवानोने परेश्वरः॥
६ स नर्त्तयति तान् शालान् धेनूनां शावकानिव।
लिवानोनशिरीयोणौ गिरी च खड्गिवत्सवत्॥
७ परमेशस्य निर्घोषो वह्निजिह्वाविभेदकः॥
८ परमेशस्य निर्घोषान्मरुभूमिः प्रवेपते।
वेपते परमेशाच्च कादेशीयं मरुस्थलं॥
९ परमेशस्य निर्घोषो हरिणीः सावयत्यपि।
अरण्यानि च तेनैव निष्पत्राणि भवन्ति हि।
तत्प्रासादे स्थितं सर्व्वं गौरवञ्च प्रशंसति॥
१० आसीत् सिंहासनासीनो जलाप्लावे परेश्वरः।
राजवच्च सदासीनः संस्थाता परमेश्वरः॥
११ स्वप्रजाभ्यः परेशेन दीयते हि पराक्रमः।
स्वप्रजाभ्यः परेशेन दीयते शान्तये वरः॥

---

## ३० त्रिंशत्तमं गीतं।

१ विपदो निस्तारनिमित्तं धन्यवदनं ४ अनुग्रहप्राप्तिनिमित्तम् ईश्वरसन्निधौ धन्यवदनं प्रार्थनञ्च।

गृहप्रतिष्ठाकाले दायूदा कृतं गानार्थकं धर्म्मगीतं।

१ प्रशंसामि परेश त्वां यतोऽहं प्रोद्धृतस्त्वया।
मद्रिपुभ्यश्च मेऽरीणां त्वया हर्षो निवारितः॥
२ मत्प्रभो परमेशाहं त्वामुद्दिश्यारुवं पुरा।
तदानीञ्च त्वयैवाहं स्वस्थतामाप्नवं पुनः॥
३ त्वं परेश्वर मत्प्राणान् परलोकाद् उदानयः।

गर्त्तमध्ये ऽवरोहन्तं माच त्वं समजीजिवः॥
गीयतां परमेशाय युष्माभिस्तस्य साधुभिः। ४
तस्य पवित्रतायाश्च स्मरणे क्रियतां स्तुतिः॥
तत्कोपेन क्षणं दुःखं तत्प्रसादेन जीवनं। ५
रोदनं क्षणदायाथि प्रात र्हर्षो ऽनुगच्छति॥
सम्पत्काले मयेत्युक्तं न स्खलिष्यामि कर्हिचित्॥ ६
परमेश प्रसादात् ते स्थापितो मद्गिरि र्दृढं। ७
किन्तु त्वया निजे वक्त्रे छादिते व्याकुलो ऽभवं॥
त्वामुद्दिश्य परेशाहम् आह्वानं कृतवान् तदा। ८
अकुर्व्वं परमेशञ्च प्रतीदं परिदेवनं॥
शोणिते मम को लाभः को मे गर्त्तावरोहणे। ९
रजसा किं तव स्तोत्रं सत्यं वा कीर्त्तयिष्यते॥
परमेश त्वयाकर्ण्य करुणा क्रियतां मयि। १०
क्रियताञ्चोपकारो मे त्वया हे परमेश्वर॥
त्वं शोकं मे ऽकरो नृत्यं शाणवस्त्रं विमोच्य मे। ११
मह्यमानन्दरूपञ्च प्राददाः कटिबन्धनं॥
तुभ्यं मे मनसः गानं प्रकर्त्तव्यममौनिना। १२
मत्प्रभो परमेशाहं त्वां नंविष्यामि सर्व्वदा॥

---

## ३१ एकत्रिंशं गीतं।

१ उपकारार्थं परमेश्वरस्य सन्निधौ प्रार्थनं १४ अनुग्रहस्य निमित्तं प्रशंसनञ्च।

वाद्यनियन्त्रे दातव्यं दायूदो धर्म्मगीतं।

अद्धामि परेश त्वां मम लज्जा कदाचन। १
मा भवेत् त्वं स्वधर्म्मेण मम रक्षां कुरुष्व हि॥
मयि कर्णं निधत्स्व त्वं मामुद्धर्त्तुं त्वरस्व च। २
मदीयाश्रयशैलस्त्वं रक्षादुर्गश्च मे भव॥
यस्मात् त्वमेव मच्छैलो मम दुर्गश्च विद्यसे। ३
त्वं स्वनामनिमित्तं मां यापयन् चारयिष्यसि॥
उद्धरिष्यसि तै र्गुप्ताज्जालान्मां त्वं ममाश्रयः। ४

५ अहं स्वकीयमात्मानं निक्षिपामि करे तव।
मम त्राता परेशासि त्वं हे सत्यमयेश्वर॥
६ असाराणां अलीकानां वस्तूनां सेवकान् मया।
गर्हमाणेन विश्वासः क्रियते परमेश्वरे॥
७ तावकीनप्रसादेऽहम् आनन्दाम्युल्लसामि च।
यस्मात् त्वं वीक्ष्य मे क्लेशं रक्षितवानस्तु मे मनः॥
८ न समर्पितवान् बद्धं मां विपक्षस्य हस्तयोः।
किन्तु विस्तारिते स्थाने मम स्थापितवान् पदं॥
९ त्वं परेशानुकम्पस्व मां यस्मादहमुद्विजे।
कातर्य्येण विशीर्य्यन्ते मन्नेत्रप्राणकुक्षयः॥
१० गतं मे जीवितं शोकाद् दीर्घश्वासाच्च मे वयः।
मत्पापान्मे बलं क्षीणं शीर्णानि कीकसानि च॥
११ मदरातिसमूहेन निन्दापात्रमहं कृतः।
अतिनिन्द्यं स्वमित्राणाम् आत्मीयानाञ्च भीषणं।
ये मां पश्यन्ति मार्गे ते पलायन्ते मदन्तिकात्॥
१२ अस्मृतोऽहं भवामि स्म प्रेतवन्मानसाच्युतः।
कस्यचिन्नष्टकल्पस्य भाजनस्य समोऽभवं॥
१३ निन्दां शृणोम्यनेकेषां सर्व्वतो वर्त्तते भयं।
यस्मान्मत्प्रातिकूल्येन मन्त्रयन्ते समेत्य ते।
मम प्राणविनाशार्थं कुर्व्वते च कुकल्पनां॥
१४ अहन्तु त्वयि विश्वासं कुर्व्वे हे परमेश्वर।
ईश्वरो मे त्वमेवासि वाक्यमेतद् ब्रवीमि च॥
१५ तव हस्ते हि विद्यन्ते समयाः सकला मम।
द्वेषिणां बाधकानाञ्च करेभ्यो मां त्वमुद्धर॥
१६ एतस्मिन् तव दासेये प्रसन्नवदनो भव।
तावकीनप्रसादेन मम त्राणं विधेहि च॥
१७ लज्जा मे मा भवेद् यस्मात् त्वां परेशाह्वमाह्वये।
दुष्टानां सम्भवेल्लज्जा नरके चास्यबन्धनं॥
१८ स्तब्धवाचोऽभिजायन्ताम् ओष्ठा निःसत्यवादिनः।
अहङ्कारावमानाभ्यां धार्म्मिके दर्पभाषिणः॥
१९ किं महत् तव सौजन्यं त्वद्भक्तानां कृते चितं।

त्वदाश्रितेषु चाभ्यस्तं नरवंशस्य सम्मुखे ॥
स्वमुखस्याश्रयेण त्वं विद्रोहाच्छादयन् न्टणां। १०
रसनानां विवादात् तान् उटजे गोपयिष्यसि ॥
परमेशो भवेद् धन्यो यस्मात् तेनैव मां प्रति। २१
प्राकाश्यत महाश्चर्य्या करुणा नगरे दृढे ॥
अहं त्वद्दृष्टितश्छिन्न इत्युद्वेगान्मयोदितं। २२
त्वया त्वाश्माविः खेदोक्तिस्त्वां प्रति क्रन्दतो मम ॥
प्रीयध्वं परमेशे हि सकलास्तस्य साधवः। २३
विश्वास्यानां मनुष्याणां रक्षितास्ति परेश्वरः।
प्रचुरञ्च फलं तेन गर्व्वाचाराय दीयते ॥
जायध्वं बलिनः सर्व्वे हे परेशप्रतीक्षिणः। २४
स हि चित्तानि युष्माकं सुदृढानि करिष्यति ॥

---

# ३२ द्वात्रिंशं गीतं।

१ पापक्षमातः सुखस्य निर्णयः ३ क्षमार्थं खेदस्य पापस्वीकारस्य च प्रयोजनं ८ तस्य फलञ्च।

दायूद उपदेशगीतं।

धन्यं वदामि मुक्ताघं यस्य पापं तिरोहितं ॥ १
धन्यः स मानवो यस्य दोषाणां गणना नहि। २
क्रियते परमेशेन यस्यात्मा छलवर्ज्जितः ॥
अहं रुद्धमुखोऽतिष्ठं तदानीन्त्वखिलं दिनं। ३
कुर्व्वतो मम काकूक्तिं कीकसान्याप्नुवन् क्षयं ॥
गुरुरासीत् दिवारात्रं तव हस्तो ममोपरि। ४
व्यकारि मम हृत्पिण्डं ग्रीष्मकालिकतापतः ॥ सेला ॥
ततः परं निजं पापं मया तुभ्यं निवेदितं। ५
स्वापराधमनाच्छाद्य मयेदमीरितं वचः।
स्वदोषान् स्वीकरिष्यामि परमेशस्य सम्मुखे।
मम पापस्य दोषित्वं त्वमेवाक्षमयास्तदा ॥ सेला ॥
इतो हेतो यदा प्राप्तुं मानवैः प्राप्यते भवान्। ६
तदानीं साधुरेकैकस्त्वां प्रति प्रार्थयिष्यते।

जाते महाजलाप्लावे स्पृश्यते नहि तेन सः ॥
७ ममाश्रयस्त्वमेवासि त्वं मां क्लेशादविष्यसि।
रक्षाकीर्त्तनगीतैश्च त्वं मां संवेष्टयिष्यसि ॥ सेला ॥
८ अहं त्वामुपदेक्ष्यामि गन्तव्यं वर्त्म दर्शयन्।
नयनेन मदीयेन तुभ्यं दास्यामि मन्त्रणां ॥
९ यूयं मा भूत निर्ब्बोधास्तुरङ्गाश्वतरा इव।
तेषां रश्मिः खलीनञ्च भूषणं दमनार्थकं।
यस्मात् तव सकाशं ते नोपतिष्ठन्ति कामतः ॥
१० दुराचारमनुष्यस्य वेदनाः सन्ति भूरयः।
परेशश्रद्दधानञ्च कृपया वेष्टयिष्यते ॥
११ धार्म्मिकाः कुरुतानन्दम् उल्लासञ्च परेश्वरात्।
यूयं हे सरलात्मानः सर्व्वे हर्षेण गायत ॥

## ३३ त्रयस्त्रिंशं गीतं।

१ अनुग्रहपराक्रमयो र्निमित्तं १० रक्षायाश्च निमित्तं परमेश्वरस्य प्रशंसनं।

१ परमेशेन हृष्यन्तो यूयं गायत धार्म्मिकाः।
प्रशंसैव मनुष्येषु सरलात्मसु युज्यते ॥
२ वीणया परमेशस्य कुरुध्वं गुणकीर्त्तनं।
युष्माभि र्वाद्यतां तस्मै दशतारञ्च नेवलं ॥
३ नूतनं गीतमेकञ्च तमुद्दिश्य प्रगायत।
कुरुध्वं जयनादेन सुश्राव्यं यन्त्रवादनं ॥
४ यतो हेतोः परेशस्य सरलं विद्यते वचः।
तस्य सर्व्वाणि कर्म्माणि विश्वास्यानि भवन्ति च ॥
५ धर्म्माचारे विचारे च प्रीयते परमेश्वरः।
कृपया परमेशस्य पूर्णा चास्ति वसुन्धरा ॥
६ परमेशस्य वाक्येन निर्म्ममे व्योममण्डलं।
पृतना तस्य सर्व्वा च तदीयवक्त्रवायुना ॥
७ समुद्रस्यापि तोयानि राशिवत् सञ्चिनोति सः।
निदधाति स्वकोषेषु गभीराणि जलानि च ॥

हे भूलोकस्थिताः सर्व्वे प्रबिभीत परेश्वरात्। ८
जगन्निवासिनः सर्व्वे तस्मात् कुर्व्वन्तु साध्वसं॥
यतस्तेनोदिते सिद्धं तेनादिष्टे व्यवस्थितं॥ ९
परमेशोऽन्यजातीनां मन्त्रणां कुरुते वृथा। १०
क्रियन्ते विफलास्तेन कल्पनाः परदेशिनां॥
स्थास्यत्यनन्तकालं तु परमेशस्य मन्त्रणा। ११
वंशपरम्परां यावत् स्थिरास्तच्चित्तकल्पनाः॥
धन्यां वदामि तां जातिं यस्या ईशः परेश्वरः। १२
धन्यान् लोकांश्च तेनैव स्वाधिकाराय रोचितान्॥
स्वर्गतः परमेशेन दृष्टिपातो विधीयते। १३
स च मानवसन्तानान् सर्व्वानेव निरीक्षते॥
स स्ववासस्थलात् सर्व्वान् पश्यति क्षितिवासिनः॥ १४
स तेषां चित्तनिर्म्माता स तेषां सर्व्वकर्म्मवित्॥ १५
नास्ति सैन्यबहुत्वेन त्राणप्राप्तो महीपतिः। १६
वीरो बलमहत्त्वेन निस्तारं लभते नहि॥
त्राणार्थं निष्फलो वाजी महाशक्त्या न रक्षति॥ १७
पश्य परेशितु दृष्टिस्तस्य भक्तेषु वर्त्तते। १८
प्रतीक्षन्ते च ये तस्य दयां तेष्वपि वर्त्तते॥
यतः स मरणात् तेषां प्राणरक्षां करिष्यति। १९
दुर्भिक्षस्यापि काले तान् सजीवान् गोपयिष्यति॥
विदधाति मनोऽस्माकं प्रत्याशां परमेश्वरे। २०
अस्माकमुपकारी स सोऽस्माकं फलकं तथा॥
तस्मिन्नेव मनोऽस्माकम् आनन्दं प्रकरोति हि। २१
यतो हेतो वयं तस्य पुण्यनामावलम्बिनः॥
तावकीनकृपास्मासु वर्त्ततां परमेश्वर। २२
यतः प्रतीक्षमाणास्त्वामवतिष्ठामहे वयं॥

---

## ३४ चतुस्त्रिंशं गीतं।

१ इब्रीयभाषया ककारादिवर्णैर्गीतं तत्र रक्षार्थम् ईश्वरस्य प्रशंसा ११ दायूद उपदेशवाक्यञ्च।

यस्मिन् काले दायूद् अबीमेलकस्य समक्षं स्वीयबुद्धिगोपनहेतुतस्तेन बहिष्कृतः प्रतस्थौ तदानीन्तनं गीतं ॥

१ अहं धन्यं वदिष्यामि सर्व्वकाले परेश्वरं।
नित्यं स्थास्यति तस्यैव प्रशंसा वदने मम ॥
२ मामकीनं मनः श्लाघां परेशस्य करिष्यति।
आनन्दिष्यन्ति तत् श्रुत्वा मानवा नम्रचेतसः ॥
३ मया सार्द्धं परेशस्य महिमानं प्रशंसत।
अस्माभिरेकचित्तैश्च तस्य नामानुकीर्त्त्यतां ॥
४ परमेशो मयान्विष्टः प्राददान्मह्यमुत्तरं।
त्रासेभ्यः सकलेभ्यश्च स मामुद्धृतवान् स्वयं ॥
५ तमेवोद्दिश्य दृक्पातं कृत्वा दिद्युतिरे च ते।
न हि वक्त्राणि वा तेषां विवर्णान्यभिजज्ञिरे ॥
६ अनेन दुःखिनाहूतः परमेशो न्यशामयत्।
क्लेशेभ्यः सकलेभ्यश्च स तमुद्धृतवान् स्वयं ॥
७ परमेशस्य दूतेन तद्भक्तानां समन्ततः।
शिविरं स्थापयित्वैव तेषां रक्षा विधीयते ॥
८ यूयमास्वाद्य बुध्यध्वं सद्भावोऽस्ति परेश्वरः।
धन्यस्तस्मान्मनुष्यः स यो हि तं शरणं गतः ॥
९ परमेशाद् भयं यात यूयं हे तस्य साधवः।
तस्माद् बिभ्यति ये तेषां दुर्गति र्न भविष्यति ॥
१० दरिद्रति क्षुधार्त्ताश्च जायन्ते सिंहसूनवः।
परेशार्थिभिरप्राप्यं क्षेमं किञ्चिन्न विद्यते ॥
११ बालका यूयमायात निशामयत मद्वचः।
शिक्षयिष्याम्यहं युष्मान् परमेशस्य सेवनं ॥
१२ कस्तुष्टा जीवने क्षेमं दिदृक्षुरायुरीप्सति ॥
१३ स्वजिह्वां दोषतो रक्ष स्वाधरौ छलवाक्यतः ॥
१४ अपसृत्य दुराचारात् सदाचारं विधेहि च।
शान्तभावाय चेष्टस्व तं यत्नेनानुधाव च ॥
१५ उन्मीलिते परेशस्य नयने धार्म्मिकान् प्रति।
तदीयश्रवणे तेषां खेदोक्तिं प्रति सुश्रुते ॥

कोपदृष्टिः परेशस्य दुराचारिषु वर्त्तते। १६
स तेषां स्मरणं लुप्त्वा च्छितितो दवयिष्यति ॥
सदत्सु धार्म्मिकेष्वेव संपृणोति परेश्वरः। १७
क्लेशेभ्यः सकलेभ्यश्च स तान् उद्धरति स्वयं ॥
भग्नान्तःकरणानां हि समीपस्थः परेश्वरः। १८
चूर्णमानसलोकानां परित्राणं करोति सः ॥
धार्म्मिकस्य मनुष्यस्य विपदो बहुसङ्ख्यकाः। १९
किन्तूद्धरति सर्व्वाभ्यस्ताभ्यस्तं परमेश्वरः ॥
सर्व्वास्थ्नां तस्य रक्षी स तेषामेकं न भज्यते ॥ २०
दुर्गति दुर्जनं हन्ति दण्ड्यन्ते धार्म्मिकारयः ॥ २१
परमेशः स्वदासानाम् आत्मानं मोचयिष्यति। २२
तं श्रद्दधति यावन्तस्ते भविष्यन्त्यदण्डिताः ॥

---

## ३५ पञ्चत्रिंशं गीतं।

१ शत्रूणां दमनार्थं प्रार्थना १७ आत्मरक्षार्थं प्रार्थना च।

दायूदो गीतं।

मया ये विवदन्ते तैः विवदस्व परेश्वर। १
ये मया सह युध्यन्ते त्वञ्च युध्यस्व तैः सह ॥
आदाय फलकं चर्म्म चोत्तिष्ठोपकृतौ मम ॥ २
मदुपद्राविणो मार्गं शल्यं धृत्वा निरोधय। ३
अहं त्वत्त्राणकर्त्तेति मामकीनं मनो वद ॥
मत्प्राणद्रोहिणां लज्जा व्रीडितत्वञ्च जायतां। ४
पराङ्मुखा विवर्णाश्च सन्तु मेऽनिष्टकल्पकाः ॥
वायोरग्रे तुषा यद्वत् विकीर्य्यन्तां तथैव ते। ५
परमेशस्य दूतेन ताड्यमानाः पुनः पुनः ॥
चिक्कणा सान्धकारा च तेषां भवतु पद्धतिः। ६
परमेशस्य दूतेन द्राव्यन्तां ते तया सदा ॥
यतो हेतो र्मदर्थं तै र्जालं गुप्तमकारणात्। ७
गर्त्तं मत्प्राणनाशाय खनितं तैरकारणात् ॥

८ तादृशं मानवं नाशः समाप्नोत्वनपेक्षितः।
स्वेन गुप्ते च जाले स धृतो नाशाय सम्वतां॥
९ उल्लसिष्यति तस्माद्धि मन्मनः परमेश्वरे।
कृते तेन परित्राणे आनन्दञ्च करिष्यति॥
१० ममास्थीनि वदिष्यन्ति त्वत्समः कः परेश्वर।
बलिष्ठाद् दुःखिनं रक्षन् हारकाद् दीनदुर्गतौ॥
११ मद्विरुद्धं दुरात्मानः समुत्तिष्ठन्ति साक्षिणः।
यन्न जानाम्यहं तन्मां परिपृच्छन्ति ते जनाः॥
१२ ते हितस्यैव शोधार्थम् आचरन्तो ममाहितं।
मामकीनस्य चित्तस्य सम्पादयन्त्यनाथतां॥
१३ तेषां तु रोगकालेऽहं शाणं कृत्वा परिच्छदं।
विमना उपवासेन स्वप्राणान् पर्य्यतापयं।
चित्तविश्रान्तयेऽकुर्व्वं प्रार्थनाञ्च पुनः पुनः॥
१४ यथा मित्रं सगर्भं वा प्रति तद्वत् समाचरं।
मातृशोकेन शोकीव म्लानोऽहञ्चाभवं नतः॥
१५ ते मम स्खलने हृष्टाः समागच्छन्ति साम्प्रतं।
मद्विरुद्धं मदज्ञाताः समागच्छन्ति निन्दकाः।
माञ्च स्वकीयजिह्वाभि र्विदारयन्त्यमौनिनः॥
१६ पूपार्थं हासकाः पापा दन्तैः खेडन्ति मां प्रति॥
१७ हे प्रभो त्वं कियत्कालम् एतद् आलोकयिष्यसि।
तैः कृतात् सर्व्वनाशात् त्वं मत्प्राणान् पुनरानय।
करेभ्यो युवसिंहानाम् अनाथं रक्ष मे मनः॥
१८ ततो महासमाजेऽहं करिष्यामि तव स्तवं।
प्रबलानाञ्च लोकानां मध्ये त्वद्गुणकीर्त्तनं॥
१९ मद्विरुद्धं न हृष्यन्तु द्वेषिणोऽन्यतवादिनः।
निर्निमित्तविपक्षा मे नेङ्गितं कुर्य्युरक्षिभिः॥
२० भाषन्ते न हितार्थं ते देशे ये शान्तचेतसः।
तेषामेव विरुद्धं ते कल्पयन्ति छलानि हि॥
२१ मां प्रति व्यात्तवक्त्राश्च प्रभाषन्त इदं वचः।
साधु साधु प्रियां दृष्टिम् अस्माकं नेत्रमीक्षते॥
२२ ईक्षसे परमेश त्वम् अत्र मा भव नीरवः।

हे मत्प्रभो भवान् मत्तो दूरवर्त्ती न तिष्ठतु ॥
मामकीनविचारार्थं त्वं प्रबुध्य सुजागृहि। २३
मामकीनविवादार्थं हे मदीश्वर मत्प्रभो ॥
परमेश मदीशस्त्वं मे विचारं स्वधर्म्मतः। २४
कुरु त्वं मयि शत्रूणां नानुजानीहि हर्षणं ॥
मा भावन्तां स्वचित्तैस्ते साध्वस्माकं मनोगतं। २५
अवगीर्णोऽयमस्माभिरिति वा न ब्रुवन्तु ते ॥
मदनिष्टप्रियाः सर्व्वे विलज्जन्तां त्रपान्विताः। २६
ह्रीव्रीडाभ्याञ्च वेष्ट्यन्तां नरा मय्यभिमानिनः ॥
ये च तुष्यन्ति मद्धर्म्मे ते हृष्यन्तूल्लसन्तु च। २७
महानस्तु स्वदासस्य शान्तौ तुष्टः परेश्वरः।
इति वाक्यञ्च ते लोकाः प्रभाषन्तां निरन्तरं ॥
वर्णयिष्यति मज्जिह्वा तव धर्म्मस्तवौ सदा ॥ २८

---

# ३६ षट्त्रिंशं गीतं।

१ मनुष्याणां दुष्टतायाः ५ परमेश्वरस्य भद्रतायाश्च वर्णनं।

वाद्यनियन्त्रे दातव्यं परमेश्वरीयदासस्य दायूदो गीतं।

दुष्टस्याधर्म्ममध्येषा वाग्वदेति मदन्तरे। १
नास्ति तच्चक्षुषोरग्रे परमेश्वरतो भयं ॥
यतो हेतोः स्वदृष्ट्या स विदधात्यात्मसान्त्वनं। २
स्वदोषस्यानुसन्धाने गर्ह्ये चाकुतोभयः ॥
तन्मुखोद्भववाक्यानि वितथानि छलानि च। ३
सुविवेकसदाचारौ दूरं तेनापसारितौ ॥
वितथा कल्पना तेन स्वशय्यायां विधीयते। ४
मार्गे तिष्ठति सोऽभद्रे दुष्टत्वान्न पराङ्मुखः ॥
परेश स्वर्गपर्य्यन्तं विस्तीर्णास्ति दया तव। ५
सत्यता तावकीना या गगनस्पर्शिनी च सा ॥
दिव्यानां भूधराणाञ्च तुल्यो धर्म्मस्त्वदीयकः। ६
विचाराश्चास्त्वदीयाश्च गभीराम्भोनिधेः समाः।

मानवानां पशूनाञ्च रक्षकस्त्वं परेश्वर॥
७ कीदृशन्तु महारत्नं भवेदीश्वर ते दया।
तस्मात् त्वत्पक्षयोश्छायां श्रयन्ते नरसूनवः॥
८ ते सम्यग् अभिषेक्ष्यन्ते त्वद्गृहस्य धनार्णवात्।
त्वत्प्रीतिस्रोतसोऽम्भांसि त्वञ्च तान् पाययिष्यसि॥
९ यतो हेतोस्त्वदासन्ने जीवनोत्सो हि विद्यते।
वयं त्वदीयदीप्त्यैव भवामो दीप्तिदर्शिनः॥
१० विधेहि सदयां स्थायुं लोकान् त्वद्विदितान् प्रति।
सधर्म्मञ्च कुरु स्थायुम् ऋजुचित्तान् नरान् प्रति॥
११ अहङ्कारस्य पादो मां न समाप्नोतु कर्हिचित्।
नहि विद्रावयेद् वा मां दुश्चरित्रजनकरः॥
१२ दुष्क्रियाकारिणो लोकाः स्वस्थाने न्यपतन् स्वयं।
प्रभ्रष्टाश्च समुत्थातुं न पुनः शक्नुवन्ति ते॥

---

## ३७ सप्तत्रिंशं गीतं।

इब्रीयभाषया दायूदः ककारादिवर्ण गीतं तत्र सांसारिकसुखार्थं पापिलोकान् प्रतीर्ष्यणस्यानुपयुक्तत्वं परमेश्वरे विश्वसनस्य चोपयुक्तत्वं।

दायूदो गीतं।

१ त्वं मा क्रुध्य दुरात्मभ्यो मा कुकर्म्मिभ्य ईर्ष्य वा।
२ यतो हेतोस्तृणानीव छेत्स्यन्ते तेऽपि सत्वरं।
म्लानत्वञ्च गमिष्यन्ति ते हरिद्वर्णशष्पवत्॥
३ परमेश्वरमाश्रित्य सदाचारं कुरुष्व हि।
स्वदेशे वस तेन त्वं सत्यतामनुभोक्ष्यसे॥
४ परेशाद् हृष्य तस्मात् ते मनोऽभीष्टं स दास्यति॥
५ तावकीनगते भारं परमेशे समर्पय।
तमेव शरणं गच्छ कर्त्तव्यं स करिष्यति॥
६ दीप्तिवत् तव धर्म्मस्य चोदयं स विधास्यति।
त्वद्विचारस्य शोभाञ्च मध्याह्नसूर्य्यसन्निभां॥
७ परमेश्वरमुद्दिश्य नीरवः प्रतिपालय।
मा सिद्धगतये क्रुध्य छलकारिनराय वा॥

कोपतस्त्वं निवर्त्तस्व मनस्तापं परित्यज। ८
त्वया मा क्रियतां रोषः स दुराचारकारणं॥
ये कुर्व्वन्ति दुराचारं ते लोप्स्यन्ते न संशयः। ९
ये परेशं प्रतीक्षन्ते देशस्तैरेव भोक्ष्यते॥
अतीते त्वल्पकाले हि दुर्जनो नावशेक्ष्यते। १०
तस्य स्थानं निरीक्ष्यापि स त्वया नहि लप्स्यते॥
देशं नम्रास्तु भुञ्जाना हर्षिष्यन्ति महासुखात्॥ ११
धर्म्मिणे दुर्जनो द्रुह्यन् दन्तैः स्वेडति तं प्रति॥ १२
प्रभु र्हसति तं तस्य दिनं पश्यन् उपागतं॥ १३
निष्कोषयन्त्यसिं दुष्टा आकर्षन्ति धनुंषि च। १४
पातार्थं दीननिःस्वानाम् हत्यायै सरलाध्वनां॥
तेन स्वीयासिना तेषां निजचित्तं प्रवेक्ष्यते। १५
भग्नत्वञ्च गमिष्यन्ति तेषां तानि धनूंष्यपि॥
बहूनां पापिनां कोषात् साधोरल्पधनं वरं॥ १६
भंक्ष्यते पापिनां बाहू साधून् धारयति प्रभुः॥ १७
मन्यते सिद्धलोकानां दिवसान् परमेश्वरः। १८
तेषां यश्चाधिकारः स नित्यस्थायी भविष्यति॥
विपत्कालेऽपि तेषां न सम्भविष्यति लज्जनं। १९
भक्ष्यैस्ते तर्पयिष्यन्ते दुर्भिक्षस्य दिनेष्वपि॥
किन्तु दुष्टा विनंक्ष्यन्ति परमेशस्य चारयः। २०
लोप्स्यन्ते मेषवत्सानाम् उपादेयादनं यथा।
यस्माद् अन्तर्हितास्तेऽपि लोप्स्यन्ते धूममालया॥
ऋणं संगृह्य तच्छोधं करोति नहि दुर्जनः। २१
किन्तु धार्म्मिकलोकेन दयां कृत्वा वितीर्य्यते॥
तस्याशीर्दानपात्राणि ये ते देशः प्रभोक्ष्यते। २२
तस्याभिशापपात्राणि चोच्छेत्स्यन्ते न संशयः॥
नरस्य पादविक्षेपे परेशेन स्थिरीकृते। २३
तदीयायां गतौ तस्य परितोषेऽप्यधिष्ठिते॥
स मनुष्यः पतित्वापि भूमिं नाधिशयिष्यते। २४
यस्मात् परेश्वरस्तस्य करं सन्धारयिष्यति॥
अहमासं युवा पूर्व्वम् इदानीं स्थविरोऽस्मि च। २५

धार्म्मिकं तु परित्यक्तं दृष्टवान् न कदाप्यहं।
न भक्ष्यं भिक्षमाणां वा दृष्टवान् तस्य सन्ततिं॥
२६ नित्यमेव दयाशील ऋणदानं करोति सः।
आशीर्दानस्य पात्रञ्च जायते तस्य सन्ततिः॥
२७ पापं त्यक्त्वा सदाचारं कुर्व्वन् त्वं सर्व्वदा वस॥
२८ परेशः प्रीयते धर्म्मे स्वसाधून् न जहाति सः।
सर्व्वदा तेऽभिरक्ष्यन्ते छेत्स्यन्ते दुष्टवंशजाः॥
२९ भोक्ष्यते धार्म्मिकै देशस्तत्र वत्स्यन्ति ते सदा॥
३० धार्म्मिकस्य मनुष्यस्य वक्त्रं ज्ञानं प्रभाषते।
उच्चारयति तज्जिह्वा सुविचारवचांसि च॥
३१ स्वकीयेशस्य शास्त्रञ्च तस्य चित्तेऽवतिष्ठते।
तदीयपादविक्षेपो न स्खलिष्यति कर्हिचित्॥
३२ दुष्टाति धर्म्मिणो दुष्टस्तं हन्तुञ्च विचेष्टते॥
३३ नार्पयिष्यति तं त्यक्त्वा तस्य हस्ते परेश्वरः।
न वा विचार्य्यमाणं तं दोषिणं स करिष्यति॥
३४ परमेशं प्रतीक्षस्व तस्य मार्गञ्च पालय।
स च त्वामुन्नतं कृत्वा देशभोगे नियोक्ष्यति।
उत्पाटनञ्च दुष्टानां त्वं निरीक्षिष्यसे स्वयं॥
३५ मयादर्शि बली पापी हरित्क्षाखीव विस्तृतः॥
३६ स त्वतीतो विलीनश्च मयान्विष्यापि नेक्ष्यत॥
३७ सिद्धलोकमवेक्षस्व सरलञ्च विलोकय।
शान्त्याचारिमनुष्यस्य स्थिरं पारत्रिकं फलं॥
३८ युगपच्च विनंक्ष्यन्ति मानवा धर्म्मलङ्घिनः।
उच्छिन्नं दुश्चरित्राणां चास्ति पारत्रिकं फलं॥
३९ धार्म्मिकाणां परित्राणं परमेशेन सेत्स्यति।
विपत्काले स एवास्ति दृढस्तेषां समाश्रयः॥
४० उपकुर्व्वन् परेशस्तान् परिरक्षिष्यति स्वयं।
रक्षित्वा दुष्टलोकेभ्यः स परित्रास्यते च तान्।
यतस्ते दृढविश्वासस्तस्मिन्नेव विधीयते॥

---

# ३८ अष्टत्रिंशं गीतं।

पापकारणात् शोचनं दुःखनिमित्तं विलपनञ्च।

दायूदा कृतं स्मरणार्थकं धर्म्मगीतं।

परमेश स्वकोपेन भर्त्सनं मम मा कुरु। १
स्वीयप्रचण्डरोषेण दण्डनं न विधेहि मे॥
यतोऽहं ते शरैर्विद्धस्त्वत्करो मम भारवत्॥ २
नास्ति स्वास्थ्यं ममाङ्गेषु त्वदीयामर्षकारणात्। ३
नास्ति शान्ति र्मदस्थ्नां वा मामकीनाघकारणात्॥
वन्ययेवापराधै र्मे मस्तकं समभिप्लुतं। ४
विषोढुं नहि शक्यन्ते मया ते गुरुभारवत्॥
निजमौर्ख्याच्च दुर्गन्धा विगलन्ति व्रणा मम॥ ५
उद्विग्नोऽतीव खिन्नोऽहं शोचन् वर्त्तेऽखिलं दिनं॥ ६
पूर्णा शोषेण मे श्रोणी स्वास्थ्यं नास्ति तनौ मम॥ ७
विमृष्टोऽतीव चूर्णोऽहम् अन्तःक्रोशेन रोदिमि॥ ८
प्रभो कृत्स्ना ममाकाङ्क्षा विद्यते तव सम्मुखे। ९
मामकीनमनस्तापस्त्वत्तस्त्वान्तर्हितो नहि॥
हृत्कम्पेनाहमुत्क्रासी वर्ज्जितः स्वबलेन च। १०
मम नेत्रद्वयस्यापि तेजः सन्तिष्ठते नहि॥
पृथक् तिष्ठन्ति मत्क्लेशात् स्नेहिनो बन्धवश्च मे। ११
मामकीनान्तरङ्गाश्च तिष्ठन्ति दूरवर्त्तिनः॥
मत्प्राणान् मृगयन्ते य उन्माथं योजयन्ति ते। १२
ममानिष्टार्थिनो लोकाः प्रभाषन्ते च दुष्कृतां।
कृत्स्नमेव दिनं ते च चिन्तयन्ति प्रवञ्चनां॥
किन्त्वहं न निशाम्यामि वधिरो मानवो यथा। १३
रुद्धवक्त्रस्य मूकस्य सदृशश्च भवाम्यहं॥
येन न श्रूयते यस्य मुखञ्चोत्तरवर्ज्जितं। १४
तादृशस्य मनुष्यस्य तुल्यतां प्राप्तवानहं॥
यतो हेतोः प्रतीक्षेऽहं त्वामुद्दिश्य परेश्वर। १५
उत्तरं हि प्रदातव्यं त्वया प्रभो मदीश्वर॥
यतोऽहं वच्मि मे नाशात् त आनन्दितुमुद्यताः। १६

मत्पादस्खलनाज्जाता मां प्रति दर्पकारिणः॥
१७ पतने तु नियुक्तोऽहं व्यथा मेऽभिमुखा सदा॥
१८ स्वीकरोमि निजं दोषमुद्विजे च स्वपापतः॥
१९ मद्विपक्षास्तु जीवन्ति बलवन्तश्च सन्ति ते।
ये विद्विषन्ति मां मिथ्या ते जाता बहुसङ्ख्यकाः॥
२० ये हितस्यैव शोधार्थम् अहिताचरणे रताः।
मम धर्म्मानुगामित्वाद् वैरिणो मम सन्ति ते॥
२१ मा विधेहि परित्यागं मम हे परमेश्वर।
हे मदीश्वर मत्तस्त्वं दूरवर्त्ती न तिष्ठ वा॥
२२ त्वं त्वरस्वोपकर्त्तुं मां हे मत्त्राणाकर प्रभो॥

---

## ३९ ऊनचत्वारिंशं गीतं।

१ मानुषाणाम् असारत्वं ७ दायूदः प्रार्थना च।

यिदूथूनवर्गीयवाद्यनियन्त्रे दातव्यं दायूदो गीतं।

१ मयोक्तं सावधानोऽहं भविष्यामि स्ववर्त्मसु।
स्वकीयजिह्वया पापं नैव कारिष्यते मया॥
यावत्कालं दुरात्मा च मत्प्रत्यक्षोऽवतिष्ठते।
तावत्कालं खलीनेन संरोत्स्यामि निजं मुखं॥
२ नीरवो मौनभावेन चरमं क्षेमतोऽप्यहं।
मामकीना मनःपीडा तदानीं समवर्द्धत॥
३ ममाभ्यन्तरे चित्तम् अपरं मयि चिन्तनं।
कुर्व्वति प्राज्वलद् वह्निः जिह्वया चाहमब्रुवं॥
४ मदीयजीवनस्यान्तं मां ज्ञापय परेश्वर।
मामकीनदिनानां यन्मानं ज्ञापय तच्च मां।
अहं कति क्षणस्थायी तन्मया भोत्स्यते तदा।
५ पश्य वितस्तिमानानि व्यदधास्त्वं दिनानि मे।
मामकीनं यदायुस्तत् तव साक्षादवस्तुवत्।
आ असारत्वमात्रो हि सर्व्वमर्त्त्यो व्यवस्थितः॥ सेला॥
६ छायावदेव वीरोऽपि विदधाति गमागमौ।
सर्व्वं आभ्यन्त्यसारार्थं सञ्चिनोति धनान्यसौ।

केन तानि तु लभ्यन्ते तन्न शक्नोति वेदितुं॥
अधुना किं प्रतीच्छेऽहं मदीयाशा त्वयि प्रभो॥ ७
मामकीनापराधेभ्यः सर्व्वेभ्यः परिरक्ष मां। ८
अज्ञानस्य मनुष्यस्य मां न निन्दास्पदं कुरु॥
मूकोऽस्मि बद्धवक्त्रोऽहं यतोऽकारि त्वयैव तत्॥ ९
मत्तो दूरय ते दण्डं क्षीये त्वन्मुष्टिपाततः॥ १०
अपराधान्मनुष्यं चेत् त्वं दण्डयसि भर्त्सयन्। ११
कीटैरिव त्वया तस्य श्रीस्तदानीं विशीर्य्यते।
अा नितान्तमसारा हि सकलाः सन्ति मानवाः॥ सेला॥
परेश शृणु मे याच्ञां खेदोक्तिं मे निशामय। १२
मा भू र्मेऽश्रुषु मौनी त्वं यतोऽहं त्वद्गृहेऽतिथिः।
प्रवासी चास्मि सर्व्वे मे पूर्व्वजाः पितरो यथा॥
मत्तो विरम तेनाहं क्षणं प्राप्नोमि सान्त्वनां। १३
पश्चात् स्थानान्तरं गत्वा तिरोधानं व्रजामि च॥

---

## ४० चत्वारिंशं गीतं।

१ ईश्वरीयदयाया वर्णनं ६ खीष्टस्य पुण्यवाक्यं १३ प्रार्थना च।

वाद्यनियन्त्रे दातव्यं दायूदो धर्म्मगीतं।

परमेश्वरमुद्दिश्य प्रत्यैक्षेऽहमतीच्छया। १
ततः कृतावधानः स खेदोक्तिं श्रुतवान् मम॥
कूपाच्चोद्धृत्य मां घोरात् कर्द्दमाच्च मलीमसात्। २
मत्पादौ स्थापयन् शैले मद्गतिं कृतवान् दृढां॥
मदास्येऽदान्नवां गाथां सोऽस्मदीश्वरवन्दनां। ३
बहवो वीक्ष्य सन्त्रस्ताः श्रद्धास्यन्ति परेश्वरं॥
धन्यः सोऽस्ति मनुष्यो यः परेशं शरणं गतः। ४
अहंयुभ्यो मृषामार्गे भ्रान्तेभ्यश्च पराङ्मुखः॥
परमेश्वर मत्स्वामिन् अस्मदर्थं त्वया कृताः। ५
चित्रक्रियाश्च चिन्ताश्च विद्यन्ते बहुसङ्ख्यकाः॥
त्वत्साक्षाद्रचनां तासां कर्त्तुं कोऽपि न पारकः।

ताः प्रशंसितुमाख्यातुञ्चाहमारब्धवान् यदा।
तदानीं गणना तासाम् अभवन्मद्गलातिगा॥
६ नैच्छस्त्वं बलिनैवेद्ये कर्णौ मे छिद्रितौ त्वया।
होमो बलिश्च पापघ्नस्त्वया न सम्प्रयाचितौ॥
७ तदानीन्तु मयावादि पश्य कुर्व्वेऽहमागमं।
धर्म्मग्रन्थस्य सर्गे मे विद्यते लिखिता कथा॥
८ मदीश त्वदभीष्टस्य साधनं मम नन्दकं।
मदीयचेतसो मध्ये त्वच्छास्त्रञ्चावतिष्ठते॥
९ मया महासभायाञ्च धर्म्मवार्त्ता विघुष्यते।
पश्याहं नास्मि रुद्धोष्ठस्तत् त्वं वेत्सि परेश्वर॥
१० मया त्वदीयधर्म्मश्च स्वचित्ते नहि छादितः।
विश्वास्यत्वपरित्राणे तव विज्ञापिते मया।
नापह्नुते महासङ्घे करुणासत्यते तव॥
११ परमेश त्वया मत्तः स्वीयस्नेहो न रुध्यतां।
तव कारुण्यसत्यत्वे नित्यं मां परिरक्षतां॥
१२ यतोऽसङ्ख्यानि दुःखानि मां वेष्टन्ते समन्ततः।
स्वदोषैरहमाक्रान्तो न शक्नोम्यूर्द्धमीक्षितुं।
तेऽधिका मूर्द्धजेभ्यो मे हीनचेताश्च तैरहं॥
१३ परित्राणं विधातुं मे त्वं प्रसीद परेश्वर।
मामकीनोपकारार्थं त्वं त्वरस्व परेश्वर॥
१४ मत्प्राणान् मृगयन्ते ये तत्संहारं चिकीर्षवः।
लज्जान्विता विवर्णाश्च सर्व्व एव भवन्तु ते।
व्रीडिताश्च पलायन्तां मदनिष्टप्रिया जनाः॥
१५ ये मां वदन्ति हाहेति ते स्तम्भन्तां स्वलज्जया॥
१६ सर्व्वे त्वदर्थिनस्त्वत्त आनन्दन्तूल्लसन्तु च।
त्वत्त्राणमोदिनो नित्यं ब्रूयुः परेश्वरो जयी॥
१७ अहं दुःखी दरिद्रश्च किन्तु मां मन्यते प्रभुः।
त्वं मे रक्षी सहायश्च न चिराय मदीश्वर॥

---

# ४१ एकचत्वारिंशं गीतं ।

१ दयालुलोकस्य धन्यत्वं ४ विश्वासघातकताया विषये दायूदो विलापः १० प्रार्थना च ।

वाद्यनियन्त्रे दातव्यं दायूदो धर्म्मगीतं ।

यो दीनं प्रति सद्भावो धन्य एव स मानवः । १
दुर्द्दिने परमेशेन तस्योद्धारो विधास्यते ॥
रक्षित्वा परमेशेन जीवितः स च नीष्यति । २
सुखं प्राप्स्यति शत्रूणां स्वेच्छायां न समर्पितः ॥
परेशो व्याधिशय्यायां स्वयं तं धारयिष्यति । ३
रोगिणस्तस्य तल्पाद्य शय्यां सज्जीकरिष्यति ॥
मयोक्तं परमेश त्वं करुणां कुरु मां प्रति । ४
स्वस्थं कुरु ममात्मानं यतस्त्वां प्रति दोष्यहं ॥
मामुद्दिश्य कुभावेन भाषन्ते मम वैरिणः । ५
कदायं त्यक्ष्यति प्राणान् अस्य नाम च नंक्ष्यति ॥
स चेन्मां द्रष्टुमायाति तदा मां सान्त्वयन् मृषा । ६
सञ्चिनोत्यहितं चित्ते वहिर्गत्वा च भाषते ॥
मिथो मे द्वेषिणः सर्व्वे मां निन्दन्ति जनान्तिकं । ७
मद्विरुद्धञ्च कुर्व्वन्ति मदनिष्टाय कल्पनां ॥
कुकर्म्मासज्जतेऽमुष्मिन् असौ यच्छयनं गतः । ८
तस्मात् पुनः समुत्थातुं कर्हिचिन्नहि शक्ष्यति ॥
मित्रं विश्वासपात्रं मे मत्पूपाशी च यो नरः । ९
सोऽपि मत्प्रातिकूल्येन पार्ष्णिक्षेपं करोति हि ॥
अतो हे परमेश त्वं करुणां कुरु मां प्रति । १०
मामुत्थापय तेनैव तेभ्यो दास्याम्यहं फलं ॥
मद्द्वेषी मद्विरुद्धं न जयनादं करिष्यति । ११
अनेनाहं विजानामि त्वत्तुष्टि र्मयि वर्त्तते ॥
मदीयशुद्धताहेतो धारयिष्यति मां भवान् । १२
सदाकालं भवत्साक्षान्माञ्च संस्थापयिष्यति ॥
इस्रायेलः प्रभुः परमेश्वरोऽनन्तकालं यावत् सदा धन्यो भूयात् ॥ १३
तथास्तु । तथास्तु ॥

# ४२ द्विचत्वारिंशं गीतं।

१ परमेश्वरस्य मन्दिरात् दूरीभवनात् दायूदो दुःखं ६ तत्समीपं पुनर्गन्तुं तस्येच्छा च।

वाद्यनियन्त्रे दातव्यं कोरहीयवंशस्योपदेशगीतं।

१ तोयस्रोतांसि सम्प्राप्तुं मृगी चाकांक्षते यथा।
ईश्वर त्वां मदीयात्मा प्राप्तुं चाकांक्षते तथा॥
२ ईशार्थं मे मनस्तृष्णाग् लिप्सतेऽमरमीश्वरं।
आगत्येश्वरप्रत्यक्षम् उपस्थास्याम्यहं कदा॥
३ जायते मम नेत्राम्बु देहयात्रा दिवानिशं।
यत् पृच्छ्ये ऽहं सदा लोकैरीशस्ते कुत्र विद्यते॥
४ ममैतत् स्मरतोऽन्तःस्थं निजचित्तं विलीयते।
यतोऽहं जनयात्राया अग्र ईशस्य मन्दिरं।
हर्षस्तुतिरवैर्यातः पार्व्वणी र्निवहैः सह॥
५ कुतः सीदसि मच्चित्त क्षोभसे च मदन्तरे।
प्रतीक्षस्वेश्वरं यस्मात् स मया स्तोष्यते पुनः।
स्तोष्यते च परित्राणं तदीयाननसम्भवं॥
६ हे मदीश्वर मच्चित्तम् अवसीदति मेऽन्तरे।
ततोऽहं संस्मरामि त्वाम् अत्र यर्द्दननीवृति।
हर्म्मोणाख्येषु शैलेषु मिस्रियारे च भूधरे॥
७ त्वदीयस्रोतसां शब्दाद् अब्धिराह्वयतेऽब्धिना।
सकलैस्तव कल्लोलैस्तरङ्गैश्चाहमाप्लुतः॥
८ मत्सेवायै परेशेन स्वकृपादेक्ष्यते दिवा।
स्थास्यति क्षणदायाञ्च गीति र्मे सहवर्त्तिनी।
मह्यं जीवनदातारं चेश्वरं प्रति प्रार्थना॥
९ ईशं वक्ष्यामि मच्छैल कुतोऽहं विस्मृतस्त्वया।
कुतो भ्राम्यामि शोकार्त्तः शत्रो दौरात्म्यकारणात्॥
१० मदस्थिव्यापिमारीव निन्दा मे क्रियतेऽरिभिः।
सर्व्वदा भाषमाणै र्माम् ईशस्ते कुत्र विद्यते॥
११ कुतः सीदसि मच्चित्त क्षोभसे च मदन्तरे।
प्रतीक्षस्वेश्वरं यस्मात् स मया स्तोष्यते पुनः।
मामकीनस्य वक्त्रस्य त्राणकर्त्ता मदीश्वरः॥

## ४३ त्रिचत्वारिंशं गीतं।

परमेश्वरीयं मन्दिरं प्रति परिवर्त्तनकाले आनन्दपूर्व्वकम् ईश्वरमाराधयितुं दायूदो मानसं।

विधेहीश विचारं मे मदर्थश्चोत्तरं वदन्। १
वादिभ्यो धर्म्महीनेभ्यो जनेभ्यः परिरक्ष मां।
धूर्त्ताद् अन्यायशीलाच्च मानवान्मां समुद्धर॥
ईशा मद्दुर्गरूपस्त्वं किमर्थं मां विगर्हसे। २
कुतो भ्राम्यामि शोकार्त्तः शत्रोर्दौरात्म्यकारणात्॥
स्वदीप्तिसत्यते प्रेष्य ताभ्यां मां वर्त्म दर्शय। ३
ते मां त्वत्पुण्यशैलञ्च त्वदावासांश्च नेष्यतः॥
ईशस्य वेदिमीशञ्च मे हर्षोल्लासदं तदा। ४
प्राप्याहं वीणया स्तोष्य ईश्वर त्वां मदीश्वरं॥
कुतः सीदसि मच्चित्त क्षोभसे च मदन्तरे। ५
प्रतीक्षस्वेश्वरं यस्मात् स मया स्तोष्यते पुनः।
मामकीनस्य वक्त्रस्य त्राणकर्त्ता मदीश्वरः॥

---

## ४४ चतुश्चत्वारिंशं गीतं।

१ समाजस्य विलापः २० प्रार्थना च।

वाद्यनियन्त्रे दातव्यं कोरहीयसन्तानानाम् उपदेशगीतं।

ईश्वराश्राविनः कर्णैः पितृभिर्नो निवेदिता। १
क्रिया त्वया कृता तेषां काले पूर्व्वदिनेषु हि॥
स्वकरेणान्यजातीस्त्वम् उत्पाट्य तान् अरोपयः। २
नाशयित्वा प्रजास्तांश्च व्यदधा दीर्घपल्लवान्॥
यस्मात्ते न स्वखड्गेन प्रापुर्देशाधिकारितां। ३
निजबाहुबलाद् वा ते बभूवुर्जयिनो नहि॥
तव दक्षिणहस्तेन बाहुना च सिषेध तत्।
त्वन्मुखस्य प्रसादाच्च यतस्त्वं तेषु तुष्टवान्॥
ईश त्वं मम राजासि याकूबस्त्राणमादिश॥ ४
त्वया वयं विनोत्स्यामः प्रत्याघाते विरोधिनः। ५

त्वन्नाम्ना मर्द्दयिष्यामः पादाभ्यां परिपन्थिनः॥
६ यतो हेतोः स्वकोदण्डे विश्वासं न करोम्यहं।
मामकीनश्च खड्गो न जयिनं विदधाति मां॥
७ किन्त्वस्माकमरातिभ्यस्त्वमस्मान् परिरक्षसि।
अस्माकं द्वेषिणश्च त्वं प्राप्तलज्जान् करोषि हि॥
८ ईश्वरस्य वयं श्लाघां कुर्म्महे निखिलं दिनं।
अस्माभि र्भवतो नाम स्तूयते च निरन्तरं॥ सेला॥
९ तथापि गर्हयन्नस्मान् त्वं करोष्यपमानितान्।
अस्माकं वाहिनीनाञ्च मध्ये त्वं न प्रगच्छसि॥
१० त्वमस्मांश्च विपक्षेभ्यः विदधासि पराङ्मुखान्।
अस्माकं द्वेषिणस्तस्मात् लोठयन्ति धनानि हि॥
११ त्वमस्मान् बध्यमेषाणां तुल्यतायां नियुक्तवान्।
अन्यजातीयलोकानां मध्ये चास्मान् विकीर्णवान्॥
१२ विना विनिमयं त्वञ्च विक्रीणासि निजाः प्रजाः।
तासां मूल्येन नाप्नोति वृद्धिं काञ्चन ते धनं॥
१३ विदधासि त्वमस्मांश्च निन्द्यान् निकटवासिभिः।
हास्यास्पदमवज्ञेयं चतुर्द्दिक्स्थजनानामपि॥
१४ विदधासि त्वमस्मांश्च दृष्टान्तं भिन्नदेशिनां।
शिरश्चालनपात्रञ्च परराष्ट्रनिवासिनां॥
१५ सर्व्वदा मम लज्जा हि मत्प्रत्यक्षं वितिष्ठते।
आच्छादयति मां नित्यं वदनस्य विवर्णता॥
१६ मत्परिहासकर्त्तुश्च निन्दकस्य च वाक्यतः।
दूषिणः प्रतिहन्तुश्च वैरित्वकारणादपि॥
१७ सर्व्वैरेतैः समाक्रान्ता वयं त्वां व्यस्मराम नो।
न कृतं कृतवन्तो वा त्वदीयं नियमं प्रति॥
१८ अन्तःकरणमस्माकं नहि जातं पराङ्मुखं।
अस्माकं पादविक्षेपस्तव मार्गान्न निर्गतः॥
१९ कुतो वयं त्वया चूर्णाः स्थाने नागनिसेविते।
किमर्थञ्च समाच्छन्ना मरणच्छायया वयं॥
२० अस्मदीयेश्वरस्य नाम व्यस्मरिष्याम चेद् वयं।
इतरेश्वरमुद्दिश्याकरिष्याम कराञ्जलिं॥

तर्हि तस्यानुसन्धानं नाकरिष्यत् किमीश्वरः। २१
यतो हेतोः स जानाति मनसो गुप्तकल्पनाः॥
त्वदर्थं जायते ऽस्माकं प्राणहत्याखिलं दिनं। २२
वध्यानामेव मेषाणां तुल्या गण्यामहे वयं॥
प्रबुध्यस्व किमर्थं त्वं निद्रितस्तिष्ठसि प्रभो। २३
त्वं सुजागृहि वैराग्यं त्वया न क्रियतां सदा॥
कुतो हेतो निजं वक्त्रं समाच्छाद्यावतिष्ठसे। २४
कुतो विस्मर्य्यते ऽस्माकं दैन्यं निन्दा च वा त्वया॥
धूलौ सीदन्ति नः प्राणा भूमौ तुन्दश्च सज्जते। २५
नः साहाय्यार्थमुत्तिष्ठ स्वप्रेम्णास्मान् विमोचय॥ २६

---

## ४५ पञ्चचत्वारिंशं गीतं।

ख्रीष्टस्य सौन्दर्य्यजयराज्यविषये भविष्यद्वाक्यं।

वाद्यनियन्त्रे दातव्यं शोशन्नीमनामकस्वरयुक्तं कोरहीयवंशेन कृतं प्रेमविषयकं धर्म्मगीतं।

मच्चित्तं शुभवाक्येन समाकीर्णं प्रविद्यते। १
अहं निवेदयिष्यामि नरेन्द्राय निजाः क्रियाः।
मज्जिह्वा लिपिकर्त्तुश्च महावेगस्य लेखनी॥
भवान् मानवपुत्त्रेभ्यः सौन्दर्य्येण विशिष्यते। २
भवदीयाधराभ्याञ्च प्रसादः परिषिच्यते।
तस्मान्निरन्तरं तुभ्यं ददातीश्वर आशिषं॥
ऊरुदेशे महावीर त्वया खड्गो निबध्यतां। ३
तावकीनः प्रतापश्च महिमा च निबध्यतां॥
तव तेन महिम्ना त्वं जयारूढः प्रगच्छ च। ४
सत्यतायाः सधर्म्माया नम्रतायाश्च हेतुतः।
तेन भीमानि कर्म्माणि त्वामादेक्ष्यति ते करः॥
तीक्ष्णास्तव शरास्तैस्तु नंस्यन्ति त्वदधो जनाः। ५
महाराजस्य शत्रूणां व्यत्स्यन्ते हृदयानि च॥
हे ईशानन्तकालार्थं स्थिरं सिंहासनं तव।

न्यायस्य राजदण्डोऽस्ति राजदण्डस्त्वदीयकः॥
७ धर्म्मे प्रेम करोषि त्वं दुष्टताञ्च विगर्हसे।
तस्माद् ईश्वरस्त्वदीयेश्वस्त्वत्सखिभ्योऽपि मानयन्।
हर्षरूपेण तैलेन स्वयं त्वामभिषिक्तवान्॥
८ गन्धरसागुरुभ्याञ्च त्वक्‌पत्रैरपि सर्व्वशः।
तावकीनानि वस्त्राणि वासितानि भवन्ति हि।
दन्तिदन्तमयेभ्यस्त्वं प्रासादेभ्यः प्रनन्द्यसे॥
९ स्त्रीरत्नानां त्वदीयानां काश्चित् सन्ति नृपात्मजाः।
राज्ञी तिष्ठति ते दक्ष ओफीरस्वर्णभूषिता॥
१० पुत्रण कन्ये निरीक्षस्व स्वीयकर्णौ निधत्स्व च।
त्वया विस्मर्य्यतां स्वीया जाति र्गेहश्च पैतृकः॥
११ तावकीनञ्च सौन्दर्य्यं नरनाथो ऽभिकांक्षतु।
यस्मात् स ते प्रभुस्तस्मै प्रणामः क्रियतां त्वया॥
१२ तेन सोराभिधा कन्या समानेष्यत्युपायनं।
लोकैश्चातिधनाढ्यैस्ते मुखं प्रसादयिष्यते॥
१३ सर्व्वथा शोभया युक्ता पुरान्तःस्था नृपात्मजा।
स्वर्णसूचीयवासांसि सन्ति तस्याः परिच्छदः॥
१४ चित्रितै र्भूषिता वस्त्रै र्नीयते सा नृपान्तिकं।
सख्यः कन्याश्च तत्पश्चात् प्राप्यन्ते तव सम्मुखं॥
१५ हर्षनादेन नीतास्ताः प्रविशन्ति नृपालयं॥
१६ गतानां तव तातानां पदं प्राप्स्यन्ति ते सुताः।
त्वं कृत्स्नायाश्च मेदिन्याः प्रभुत्वे तान् नियोक्ष्यसि॥
१७ पुरुषानुक्रमेणाहं स्मारयिष्यामि नाम ते।
सार्व्वकालिकलोकाश्च करिष्यन्ति तव स्तवं॥

---

## ४६ षट्‌चत्वारिंशं गीतं।

जयकारणात् दायूदा परमेश्वरस्य धन्यवदनं।

कोरहवंशीयवाद्यनियन्त्रे दातव्यम् अलामोताख्यस्वरयुक्तं गीतं।

१ ईश्वरः स्वयमेवास्ति शरणञ्च बलञ्च नः।
उपकारी विपत्काले बहुधा सुपरीक्षितः॥

ततो हेतो र्न भेष्यामो विकृतायां क्षितावपि। २
महावारिनिधे र्मध्ये कम्पमानेषु चाद्रिषु॥
तस्य तोयेषु गर्जत्सु फेनमुत्पादयत्सु च। ३
वेपमानेषु शैलेषु तदीयोन्मादकारणात्॥ सेला॥
नद्येका विद्यते तस्याः प्रवाहैः परिहर्ष्यते। ४
ईश्वरस्य पुरी पूता सर्व्वश्रेष्ठस्य वेश्मभिः॥
ईशस्तिष्ठति तन्मध्ये तस्मात् सा न चलिष्यति। ५
ईश्वरोऽहर्मुखे तस्या उपकारं करिष्यति॥
गर्जन्ति भिन्नजातीया राष्ट्राणि प्रचलन्ति च। ६
ईरिते खरवे तेन मेदिनी विगलिष्यति॥
अस्माकं सहवर्त्ती तु सैन्याध्यक्षः परेश्वरः। ७
याकूबस्येश्वरोऽस्माकम् उच्चदुर्गवदाश्रयः॥ सेला॥
यूयमागत्य कर्म्माणि परमेशस्य पश्यत। ८
तेनैव मेदिनीमध्ये महोत्पाता विधीयते॥
पृथिवीप्रान्तपर्य्यन्तं प्रशाम्यन्ते रणानि च। ९
भज्यते तेन कोदण्डः शूलं तेन विभिद्यते।
रथोऽपि तेन युद्धस्य भस्मसात् क्रियतेऽग्निना॥
यूयं विरम्य बुध्यध्वम् अहमेवास ईश्वरः। १०
प्रभवाम्यन्यजातीनां मेदिन्याः प्रभवामि च॥
अस्माकं सहवर्त्ती तु सैन्याध्यक्षः परेश्वरः। ११
याकूबस्येश्वरोऽस्माकम् उच्चदुर्गवदाश्रयः॥ सेला॥

---

## ४७ सप्तचत्वारिंशं गीतं।

ईश्वरस्य वशीभूतत्वं प्रशंसाकरणञ्च।

वाद्यनियन्त्रे दातव्यं कोरहीयवंशस्य धर्म्मगीतं।

हे प्रजाः सकला यूयं करतालेन नन्दत। १
ईशार्थं हर्षनादेन कुरुध्वञ्च जयध्वनिं॥
यतो हेतोः परेशोऽस्ति सर्व्वश्रेष्ठो भयङ्करः। २
महान् राजाधिराजश्च कृत्स्नाया अवनेः प्रभुः॥

३ दमयित्वा प्रजालोकान् अस्मदश्यान् करोति सः
विदधात्यन्यजातीयान् अस्मत्पादतलस्थितान्॥
४ अस्मत्कृते वृणीते स विषयञ्चास्मदीयकं।
तदीयप्रेमपात्रस्य याकूवस्य शिरोमणिं॥ सेला॥
५ कुरुते जयनादेन स्वर्गारोहणमीश्वरः।
कुरुते तूर्य्यवाद्येन स्वर्गारोहं परेश्वरः॥
६ तमेवेश्वरमुद्दिश्य यूयं गायत गायत।
अस्माकं नृपमुद्दिश्य यूयं गायत गायत॥
७ ईशः कृत्स्नक्षितेः राजा यूयं ज्ञानेन गायत॥
८ ईशः करोति राजत्वं भिन्नजातिगणोपरि।
पुण्यसिंहासने स्वीये सुखासीनः स विद्यते॥
९ समायान्ति प्रजाध्यक्षा इब्राहीमेशितुः प्रजाः।
सन्तोशश्चैव भूपालाः स त्वतीव समुन्नतः॥

---

## ४८ अष्टचत्वारिंशं गीतं।

समाजस्य गौरवं सुखञ्च।

कोरहसन्तानानां धर्म्मगीतं।

१ अस्मदीयेशितुः पुर्य्यां स्वकीये पुण्यपर्व्वते।
महान् अतिप्रशंस्यश्च विद्यते परमेश्वरः॥
२ अस्ति प्रांशुतया रम्यः कृत्स्नक्षित्याश्च नन्दनः।
उदीच्यन्ते सियोनाद्रि र्महाराजस्य पत्तनं॥
३ ईश्वरस्तस्य हर्म्येषु सुविख्यातः समाश्रयः॥
४ नृपाः पश्य समागत्य युगपत्सुप्तां गताः॥
५ ते निरीक्ष्यैव संक्षुब्धा उद्विग्नाश्च पलायिताः॥
६ कम्पो दधार तान् तत्र प्रसूतामिव वेदना॥
७ तार्शीशगामिपोतांस्त्वं भनक्षि पूर्व्ववायुना॥
८ अस्माभि र्यादृगश्रावि तादृगेव निरीक्षितं।
सैन्याध्यक्षपरेशस्य पुरेऽस्मदीशितुः पुरे।
अनन्तकालपर्य्यन्तं तत् संस्थापयतीश्वरः॥ सेला॥

ईश त्वदीयमनो मध्ये चिन्तयामः कृपां तव॥ ९
यादृगस्तीश त नाम तादृगेव तव स्तवः। १०
पृथिवीप्रान्तपर्य्यन्तो धर्म्मपूर्णश्च ते करः॥
हर्षं याति सियोनाद्रि यिहूदाः पुत्रिका अपि। ११
पुर्य्यः कुर्व्वन्ति प्रोल्लासं विचाराज्ज्ञापिते तव॥
यूयं प्रदक्षिणीकृत्य सियोनं परिगच्छत। १२
युष्माभिस्तस्य दुर्गाणां गणना च विधीयतां॥
तत्प्राचीरे मनो धद्धं तत्प्रासादान् प्रपश्यत। १३
सर्व्वं कथयितुं तर्हि भाविवंशाय शृत्स्यथ॥
यतो हेतोरसावीशः सर्व्वदास्माकमीश्वरः। १४
मृत्युकालेऽपि चास्माकं मार्गादेष्टा भविष्यति॥

---

## ४९ ऊनपञ्चाशत्तमं गीतं।

धनजीवनयोरसारत्वं।

कोरहवंशीयवाद्यनियन्त्रे दातव्यं धर्म्मगीतं।

भो प्रजाः सकला यूयम् एतत् संश्रोतुमर्हथ। १
अत्र कर्णौ प्रयुंग्ध्वञ्च सर्व्वे पिष्टपवासिनः॥
क्षुद्रा मुख्याश्च साकल्यात् धनाढ्या दुर्गता अपि॥ २
यतो हेतो मदीयास्यं ज्ञानं प्रकाशयिष्यति। ३
मम मानसिकं ध्यानं सुबुद्धिञ्च प्रदास्यति॥
मया स्वकीयकर्णञ्च न्यायवाक्ये प्रयोक्ष्यते। ४
वीणयाहं समारप्स्ये स्वकीयां मर्म्मभारतीं॥
दुर्द्दिने किं व्यथिष्येऽहं द्रोहिणामेनसा वृतः॥ ५
वित्ते विश्वसतां स्वीये दम्भिनाञ्च महाधनात्॥ ६
तेषां कोऽपि न शक्नोति विमोक्तुं भ्रातरं निजं। ७
दातुमीशाय वा मूल्यं तस्योद्धारोपयोगिनं॥
यतो हेतो महामूल्यस्तेषां प्राणपरिष्क्रयः। ८
अनन्तकालपर्य्यन्तं स निवर्त्तिष्यते ततः।
तदीयनित्यजीवित्वात् खातदर्शनवर्ज्जितात्॥ ९

१० यस्मात् द्रक्ष्यति गर्त्तं स म्रियन्ते ज्ञानिनो नराः।
एकरूपेण नश्यन्ति मूढा अज्ञाश्च मानवाः।
स्ववित्तानि परित्यज्य ते परेभ्योऽर्पयन्ति च॥
११ नित्यस्थायीनि वेश्मानि पुरुषान् प्रति सुस्थिराः।
वासाः स्थातश्च देशेषु नाम तेषामिदं मनः॥
१२ नास्ति माने नरः स्थायी पशुवत् स विनश्यति॥
१३ इयं तेषां गतिस्तेभ्यो मूढतायाः फलप्रदा।
तथापि परतस्तेषां वाक्षु तुष्यन्ति मानवाः॥ सेला॥
१४ नरकं मेषवन्नीतान् मृत्युस्तान् चारयिष्यति।
प्रातस्तेषां प्रभुत्वञ्च प्राप्स्यते सरलैः नरैः।
सौन्दर्य्यं लोप्स्यते तेषां परलोकप्रवासिनां॥
१५ तथापीशो मम प्राणान् परलोकस्य हस्ततः।
उद्धरिष्यति यस्मात् स स्वयं मां संग्रहीष्यति॥ सेला॥
१६ धनित्वं जायते यस्य गृहैश्वर्य्यञ्च वर्धते।
तं दृष्ट्वापि त्वया त्रासो न कर्त्तव्यः कथञ्चन॥
१७ यतः स मृत्युकाले न किञ्चिदादाय यास्यति।
तदीयञ्च यदैश्वर्य्यं तत् तं नानुगमिष्यति॥
१८ जीवत्काले निजप्राणास्तेन सुश्लाघिताः स्वयं।
यः कश्चिच्चात्मसौख्यार्थी मानवैः स प्रशस्यते॥
१९ स तु गत्वा पितृस्थानं दीप्तिं द्रक्ष्यति न क्वचित्॥
२० सम्मान्योऽपि नरोऽज्ञानः पशुतुल्यो विनश्यति॥

---

## ५० पञ्चाशत्तमं गीतं।

१ परमेश्वरेण विचारकरणं ७ यज्ञकर्म्मादिभ्योऽपि भक्तेरावश्यकत्वं १६ कपटिलोकान् प्रति तिरस्कारश्च।

आसफस्य धर्म्मगीतं।

१ महाप्रतापवान् ईशः परमेशः प्रभाषते।
स सूर्य्यस्योदयादस्तं यावदाह्वयति क्षितिं॥
२ सियोनात् पूर्णसौन्दर्य्याद् ईश्वरः सम्प्रकाशते॥
३ ईश्वरोऽस्माकमायाति स न स्थास्यति नीरवः।

वह्निः ग्रसति तस्याग्रे वेष्टते तं प्रभञ्जनः॥
स्वप्रजानां विचारार्थम् ऊर्द्धस्थं व्योममण्डलं। ४
पृथिवीञ्च समाहूय तेनेदं वक्ष्यते वचः॥
सङ्गृह्णीत मदासन्ने मदीयान् साधुमानवान्। ५
बलिं दत्त्वा मया सार्द्धं नियमो यैरनुष्ठितः॥
आकाशमण्डलं तस्य धर्म्मं संवेदयिष्यति। ६
स्वयमेवेश्वरो यस्मान्न्यायाधीशो भविष्यति॥ सेला॥
हे मदीयप्रजा यूयं शृणुत व्याहराम्यहं। ७
इस्रायेलीयवंश त्वं शृणु साक्ष्यं ददामि ते।
अहमीश्वर एवास्मि तावकीनेश्वरोऽस्म्यहं॥
नाहं त्वां भर्त्सयिष्यामि यज्ञानां कारणात् तव। ८
बलयो हवनीयास्ते मत्साक्षात् सन्ति सर्व्वदा॥
गां नादास्ये तवागारात् न वा छागं त्वदाजकात्॥ ९
यतो हेतोररण्यस्था जीविनः सकला मम। १०
सहस्रपालगिरीशाश्च पशवः सकला मम॥
सकलानेव जानामि खगान् शैलनिवासिनः। ११
जन्तवः प्रान्तरस्थाश्च विद्यन्ते मम गोचरे॥
क्षुधायां मम जातायां न हि त्वां ज्ञापयाम्यहं। १२
यतो हेतो र्ममैवास्ति धरा तस्याश्च पूरकं॥
वृषमांसं किमत्स्यामि किं पास्याम्यजशोणितं॥ १३
प्रशंसारूपयज्ञेन प्रयजस्व त्वमीश्वरं। १४
तावकीनप्रतिज्ञाश्च सर्व्वश्रेष्ठाय शोधय॥
विपत्तेश्च दिने त्वं मां समुद्दिश्य समाह्वय। १५
अहं त्वामुद्धरिष्यामि त्वञ्च मां कीर्त्तयिष्यसि॥
यस्माद् दुर्जनमुद्दिश्य प्रभाषिष्यत ईश्वरः। १६
त्वं कुतो मे विधीन् वक्षि मुखे मन्नियमं वहन्॥
त्वयादेशो विरक्तेन मद्वाचः पृष्ठतः कृताः॥ १७
त्वञ्च चौरं निरीक्ष्यैव तत्सङ्गेनानुरज्यसे। १८
पारदारिकलोकानां समानांशी च जायसे॥
पापे वक्त्रं प्रयुंक्ते च जिह्वया कल्पयन् छलं॥ १९
त्वमासीनो निजभ्रातुरपवादं करोषि हि। २०

स्वकीयसोदरस्यैव गुणघाती च जायसे॥
२१ कुर्व्वन्ति त्वयि चैतानि मौरवोऽहमवस्थितः।
तेन त्वादृश एवाहमिति त्वं समचिन्तयः।
किन्तु त्वां भर्त्सयिष्येऽहं सर्व्वं विन्यस्य ते पुरः॥
२२ हे विस्मृतेश्वरा लोका युष्माभि र्बुध्यतामिदं।
नो चेद् विदारयिष्यामि युष्मान् रक्षकवर्ज्जितान्॥
२३ प्रशंसायज्ञकारी यो मत्सम्मानं करोति सः।
स्थिरमार्गो मया त्राणं चेश्वरं दर्शयिष्यते॥

---

## ५१ एकपञ्चाशं गीतं।

स्वीयपापस्य निमित्तं दायूदः खेदो विलापश्च।

वाद्यनियन्त्रे दातव्यं दायूदो धर्म्मगीतं।

वाच्चेवामुपगतस्य तस्य समीपं भविष्यद्वादिनि नाथने समागते गीतमिदं रचितमभूत्।

१ अनुकम्पस्व मामीश स्वकारुण्यानुरूपतः।
स्वकृपाया महत्त्वात् त्वं मेऽपराधांश्च दूरय॥
२ निःशेषं क्षालनं कृत्वा कुरु मां दोषवर्ज्जितं।
पातकान्मामकीनाच्च परिष्कारं कुरुष्व मे॥
३ यतो हेतो र्हि जानेऽहम् अपराधान् मया कृतान्।
सर्व्वदा मम पापञ्च मत्प्रत्यक्षं वितिष्ठते॥
४ केवलं त्वद्विरुद्धं हि पापमाचरितं मया।
तव दृष्ट्या कदर्य्यां च दुष्क्रियां कृतवानहं।
अतः स्वकीयवाक्येन त्वं भविष्यसि धार्म्मिकः।
स्वविचाराश्रयापि त्वं सुपवित्रो भविष्यसि॥
५ पश्य जातोऽपराधेऽहं पापे मात्रा च धारितः॥
६ पश्य त्वमन्तरस्थायां सत्यतायां हि प्रीयसे।
अतो गूढपथेनैव प्राज्ञज्ञानं विधेहि मां॥
७ एषोवेण पुनीया मां भविष्यामि शुचिस्तदा।
मां क्षालय ततः शुभ्रो भविष्यामि हिमादपि॥

त्वं संश्रावय मां वाचम् आह्लादानन्ददायिनीं। ८
त्वया चूर्णानि चास्थीनि प्राप्नुवन्तु प्रफुल्लतां॥
आच्छादय निजं वक्त्रं मदीयं पातकं प्रति। ९
मम सर्व्वापराधानां दवनं क्रियतां त्वया॥
हे ईश मम मध्ये त्वं शुच्यन्तःकरणं सृज। १०
मदीयाभ्यन्तरे धीरं चात्मानं नूतनीकुरु॥
त्वदीयदृष्टितो दूरं माञ्च त्वं नापसारय। ११
स्वीयं पवित्रम् आत्मानं मत्तो वा नापहारय॥
त्वदीयत्राणजं हर्षं पुनर्मह्यं प्रदेहि च। १२
उदारेणात्मना माञ्च धारयन् सुस्थिरं कुरु॥
तदाहं शिक्षयिष्यामि ते मार्गान् अपराधिनः। १३
त्वामेवोद्दिश्य करिष्यन्ति पापिनः परिवर्त्तनं॥
रक्ष मां वधदोषात् त्वम् ईश मत्त्राणदेश्वर। १४
मदीया रसना तर्हि धर्म्मं ते परिगास्यति॥
हे प्रभो त्वं मदीयौष्ठौ स्वयं मुक्तौ कुरुष्व हि। १५
तदा मदीयवक्त्रं ते प्रशंसां कीर्त्तयिष्यति॥
यस्मान्न प्रीयसे यज्ञे यः कर्त्तुं शक्यते मया। १६
तुभ्यं होमार्थकस्यापि बलेदानं न रोचते॥
ईश्वरस्य प्रियो यज्ञो भग्न आत्मा हि विद्यते। १७
भग्नं चूर्णञ्च चित्तं त्वम् ईश नैवावमंस्यसे॥
त्वं स्वकीयप्रसादेन सियोनस्य हितं कुरु। १८
यिरूशालमपुर्य्यास्त्वं प्राचीरं निर्मिमीष्व च॥
धर्म्मयज्ञेषु होमे च सम्पूर्णे प्रेष्यसे तदा। १९
त्वदीययज्ञवेद्याञ्च होष्यन्ते वृषभास्तदा॥

---

## ५२ द्विपञ्चाशं गीतं।

दोयेगस्य दोषविनाशयोः कथनं।

वाद्यनियन्त्रे दातव्यं दायूद उपदेशगीतं।

यस्मिन् काले इदोमीयदोयेग उपस्थाय दायूद् अहीमेलकस्य गृहं प्राविशदिति वार्त्तां शौले निवेदयामास तात्कालिकं गीतं।

१ कुतो दुष्कर्म्मणः श्लाघां कुरुषे हे महाबल।
ईश्वरस्यैव कारुण्यं नित्यं तिष्ठति सुस्थिरं॥
२ त्वज्जिह्वा कल्पते हिंसां तीक्ष्णक्षुरसमा छलिन्॥
३ सदाचाराद् दुराचारे त्वन्तु सम्प्रीयसेऽधिकं।
धर्म्मवाक्यान्मृषावाक्ये चाधिकं परितुष्यसि॥ सेला॥
४ संहारोक्तिषु सर्व्वासु प्रीयसे छलजिह्वक॥
५ तद्धेतोरीश्वरोऽपि त्वां नित्यमुत्पाटयिष्यति।
त्वां स एव निराकुर्व्वन् गेहतः कर्षयिष्यति।
जीवतां भूमिमध्याच्च स त्वामुन्मूलयिष्यति॥ सेला॥
६ धार्म्मिका वीक्ष्य भेष्यन्ति वक्ष्यन्ति त्वां विहस्य च॥
७ पश्यासौ स नरो यो न शरणं गत ईश्वरं।
व्यश्वसीत् धनबाहुल्ये हिंसया चाभवद् बली॥
८ अहन्त्वीश्वरगेहस्थः सतेजोजितवृक्षवत्।
ईश्वरस्यैव कारुण्यम् आश्रितोऽस्मि निरन्तरं॥
९ प्रशंसिष्यामि नित्यं त्वां यस्मात् कर्म्म कृतं त्वया।
आकांक्षिष्यामि ते नाम श्रेष्ठं त्वद्धर्म्मिणां पुरः॥

---

## ५३ त्रिपञ्चाशं गीतं।

पापिलोकानां दुष्टता भाविदुःखञ्च।

वाद्यनियन्त्रे दातव्यं महलन्नामकस्वरयुक्तं दायूद उपदेशगीतं।

१ ईश्वरो नास्ति वागेषा चित्ते मूढेन गद्यते।
ते भ्रष्टा दुष्कृते घृण्या नास्ति कोऽपि सुकर्म्मकृत्॥
२ स्वर्गान्मानवसन्तानान् ईश्वरो हि निरीक्षते।
ज्ञानाचारीश्वरान्वेषी कोऽप्यस्तीति दिदृक्षते॥
३ सर्व्वे पराङ्मुखा जाता युगपद् विकृतिं गताः।
नास्ति कोऽपि सदाचार एकोऽपि नहि विद्यते॥
४ किं न जानन्ति किञ्चित् ते सर्व्वे दुष्कर्म्मकारिणः।
अन्नवन्मत्प्रजाभक्षा ईश्वरं नाह्वयन्ति ते॥
५ अमुष्मिन् त्रासहीनेऽपि स्थाने त्रस्ता भवन्ति ते।

अस्थीनि व्यकिरद् यस्माद् ईश्वरस्त्वामवरुन्धतां।
आप्नुवन्ति त्वया लज्जां गर्हिता ईश्वरेण ते॥
इस्रायेलः परित्राणं सियोनाद् उदियाद् द्रुतं। ६
वन्दिभूतान् निजांल्लोकान् प्रत्युपावृत्त ईश्वरे।
आनन्दिष्यति याकूब इस्रायेलपि हर्षिता॥

## ५४ चतुःपञ्चाशं गीतं।

सिफीयलोकेभ्यो रक्षार्थं दायूदः प्रार्थना।

वाद्यनियन्त्रे दातव्यं दायूद उपदेशगीतं।

यस्मिन् काले सिफीयलोका उपस्थाय शौलस्य समीपे व्याहरन् दायूद् किमस्माकं मध्ये प्रच्छन्नो न तिष्ठति तदानीन्तनं गीतमिदं।

त्रायस्वेश स्वनाम्ना मां स्वशक्त्या मां विचारय॥ १
प्रार्थनां मे गृहाणेश सन्मुखस्य वचः शृणु॥ २
यतो हेतो विरुद्धं म उत्तिष्ठन्ति विदेशिनः। ३
मां जिघांसन्ति दुर्वृत्ता अप्रत्यक्षीकृतेश्वराः॥ सेला॥
मां पश्योपकरोतीशः प्राणालम्ब्यस्ति मे प्रभुः॥ ४
स मदीयविपक्षेषु दुर्गतिं वर्त्तयिष्यति। ५
स्वीयसत्यतया तेषां स विनाशं करिष्यति॥
स्वेच्छयाहं बलीन् तुभ्यं प्रदास्यामि परेश्वर। ६
प्रशंसिष्यामि ते नाम यतो हेतोस्तदुत्तमं॥
यस्मात्तेनैव सर्व्वस्मात् सङ्कटादहमुद्धृतः। ७
मच्चक्षु र्मदरातीनां दर्शनेन च तृप्यति॥

## ५५ पञ्चपञ्चाशं गीतं।

विपदि दुष्टानां विरुद्धं दायूदः प्रार्थना।

वाद्यनियन्त्रे दातव्यं दायूद उपदेशगीतं॥

शृणु मे प्रार्थनामीश मे शोकान्न तिरो भव॥ १
त्वया निशम्य मे वाक्यं दीयतां मह्यमुत्तरं। २

अनिवार्य्यं निजां चिन्तां क्रियते गर्ज्जनं मया॥
३ विपक्षस्य महानादात् दुर्ज्जनस्याप्युपद्रवात्।
ते कल्पयन्ति मे हिंसां सकोपाश्च द्विषन्ति मां॥
४ मदन्तर्वेपते चित्तं मृत्युत्रासा ग्रसन्ति मां॥
५ भयकम्पैः समाक्रम्ये रोमाञ्चश्चावृणोति मां॥
६ मयोक्तम् आ यदि स्यातां मम पक्षौ कपोतवत्।
तदा प्रोड्डीयमानेन विश्रामः प्राप्स्यते मया॥
७ पश्य दूरं पलाय्याहं करिष्ये प्रान्तरे स्थितिं॥ सेला॥
८ प्रद्रोष्याम्याश्रयं प्राप्य चण्डवातात् प्रभञ्जनात्॥
९ हे प्रभो ग्रस तान् लोकान् तेषां जिह्वाश्च भेदय।
यस्मात् पुरस्य मध्येऽहं वीक्षे दौरात्म्यवाग्रणौ॥
१० प्राचीरेण दिवारात्रं पुरं तौ परिगच्छतः।
तदीयाभ्यन्तरे हिंसा दुरवस्था च तिष्ठतः॥
११ तन्मध्ये विद्यतेऽन्यायस्तदीयाच्च चतुष्पथात्।
अभिद्रोहः प्रलम्भश्च कर्हिचिन्न प्रगच्छतः॥
१२ न विपक्षेण निन्द्योऽहं शत्रुनिन्दामहं सहे।
न द्वेषी मय्यहङ्कारी जुगुप्से द्वेषिगर्व्वतः॥
१३ त्वन्तु मत्तुल्यलोकोऽसि मत्सखा संस्तुतो मया॥
१४ आवाभ्यां मधुवन्मिष्टा मिथोऽकारि हि मन्त्रणा।
आवां जनतया सार्द्धम् अयावेशस्य मन्दिरं॥
१५ आक्रम्यन्तां विनाशैस्ते जीवन्तः प्रेत्य यान्तु च।
यस्मात् पापानि विद्यन्ते तेषां गेहेषु हृत्सु च॥
१६ समाक्रोक्ष्याम्यहन्त्वीशं रक्षिता मां परेश्वरः॥
१७ सायङ्काले प्रभाते च मध्याह्नसमयेऽपि च।
ध्यायन्नहं रविष्यामि स च श्रोष्यति मे रवं॥
१८ स क्षेमेण मम प्राणान् संग्रामादुद्धरिष्यति।
यस्मान्मामुपतिष्ठन्ति विपक्षा बहुसंख्यकाः॥
१९ श्रुत्वा प्रत्युत्तरं तेभ्यो दास्यति स्वयमीश्वरः।
अनादिकालमारभ्य राजसिंहासनाश्रितः॥ सेला॥
ते दुष्कर्म्मण्यविश्रान्ता ईश्वरान्नहि बिभ्यति॥
२० असौ मित्रेऽर्पयन् हस्तं नियमं लंघते निजं॥

दधिवत् स्निग्धवक्षस्य तस्य चित्तं युयुत्सते। ११
तैलतो मेदुरास्तस्य वाचो निष्कोषरिष्टयः।
परमेशे निजं भारं क्षिप स त्वां भरिष्यति। १२
धार्म्मिकाः स्खलनं तेन न कदाप्यनुमंस्यते॥
ईश्वर त्वन्तु गम्भीरे गर्त्ते तान् पातयिष्यसि। १३
अर्द्धायु र्नहि प्राप्स्यन्ति वञ्चका रक्तपातिनः॥
किन्तु त्वय्येव विश्वासो मया कारिष्यते ध्रुवं॥

---

## ५६ षट्पञ्चाशं गीतं।

पिलेष्टीयलोकेभ्यो रक्षार्थं दायूदः प्रार्थना।

वाद्यनियन्त्रे दातव्यं योनदेलमरिहोकीमनामकस्वरयुक्तं दायूदो गुप्तधनरूपं गीतं। यदा पिलेष्टीया गातनगरे तं धृतवन्तस्तात्कालिकं गीतं।

ईश मामनुकम्पस्व मर्त्त्या जिघ्रसिषन्ति मां। १
सर्व्वदा युध्यमानास्ते कुर्व्वते मम पीडनं॥
नित्यं जिघ्रसिषन्ते मां मदीयाः परिपन्थिनः। २
बहवश्च मया सार्द्धं युध्यन्ते प्रोच्चमस्तकाः॥
निजसाध्वसकालेऽहं परिविश्वसिमि त्वयि॥ ३
ईश्वरेण तदीयोक्तेः श्लाघा कारिष्यते मया। ४
ईश्वरे मेऽस्ति विश्वासो न करिष्यामि साध्वसं।
मां प्रति मांसपिण्डः किं विधातुं पारको भवेत्॥
मद्वाचां वैपरीत्यं ते कुर्व्वते निखिलं दिनं। ५
सकलाः कल्पनास्तेषां मद्विरुद्धाः कुकल्पनाः॥
ते समेत्य प्रपश्यन्ति चारवच्चतुरो दिशः। ६
मत्पार्ष्णीं च निरीक्षन्ते मत्प्राणान्तप्रतीक्षिणः॥
दुश्चरित्रेण किं तेषां रक्षाप्राप्तिः प्रसेत्स्यति। ७
ईश कोपेन जातीनां त्वया भ्रंशो विधीयतां॥
मदीयभ्रमणस्यैव गणना क्रियते त्वया। ८
स्वकुत्वाञ्च मदश्रूणि समाचेतुं त्वमर्हसि।
त्वद्ग्रन्थे किं न विद्यन्ते लेख्यारूढाणि तान्यपि॥

९ तस्मिन् मत्प्रार्थनाकाले प्रद्रोष्यन्ति ममारयः ।
ईश्वरो मे सहायोऽस्ति मयैतत्त्ववगम्यते ॥
१० ईश्वरेणैव वाक्यस्य श्लाघा कारिष्यते मया ।
परमेशेन वाक्यस्य श्लाघा कारिष्यते मया ॥
११ ईश्वरे मेऽस्ति विश्वासो न करिष्यामि साध्वसं ।
यस्मान्मां प्रति किं कर्त्तुं मानवः पारको भवेत् ॥
१२ व्रतानीश त्वदीयानि विद्यन्ते मम मस्तके ।
तस्मात् सम्पादयिष्यामि प्रशंसाकीर्त्तनं तव ॥
१३ यतो हेतो मम प्राणा मरणाद् रक्षितास्त्वया ।
स्खलनान्मम पादौ किं रक्षिष्येते त्वया नहि ।
तेनाहं जीवतां दीप्त्या यास्यामीशस्य सम्मुखं ॥

---

## ५७ सप्तपञ्चाशं गीतं ।

१ शौलस्य हस्तात् रक्षार्थं प्रार्थना ७ ईश्वरस्य धन्यवदनं ।

वाद्यनियन्त्रे दातव्यम् अल्तस्हेतनामकस्वरयुक्तं दायूदो गुप्तधनरूपं गीतं । यदा दायूद् शौलस्य सम्मुखात् पलाय्य गह्वरे तस्थौ तत्काले रचितं ।

१ मां दयस्व दयस्वेश त्वां चित्तं श्रद्दधाति मे ।
त्रिपदोऽपगमं यावत् छायां त्वत्पक्षयोः श्रये ॥
२ सर्व्वोच्चमाह्वयामीशम् ईशं सिद्धिकरं मम ॥
३ स्वर्गात् प्रेष्योपकारं स मम रक्षां विधास्यति ।
ये मां जिग्रसिषन्ते ते मम कुर्व्वन्ति निन्दनं । सेला ।
ईश्वरो निजकारुण्यं सत्यत्वञ्च प्रहेष्यति ॥
४ वेष्ट्यते मे मनः सिंहैः शये चाग्निकणेष्वहं ।
निवसन् मनुजैः सार्द्धं शल्यवाणाग्रदन्तकैः ।
तीक्ष्णनिस्त्रिंशवद् येषां रसना विद्यते मुखे ॥
५ स्वर्गे प्रकाशतामीश तावकीना समुन्नतिः ।
मेदिन्या अपि सर्व्वत्र कीर्त्त्यतां महिमा तव ॥
६ मदीयौ चरणौ बद्धुं जालं तैर्योजितं जनैः ।

प्राणानाञ्च मदीयानां कृतं तैरवपीडनं।
मदग्रे खानितः कूपस्तन्मध्ये तेऽपतन् स्वयं॥ सेला॥
मच्चित्तं स्थिरमस्तीश मच्चित्तं ह्यस्ति सुस्थिरं। ७
अहं गानं करिष्यामि करिष्यामि प्रशंसनं।
त्वं मनो मे प्रबुध्यस्व नेवल् वीणे च जागृतं। ८
अहं प्रजागरिष्यामि ह्यरुणोदयतः पुरा।
हे प्रभो लोकमध्येऽहं कीर्त्तयिष्यामि ते स्तवं। ९
प्रशंसिष्यामि ते नाम जातीनामेव मध्यतः।
यद्धेतोः स्वर्गपर्य्यन्तं विस्तीर्णास्ति कृपा तव। १०
त्वदीया सत्यता तद्वद् स्पृशति व्योममण्डलं॥
स्वर्गे प्रकाश्यतामीश तावकीना समुन्नतिः। ११
मेदिन्या अपि सर्व्वत्र कीर्त्त्यतां महिमा तव॥

---

# ५८ अष्टपञ्चाशं गीतं।

१ अन्यायविचारकाणां दोषः ६ विनाशश्च।

वाद्यनियन्त्रे दातव्यम् अल्तस्हेतनामकस्वरयुक्तं दायूदो गुप्तधन-स्वरूपं गीतं।

मूका एव स्थ किं यूयं धर्म्मवाक्यप्रभाषणे। १
यथान्याय्यविचारे च भो भो मानवसूनवः॥
किञ्च यूयं मनोमध्ये दुष्कर्म्माण्यनुतिष्ठथ। २
कुरुध्वे च निजैर्हस्तै र्देशे दौरात्म्यतोलनं॥
आ मातृकुक्षिवासाद्धि प्रभ्रष्टाः सन्ति दुर्जनाः। ३
गर्भान्निष्क्रान्तिमारभ्य भ्राम्यन्त्यनृतवादिनः॥
तेषां यद् गरलञ्चास्ति तद् विषास्यविषोपमं। ४
सन्ति ते रुद्धकर्णाश्च वधिरः फणवानिव॥
अशृण्वन् मायिनः शब्दं मन्त्रपाठे पटोरपि॥ ५
तेषां वक्त्रस्थिता दन्ता भज्यन्तामीश्वर त्वया। ६
रदनान् युवसिंहानां भिन्धि हे परमेश्वर॥
गलिताः सलिलानां हि सदृशा विस्रवन्तु ते। ७
योजितास्तै र्निजा वाणाः सच्छिन्नाग्रा भवन्तु च॥

८ इविशम्बूकवत् ते च गलिता विस्रवन्तु हि।
गर्भात् च्युतं यथापत्यं नेक्ष्यन्तां ते तथा रविं॥
९ स्थालीनां युष्मदीयानां कण्टकैस्तापनात् पुरा।
पापान् पक्वान् अपक्वांश्च स हरिष्यति वात्यया॥
१० आनन्दिष्यति धर्म्मी हि प्रतीकारस्य दर्शनात्।
दुश्चरित्रस्य रक्ते स पादौ प्रक्षालयिष्यति॥
११ मानवाश्च वदिष्यन्ति धार्म्मिकस्य फलं स्थिरं।
न्यायाधीशश्च मेदिन्याम् ईश्वरोऽस्तीति निश्चितं॥

---

## ५९ ऊनषष्टितमं गीतं।

प्राणरक्षायां जातायां परमेश्वरस्य प्रशंसा।

वाद्यनियन्त्रे दातव्यम् अल्तस्हेतनामकस्वरयुक्तं दायूदो गुप्तधनरूपं गीतं। शौलेन प्रहिता लोका यदा दायूदं हन्तुं तस्य गेहं वेष्टयामासुस्तत्काले रचितं।

१ मामकीनविपक्षेभ्यो रक्ष मां हे मदीश्वर।
उत्थितेभ्यो विरुद्धं मे रिपुभ्यो मां समुद्धर॥
२ कुकर्म्मिभ्यो मनुष्येभ्यो निस्तारं मे विधेहि च।
रक्तपातिनरेभ्यश्च परित्राणं कुरुष्व मे॥
३ पश्य मत्प्राणनाशार्थं ते विद्यन्ते तिरोहिताः।
मद्विरुद्धं समायान्ति मानवा बलविक्रमाः।
हे परेश न मे दोषात् न पापाद् वा मया कृतात्॥
४ मयि चानपराधे ते द्रुत्वा तिष्ठन्ति सज्जिताः।
त्वं प्रबुद्धो मया सार्द्धं मिलित्वा चावलोकय॥
५ सैन्याधीश परेश त्वम् इस्रायेल ईश्वरः।
भिन्नजातीयलोकानां परीक्षार्थं सुजागृहि।
त्वया नानुग्रहीतव्याः सर्व्वे ते दुष्टवञ्चकाः॥ सेला॥
६ सन्ध्यायां पुनरागत्य क्रोशन्तः कुक्कुरा इव।
नगरस्यैव सर्व्वत्र पर्य्यटन्ति हि ते नराः॥
७ पश्य स्वकीयवक्त्रेभ्यो दुष्टवाचो वमन्ति ते।
ओष्ठाः खड्गधरास्तेषां कः शृणोतीति जल्पतां॥

किन्तु हे परमेश त्वं तानेवोपहसिष्यसि। ८
सकलान् भिन्नजातीयान् अवज्ञेयांश्च मंस्यसे॥
तेषां बलात् प्रतीक्षे त्वां यस्मान्मद्दुर्गमीश्वरः॥ ९
मदनुग्राहकस्त्वीश उपस्थास्यति मां स्वयं। १०
मदरीणां प्रतीकारम् ईशो मां दर्शयिष्यति॥
तान् न मारय नो चेत् तद् विस्मरिष्यन्ति मे प्रजाः। ११
भ्रमयन् स्वीयशक्त्या तान् पातयास्मत्फल प्रभो॥
ओष्ठाभ्यां निर्गतै र्वाक्यैस्तेषां वक्त्रं दुष्यति। १२
स्वदर्पेण ध्रियन्तां ते शापमिथ्योक्तितोऽपि च॥
त्वं तान् संहर कोपेन संहरैको न तिष्ठतु। १३
ईशो याकूवि शास्तीति दिगन्तस्थैश्च बुध्यतां॥ सेला॥
सन्ध्यायां पुनरागत्य क्रोशन्तः कुक्कुरा इव। १४
नगरस्यैव सर्व्वत्र पर्य्यटिष्यन्ति ते नराः॥
ते भ्रमिष्यन्ति भक्ष्यार्थम् अतृप्ता रात्रियापिनः॥ १५
अहं गास्यामि ते शक्तिं प्रातः स्तोष्यामि ते कृपां। १६
यत आसी र्विपत्काल त्वं दुर्गश्चाश्रयश्च मे॥
मच्छक्ते त्वां समुद्दिश्य मया गानं करिष्यते। १७
यस्मात् त्वमीश मद्दुर्गं मदनुग्राहकेश्वरः॥

---

# ६० षष्टितमं गीतं।

१ युद्धकाले दायूदः प्रत्याशा ६ प्रार्थना च।

वाद्यनियन्त्रे दातव्यं शोशन्नेदूतस्वरयुक्तं दायूदो गुप्तधनरूपं शिक्षार्थकं गीतं। यदा सोऽरामनहरयिमम् अरामसोवाञ्च जिगाय योयावश्च परावृत्य लवणनिम्नभूमाविदोमीयानां द्वादशसहस्राणि लोकान् विनाशयामास तत्काले रचितं।

ईश त्वया वयं त्यक्ता विकीर्णाश्च त्वया वयं। १
अस्मभ्यं समकुप्यस्त्वं परावर्त्तस्व नः प्रति॥
नीवृतं कम्पयित्वा त्वम् अकार्षीस्तद्विदारणं। २
त्वं पूर्णीकुरु तद्भङ्गान् यस्माच्चाल्यते स तैः॥
त्वया स्वकीयलोका हि सङ्कटं परिदर्शिताः। ३

मद्यमुन्मत्ततार्कारं पायिताश्च वयं त्वया ॥
४ स्वभक्तेषु तु लोकेषु पताकैकार्पिता त्वया।
तेभ्य उन्नतिदानार्थं सत्यतायाः प्रतापतः ॥ सेला ॥
५ यथा तव प्रिया लोकाः परित्राणमाप्नुयुः।
तदर्थं त्वं स्वहस्तेन त्रात्वा देहि न उत्तरं ॥
६ स्वपवित्रतयावादीत् ईश्वरस्तेनोल्लसाम्यहं।
शिखिमं तु विभक्ष्यामि मास्ये सुक्कोतप्रान्तरं ॥
७ मदीयो गिलियदोऽस्ति मिनशिश्च मदीयकः।
इफ्रयिमः शिरस्त्रं मे यिहूदा विधिदायकः ॥
८ मोयावो जलपात्रं मे क्षालनस्योपकारकं।
इदोमस्योपरि स्वीयां पादुकां प्रक्षिपाम्यहं।
पिलेष्टीयाख्यदेश त्वं जयनादं कुरुष्व मे ॥
९ सुदृढं नगरं नीत्वा को मां तत् प्रापयिष्यति।
क इदोमपुरं यावन्मार्गं मां दर्शयिष्यति ॥
१० ईशास्मान् त्यक्तवान् यस्त्वं त्वं किं तन्न करिष्यसि।
अस्माकं वाहिनीनाञ्च मध्ये किं न गमिष्यसि ॥
११ अस्मान् क्लेशात उद्धर्त्तुम् उपकारं विधेहि नः।
उपकारो मनुष्येण कृतो निष्फल एव हि ॥
१२ ईश्वरेणैव वीरत्वम् वयमाचरितुं क्षमाः।
स एवास्मद्विपक्षांश्च चरणाभ्यां विमर्द्दिता ॥

---

## ६१ एकषष्टितमं गीतं।

परमेश्वरे दायूद आश्रयणं।

यन्त्रवाद्यनियन्त्रे दातव्यं दायूदो गीतं।

१ ईश त्वं शृणु मे रावं प्रार्थनां मे निशामय ॥
२ आक्रयामि दिगन्तस्थस्त्वां चित्तोद्वेगहेतुना।
मम दुर्गम्यमुच्चत्वात् शैलं त्वं मां समानय ॥
३ यतो हेतोस्त्वमेवासि मामकीनः समाश्रयः।
त्वञ्च मे सुदृढं दुर्गं परिपन्थिनिवारकं ॥
४ अनन्तकालमेवाहं निवत्स्यामि तवोटजे।

त्वदीयपक्षयोश्छायां करिष्ये चाहमाश्रयं ॥ सेला ॥
यस्मान्मम व्रतानि त्वम् ईश्वरः श्रुतवानसि । ५
मह्यं स्वनामभक्तानां समांशित्वञ्च दत्तवान् ॥
भूपते र्दिनसङ्ख्याया वर्द्धनं त्वं विधास्यसि । ६
तद्वर्षाणाञ्च दीर्घत्वं पुरुषानुक्रमोपमं ॥
ईश्वरस्य समक्षं स सदासीनो भविष्यति । ७
करुणां सत्यताञ्च त्वं तस्य रक्षार्थमादिश ॥
तेनाहं परिगास्यामि तव नाम निरन्तरं । ८
शोधयन् मामकीनानि व्रतान्येव दिने दिने ॥

---

## ६२ द्वाषष्टितमं गीतं।

ईश्वरस्य सारत्वं मनुष्याणाम् असारत्वं ।

यिदूथूनीयवर्गस्य वाद्यनियन्त्रे दातव्यं दायूदो गीतं।

ईशमेव समुद्दिश्य मौनि तिष्ठति मे मनः । १
मामकीनं परित्राणं तस्मादेव प्रजायते ॥
केवलं सोऽस्ति मे शैलो मम तारणकारणं । २
उच्चदुर्गं ममास्ते स नाहं प्रस्खलिताततरां ॥
नर एकः कियत्कालं युष्माभिस्त्वाक्रमिष्यते । ३
यथा कुड्यं बहिर्लम्बं भग्नं वा वारणं यथा ।
सर्व्वे यूयं कियत्कालं तं तथैव हनिष्यथ ॥
ते तस्योच्चपदादेव मन्त्रयन्ते निपातनं । ४
ते मृषोक्तिषु सन्तुष्टाः प्रददत्याशिषं मुखैः ।
किन्तु शापं ददत्येव निजान्तःकरणेषु ते ॥ सेला ॥
ईशमेव समुद्दिश्य मौनि तिष्ठ मनो मम। ५
यस्मान्मम प्रतीक्षायाः सिद्धिस्तेनैव जायते ॥
केवलः सोऽस्ति मे शैलो मम तारणकारणं । ६
उच्चदुर्गं ममास्ते स न स्खलिष्याम्यहं ततः ॥
मामकीनपरित्राणं तेजश्चेश्वरमूलकं। ७
मदीयं सुदृढं दुर्गम् आश्रयो मम चेश्वरः ॥
तस्मिन् कुरुत विश्वासं सर्व्वकाले हि हे प्रजाः। ८

श्रमनो ध्वंस तत्साद्धाद् ईश्वरोऽस्माकमाश्रयः ॥ सेला ॥
९ अलीका मर्त्त्यसन्ताना असारा वीरसूनवः।
उत्पतन्ति तुलायां ते सर्व्वे वाष्पादगौरवाः ॥
१० मा विश्वसत दौरात्म्ये लुण्ठनाच्च न दृप्यत।
सम्पत्तौ वर्द्धमानायां मा धत्त तत्र मानसं ॥
११ वाक्यमेकं जगादेशो द्विर्मया तत् परिश्रुतं।
वस्तुत ईश्वरस्यास्ति विक्रमस्याधिकारिता ॥
१२ कृपायाश्चाधिकारित्वं तथैवास्ति तव प्रभो।
यस्मात् त्वयैव दातव्यं सर्व्वेभ्यः कर्म्मणां फलं ॥

---

## ६३ त्रिषष्टितमं गीतं।

ईश्वरानुग्रहस्याकाङ्क्षा शत्रून् जेतुमपेक्षा च।

यिहूदायाः प्रान्तरे स्थितिकाले कृतं दायूदो धर्म्मगीतं।

१ ईश्वर त्वं मदीयेशस्त्वामेवानुसराम्यहं।
त्वदर्थं मे मनस्तृष्यक् त्वाञ्चाकाङ्क्षति मे तनुः।
मरुभूम्यां सुशुष्कायां जलाभावेन सीदतः ॥
२ धर्म्मधाम्नि मया यादृक् सम्प्राप्तं तव दर्शनं।
तादृगेव दिदृक्षोऽहं विक्रमं गौरवञ्च ते ॥
३ यतस्त्वदीयकारुण्यम् उत्तमं जीवनादपि।
अधरौ मामकीनौ हि प्रशंसां कुरुतस्तव ॥
४ यावज्जीवं करिष्यामि धन्यवादं तवेदृशं।
तावत्त्वदीय नाम्ने च भविष्यामि कृताञ्जलिः ॥
५ तेनैव सारमेदोभ्याम् इव तर्प्स्यति मे मनः।
हर्षनादकृदोष्ठाभ्यां मम वक्त्रञ्च गास्यति ॥
६ त्वां स्मरन् निजशय्यायां ध्यायामि प्रहरेष्वहं ॥
७ यतो हेतोस्त्वमेवासि मामकीनोपकारकः।
तस्मात् त्वत्पक्षयोश्छायाम् आश्रितः प्रोल्लसाम्यहं ॥
८ मनस्त्वदनुरक्तं मे सन्धार्य्योऽहं करेण ते ॥
९ अमी स्वीयविनाशार्थं मम प्राणजिघांसवः।

वसुधाया अधोभागं प्रवेक्ष्यन्ति निपातिताः ॥
अर्पिता असिधारे ते विभक्ष्यन्ते च जम्बुकैः ॥ १०
किन्तु चौणिपते र्हर्ष ईश्वरात् प्रजनिष्यते। ११
यश्च शप्स्यति तन्नाम्ना श्लाघा तेन करिष्यते।
यस्माद् असत्यवक्तॄणां वदनं सन्निरोत्स्यते ॥

---

# ६४ चतुःषष्टितमं गीतं।

वैरिणां दोषो विनाशश्च।

वाद्यनियन्त्रे दातव्यं दायूदो धर्म्मगीतं।

चिन्तायुक्तस्य मे रावम् ईश्वर त्वं निशामय। १
विपक्षान्मम यत्त्रासस्तस्मान्मे रक्ष जीवनं ॥
मां प्रच्छादय दुष्टानां मानवानां कुमन्त्रणात्। २
कलहाच्च मनुष्याणाम् अधर्म्माचारकारिणां ॥
ते तृणवन्त्यसिवज्जिह्वां सन्धाय कटुवागिषुं ॥ ३
साधुं प्रति रहःस्थाने प्रक्षेप्तुं चिन्तयन्ति च। ४
अकस्माच्च तमुद्दिश्य त्यजन्ति निर्भयाः शरान् ॥
सङ्कल्पयन्ति ते लोका मिथो वाढां कुमन्त्रणां। ५
गुप्तमुन्माथयोगाय चालपन्ति परस्परं।
वयं केनेक्षितुं शक्या इति वाक्यं वदन्ति च ॥
हिंसां सञ्चिन्त्य तैः सिद्धं युक्तिः पक्केति गद्यते। ६
एकैकस्य सुगम्भीरम् अन्तश्चित्तञ्च विद्यते ॥
अकस्मात् तान् समुद्दिश्य वाणं प्रक्षेप्स्यतीश्वरः। ७
तदानीञ्च भविष्यन्ति स्वयं ते क्षतविक्षताः ॥
ते चाधःपातयिष्यन्ते समाक्रान्ताः स्वजिह्वया। ८
यावन्तस्तानवेक्षन्ते ते विद्रोष्यन्ति सर्व्वतः ॥
तेन सर्व्वे नरा भीता ईश्वरेण कृतां क्रियां। ९
वर्णयिष्यन्ति भोत्स्यन्ते तस्याचारञ्च ते तदा ॥
हृष्टः परेश्वरात् साधुः शरणं तं गमिष्यति। १०
सर्व्वैः सरलचेतोभि र्धन्यवादः करिष्यते ॥

# ६५ पञ्चषष्टितमं गीतं।

ईश्वरानुग्रहाशिषो वर्णनं।

वाद्यनियन्त्रे दातव्यं दायूदा कृतं गानार्थकं धर्म्मगीतं।

१ त्वामेवेश्वर सीयोने प्रशंसा सम्प्रतीक्षते।
त्वामुद्दिश्य व्रतस्यापि परिशोधः करिष्यते॥
२ त्वाञ्च हे प्रार्थनाश्रोतः सर्व्वेऽभ्येष्यन्ति मानवाः॥
३ मामकीनापराधा ये ते मत्तो बलवत्तमाः।
अस्मदीयास्तु ये दोषास्तान् त्वमेव क्षमिष्यसे॥
४ यो मनुष्यस्त्वया वृत्वा समानीतः स्वसन्निधिं।
प्राङ्गणेषु त्वदीयेषु निवसेत् धन्य एव सः॥
तर्प्स्यामस्तव गेहस्य कल्याणनिधिना वयं।
पवित्रे तव प्रासादे सङ्गृहीतः स विद्यते॥
५ भयप्रदानि धर्म्मेण प्रार्थनायाः फलानि हि।
अस्मभ्यं वितरिष्यन्ते त्वयास्मत्त्रातरीश्वर।
सर्व्वेषां क्षितिप्रान्तानां दूरपारस्य चाश्रय॥
६ स्वबलेनाद्रिनिर्म्मात बद्धश्रेणे च तेजसा॥
७ गर्जनं तोयराशीनां तदूर्म्मीणाञ्च गर्जनं।
जातीनां कलहस्यापि निःशब्दीक्रियते त्वया॥
८ लक्षणेभ्यस्त्वदीयेभ्यो बिभ्यत्युर्व्यन्तवासिनः।
सूर्य्योदयास्तयोः स्थाने त्वं प्रफुल्लीकरोषि च॥
९ मही निरीक्ष्य सिक्त्वं विदधासि धनान्वितां।
ईश्वरीयपयस्विन्या सलिलैः परिपूर्णया।
संस्करोषि नृणां धान्यम् इत्थं संस्कृतया भुवा॥
१० तोयैस्त्वोक्षसि तत्सीता आली नर्म्मीकरोषि च।
वृष्ट्या करोषि तां म्रदीम् आशासे च तदङ्कुरं॥
११ स्वकल्याणकिरीटेन वत्सरो भूष्यते त्वया।
तव स्यन्दननेमिभ्यः स्निग्धता स्यन्दते पथि॥
१२ स्यन्दते प्रान्तरस्थासु पशुचारणभूष्वपि।
पर्व्वता अपि शोभन्त उल्लासेन विभूषिताः॥

मेषै र्यामा हि केदाराः श्रस्याच्छन्ना उपत्यकाः। १३
तन्नत्याः सकला गानं हर्षनादञ्च कुर्व्वते॥

## ६६ षट्षष्टितमं गीतं।

१ अनुग्रहप्राप्तिनिमित्तम् ईश्वरप्रशंसा १३ प्रतिश्रुतिकरणञ्च।

वाद्यनियन्त्रे दातव्यं गानार्थकं धर्म्मगीतं।

कुरुध्वं सकला मर्त्त्या ईश्वराय जयध्वनिं॥ १
परिगायत गीतेन तस्य नाम्नश्च गौरवं। २
तदीयायाः प्रशंसाया गौरवञ्चाभिसंस्तुत॥
इत्थं वदत कीदृक् त्वं भेतव्योऽसि स्वकर्म्मभिः। ३
तव शक्तिमहत्त्वात् त्वां प्रियं वक्ष्यन्ति शत्रवः॥
भजनं ते करिष्यन्ति सकला मर्त्त्यवासिनः। ४
त्वामेवोद्दिश्य गास्यन्ति गास्यन्ति तव नाम ते॥ सेला॥
आयातेशस्य कर्म्माणि स्वाश्चर्य्याणि प्रपश्यत। ५
नृसन्तानान् प्रति स्वीयैः कर्म्मभिः सोऽस्ति भीतिदः॥
विकृत्य तोयराशिं स शुष्कभूमिं चकार हि। ६
पादै र्लोका नदीं तेरुस्तत्र तेन ननन्दिम॥
अनन्तं क्रियते राज्यं तेन स्वीयपराक्रमात्। ७
तस्य नेत्रे परीक्षेते भिन्नजातीयमानवान्।
नहि कुर्व्वन्त्वहङ्कारम् आज्ञालङ्घनकारिणः॥ सेला॥
हे प्रजाः सकला यूयं धन्यं ब्रूत न ईश्वरं। ८
तदीयायाः प्रशंसाया उच्चैः श्रावयत ध्वनिं॥
यस्माज्जीवदशायां नः स्थिरान् प्राणान् करोति सः। ९
नानुजानाति चास्माकं चरणानां विचालनं॥
अस्माकन्तु परीक्षापि कृता हे ईश्वर त्वया। १०
रौप्यसंशोधनेनेव वयं संशोधितास्त्वया॥
त्वया जालं प्रवेश्यास्मान् क्लिष्टो भारो न्यधायि नः कटौ॥ ११
अश्वारूढा मनुष्या नो मस्तकोपरि गामिताः। १२
वह्निना सलिलेनापि कृतवन्तो गमं वयं।

किन्त्वस्मान् त्वं समुद्धृत्य पुष्कलं स्थानमानयः॥
१३ आदायाहं बलीन् हव्यान् प्रवेक्ष्यामि तवालयं।
प्रति त्वां शोधयिष्यामि मामकीनव्रतानि च॥
१४ ईरितानि मदोष्ठाभ्यामुक्तान्यास्येन चापदि॥
१५ होमार्थञ्च पशून् पुष्टान् मेषांश्चाथ सुगन्धिकं।
तुभ्यं दास्यामि छागैश्च सार्द्धं यक्ष्यामि पुङ्गवान्॥ सेला॥
१६ ईशभक्ता नरा यूयमागत्य शृणुताखिलाः।
स मदात्महितार्थं यत् कृतवान् तद् वदाम्यहं॥
१७ मन्मुखेन स आहूतो जिह्वया च प्रशंसितः॥
१८ दुष्कृतं चेदपैक्षिष्ये निजान्तःकरणेन हि।
तर्हि तु प्रभुना क्वापि श्रवणं नाकरिष्यत॥
१९ किन्त्वीशः श्रवणं कृत्वा मेऽशृणोत् प्रार्थनारवं॥
२० धन्यः स ईश्वरो येन नापास्ता प्रार्थना मम।
स्वकीयानुग्रहश्चापि नहि मत्तो वियोजितः॥

---

## ६७ सप्तषष्टितमं गीतं।

सर्व्वेषां हिताय प्रार्थना।

यन्त्रवाद्यनियन्त्रे दातव्यं गानार्थकं धर्म्मगीतं।

१ ईशोऽस्मान् अनुगृह्णातु ददात्वस्मभ्यमाशिषं।
अस्मान् प्रति निजं वक्त्रं स प्रसन्नं करोतु च॥ सेला॥
२ पश्चात्ते ज्ञायतां मर्त्त्ये त्वन्मार्गः सर्व्वजातिभिः॥
३ त्वां स्तोष्यन्ति प्रजा ईश त्वां स्तोष्यन्त्यखिलाः प्रजाः॥
४ आनन्दं हर्षनादञ्च प्रकरिष्यन्ति जातयः।
यस्मात् त्वमेव धर्म्मेण विचारयिष्यसि प्रजाः।
पृथिवीवासिनी र्ज्जातीस्त्वं स्वयञ्च विनेष्यसि॥ सेला॥
५ त्वां स्तोष्यन्ति प्रजा ईश त्वां स्तोष्यन्त्यखिलाः प्रजाः॥
६ वसुधापि स्वकीयानि फलान्युत्पादयिष्यति।
दास्यत्याशिषमस्मभ्यम् ईश्वरोऽस्माकमीश्वरः॥
७ स एवाशिषमस्मभ्यं दास्यति स्वयमीश्वरः।
सर्व्वे तस्माच्च भेष्यन्ति धरणीप्रान्तवासिनः॥

# ६८ अष्टषष्टितमं गीतं।

१ दायूदः प्रार्थना ४ अनुग्रहस्य १५ समाजरक्षायाः १६ आश्चर्य्यकर्म्मणश्च कृते परमेश्वरस्य प्रशंसा १८ दायूदो विनयश्च।

वाद्यनियन्त्रे दातव्यं दायूदा कृतं गानार्थकं गीतं।

उत्तिष्ठतीश्वरस्तस्य विकीर्य्यन्ते च वैरिणः। १
तद्द्वेष्टारश्च कुर्व्वन्ति तस्य साक्षात् पलायनं॥
चाल्यते च यथा धूमस्ते चाल्यन्ते तथा त्वया। २
मधूच्छिष्टं यथा वह्नेः समक्षं द्रवतां व्रजेत्।
ईश्वरस्य समक्षं हि तथा नश्यन्ति दुर्ज्जनाः॥
ईश्वरस्य समक्षञ्च विनन्दन्त्युल्लसन्ति च। ३
हर्षनादश्च कुर्व्वन्ति परितोषेण धार्म्मिकाः॥
गानं कुरुध्वमीशाय तन्नाम्नो गायत स्तवं। ४
प्रान्तरे यो रथारूढो याति निर्म्मात तत्पथं।
यिहोवा इति तन्नाम्नाह्लादध्वं तस्य सम्मुखे॥
पितास्ति पितृहीनानां विधवानां विचारकः। ५
पवित्रे स्वीय आवासे विद्यमानः स ईश्वरः॥
निःसङ्गान् परिवाराणां मध्ये वासयतीश्वरः। ६
वन्दिनो मोचयित्वा स करोति प्राप्तमङ्गलान्।
निवसन्ति मरुस्थाने निदेशलङ्घिनो नराः॥
ईश्वर स्वीयलोकानाम् अग्रेऽग्रे त्वयि गच्छति। ७
प्रान्तरस्यैव मध्येन त्वयि यात्राञ्च कुर्व्वति॥ सेला॥
ईशसाक्षाच्चकम्पे भूराकाशोऽपि ववर्ष च। ८
तत्र सीनय ईशस्येस्रायेलीयेशितुः पुरः॥
प्रेरिता चोपहाराणां वृष्टिर्हे ईश्वर त्वया। ९
क्लान्तस्तवाधिकारश्च त्वया सुस्थीकृतः पुनः॥
तावकीनसमाजश्च तत्र वासं समाप्तवान्। १०
दुःखिने सुस्थता दत्ता स्वसद्भावात् त्वयेश्वर॥
सुवार्त्ता प्रभुना दत्ता तद्वक्त्रीणां महासभा॥ ११
पलायन्त पलायन्त सैन्यानामधिपा नृपाः। १२
लोकानां प्रविभागश्च व्यदधाद् गृहवासिनी॥

१३ अपि यूयं मेषवासानां मध्ये यूयं कपोतवत्।
रौप्यमण्डितपक्षा वा दीप्तस्वर्णतनूरुहाः॥
१४ सर्व्वशक्तिमता देशे विकीर्णेषु च राजसु।
सल्मोनाख्योऽपि कृष्णोऽद्रिस्तुषारेण व्यशोभत॥
१५ वाशन ईश्वरीयोऽद्रि र्वाशनः कूटवान् गिरिः॥
१६ भो भो प्रोन्नत उच्चाग्राः किमर्थं यूयमीर्ष्यथ।
गिरये निजवासार्थं रोचितायेश्वरेण हि।
अवश्यं सर्व्वदा तत्र परमेशो निवत्स्यति॥
१७ अयुतानि सहस्राणि सहस्राणोशितु रथाः।
प्रभुस्तन्मध्यवर्त्त्यस्ति धर्म्मधाम्न्यस्ति सीनयः॥
१८ त्वमेवोद्गतवानूर्द्धं जेतॄन् बद्धा च नीतवान्।
गृह्णीथ्यन् दानवन्मर्त्त्यान् अबाध्यांश्चापि मानवान्।
प्रभुना परमेशेन वसतिस्थानप्राप्तये॥
१९ दिने दिने प्रभुर्धन्योऽस्माकं क्षेमसमर्द्धकः।
अस्माकं त्राणकर्त्ता च स एव भवतीश्वरः॥ सेला॥
२० स ईशोऽस्मन्निमित्तञ्च भूयस्त्राणकृदीश्वरः।
विरुणोति मृते द्वारं स प्रभुः परमेश्वरः॥
२१ ईश्वरो निजशत्रूणां चूर्णयिष्यति मस्तकं।
अपापाचारिलोकानां मूर्द्धानं बहुकेशकं॥
२२ प्रभु र्वक्ति पुनश्चाहं तानानेष्यामि वाशनात्।
आनेष्यामि पुनश्चाहं गम्भीराज्जलधेरपि॥
२३ त्वया चूर्णयितव्यास्ते मग्नपादेन शोणिते।
लेढव्यं द्वेषिणां रक्तं जीह्वया च शुनां तव॥
२४ हे ईश्वर मनुष्यैर्हि दृश्यते गमनं तव।
मदीयेशस्य मे राज्ञो गमनं धर्म्मधामनि॥
२५ गच्छन्ति गायका अग्रे तत्पश्चाद् यन्त्रवादकाः।
ढक्कावादिकुमारीणां निवहेन प्रवेष्टिताः॥
२६ समाजेष्वीश्वरस्यैव धन्यवादो विधीयतां।
प्रभोः स्तुतिश्च युष्माभिरिस्रायेलान्वयोद्भवैः॥
२७ तत्रैवास्ति दिषां जेता विन्यामीनः कनिष्ठकः।
यिहूदाश्चाग्रगास्तेभ्यः प्रस्तराघातकारिणः।

सिवूलूनस्य चाध्यक्षा नप्तालेरग्रगा अपि ॥
तावकीनबलस्याज्ञां दत्तवानीश्वरस्तव । २८
कर्म्मेतदस्मदर्थं त्वं हे ईश प्रबलीभव ॥
यिरूशालमसंस्थस्य त्वत्प्रासादस्य हेतुतः । २९
त्वामुद्दिश्य महीपालाः समानेष्यन्त्युपायनं ॥
जन्तून् भर्त्सय नद्यास्थान् वृषभानाञ्च संहतिं । ३०
प्रजारूप्यांश्च गोवत्सान् रौप्यखण्डानि तै र्नतैः ।
दायिष्यन्ते विकीर्य्यन्तां लोका युद्धप्रियास्त्वया ॥
मिसरादागमिष्यन्ति महाकुलीनमानवाः । ३१
भविष्यत्यचिरात् कूश ईश्वराय कृताञ्जलिः ॥
धरणीस्थानि राज्यानि यूयमीशाय गायत । ३२
प्रभुमेव समुद्दिश्य यन्त्रवाद्येन गायत ॥ सेला ॥
वहते प्रांशुना व्योम्नातीव पूर्व्वतनेन सः । ३३
पश्य स स्वीयनादेन करोति प्रबलं रवं ॥
ईश्वरस्यैव प्राबल्यं युष्माभिः परिकीर्त्त्यतां । ३४
इस्रायेलीश्रिता तस्य व्योमस्पर्शि च तद्बलं ॥
ईश भयङ्करोऽसि त्वं स्वकीये धर्म्मधामनि । ३५
इस्रायेलो य ईशोऽस्ति स्वप्रजाभ्यो ददाति सः ।
बलं पराक्रमञ्चापि धन्यो भूयात् स ईश्वरः ॥

---

## ६९ ऊनसप्ततितमं गीतं ।

१ विपदः समये प्रार्थना २९ तत्फलञ्च ।

वाद्यनियन्त्रे दातव्यं शोशन्नीमनामकस्वरयुक्तं दायूदो गीतं ।

परित्रायस्व मामीश जलं प्राप्नोत्यसून् मम ॥ १
पङ्के मज्जामि गम्भीरे स्थातुं स्थानं न विद्यते । २
अम्बुराशौ प्रविष्टोऽहम् ऊर्म्मिभिश्च परिप्लुतः ॥
आक्रन्देन परिक्लान्तः शुष्ककण्ठो भवामि च । ३
क्षीयेते तेजसा नेत्रे ममेशस्य प्रतीक्षणात् ॥
मूर्द्धजेभ्योऽधिकाः सन्ति ममाहेतुकवैरिणः । ४

प्रबला मम हन्तारः प्रबवोऽन्यतवादिनः।
नापहृत्य मया द्रव्यं कर्त्तव्यं पुनरर्पणं॥
५ त्वमेवेश्वर जानासि मामकीनमबोधनं।
मदीया अपराधाश्च त्वत्त आच्छादिता नहि।
६ ये लोकास्त्वां प्रतीक्षन्ते सैन्याध्यक्ष परेश्वर।
प्रभो मत्कारणात् तेषां व्रीडितत्वं न जायतां॥
ये लोका मृगयन्ते त्वां हे इस्रायेल ईश्वर।
मन्निमित्तं विवर्णास्ते न भवन्तु कदाचन॥
७ त्वन्निमित्तं सहे निन्दां व्रीडयाच्छादिताननः॥
८ भ्रातृभिश्च परो मन्ये सूदासीनश्च सोदरैः॥
९ त्वद्गेहस्यानुरागेण ग्रसनं जायते मम।
त्वदीयनिन्दकानाञ्च निन्दनं वर्त्तते मयि॥
१० करोमि रोदनञ्चाहं स्वप्राणान् उपवासयन्।
तत् कर्म्मापि च निन्दायाः कारणं जायते मम॥
११ प्राणवस्त्रेण संवीतस्तेषां हास्यो भवामि च॥
१२ गोपुरेषूपविष्टा ये मद्विंसां चिन्तयन्ति ते।
मद्विरुद्धञ्च गायन्ति मानवा मद्यपायिनः॥
१३ किन्त्वहं प्रार्थनां कुर्व्वे त्वामुद्दिश्य परेश्वर।
देहि प्रसन्नताकालम् स्वमहात्म्यपयेश्वर।
स्वीयत्राणदसत्यत्वाद् यच्छ त्वं मह्यमुत्तरं॥
१४ त्वं समुद्धर मां पङ्कात् मा भवेन्मम मज्जनं॥
द्वेष्टृभ्योऽगाधतोयेभ्यश्चोद्धारः सम्भवेन्मम॥
१५ मा मां सम्प्लावयेद् वेला जलराशि र्न मां ग्रसेत्।
कूपो ममोपरि स्वीयं वक्त्रं मा संवृणोतु हि॥
१६ परमेशोत्तरं देहि यतः श्रेष्ठा कृपा तव।
स्वानुकम्पामहत्त्वाच्च दृष्टिं वर्त्तय मां प्रति॥
१७ मा समाच्छादयत्वं वक्त्रं निजदासं प्रति त्वया।
यस्मादस्म्यहमुद्विग्नो देहि मे तूर्णमुत्तरं॥
१८ मम प्राणानुपस्थाय तेषां मुक्तिं विधेहि च।
मामकीनविपक्षाणां हेतो मोचय समुद्धर॥
१९ त्वं जानासि ममावज्ञां वैवर्ण्यं व्रीडनं तथा।

क्लेष्टारो मम सर्व्वेऽपि विद्यन्ते तव सम्मुखे ॥
निन्दया मे मनो भग्नं प्रतीक्षे पीडितो दयां। २०
सा तु नास्ति न चाप्नोमि सान्त्वयितॄन् अभीप्सितान् ॥
तै र्लोकै र्मम भक्ष्यार्थं पित्तद्रव्यं प्रदीयते। २१
तृष्णानिवारणार्थं मां पाययन्त्यम्लजं रसं ॥
अतो भुक्त्यासनं तेषां सम्मुखे पाशवद् भवेत्। २२
निर्भये समये तेषां कूटयन्त्रञ्च जायतां ॥
अन्धत्वाद् दृष्टिहीनानि तेषां नेत्राणि सन्तु च। २३
त्वं तेषां कटिदेशस्य नित्यं कम्पं विधेहि च ॥
वर्ष तेषु निजं क्रोधं त्वत्कोपाग्निरुपैतु तान् ॥ २४
तेषां वासो भवेच्छून्यस्तेषां गेहाश्च निर्जनाः ॥ २५
यस्मात् त्वयाहतं लोकम् अभिधावन्ति ते नराः। २६
ये च विद्धास्त्वया तेषां यातनां वर्णयन्ति ते ॥
त्वया सञ्चीयतां तेषां पातकोपरि पातकं। २७
त्वत्पुण्यप्राप्तितस्तेषां क्रियताञ्च निवारणं ॥
जीवनग्रन्थमध्ये च तेषां लोपो विधीयतां। २८
मा भवेद् धार्म्मिकैः सार्द्धं तेषां नामाभिलेखनं ॥
दीनं क्लिष्टञ्च मामीश ते त्राणं प्रोच्छ्रयिष्यति ॥ २९
ईश्वरस्यैव नामाहं प्रशंसिष्यामि गीतिभिः। ३०
धन्यवादेन तस्यैव कीर्त्तयिष्यामि गौरवं ॥
परेशाय बलीवर्द्दात् तत्तु रोचिष्यतेऽधिकं। ३१
खुरशृङ्गविशिष्टाच्च वृषात् तेन स तोष्यति ॥
आनन्दिष्यन्ति तद् दृष्ट्वा मानवा नम्रचेतसः। ३२
हे ईशान्वेषिणो लोकाः सञ्जीविष्यति वो मनः ॥
यतो हेतो र्दरिद्रेषु मनो धत्ते परेश्वरः। ३३
स्वीयवन्दिमनुष्यांश्च नहि तुच्छीकरोति सः ॥
स्वर्गो मर्त्त्यः समुद्रश्च तेषां मध्ये चरन्ति च। ३४
यावन्तः प्राणिनस्तेऽपि सकलास्तं स्तुवन्तु हि ॥
ईश्वरेण सियोनस्य परित्राणं विधास्यते। ३५
निर्म्मास्यन्ते पुनस्तेन यिहूदा नगराणि च।
लोकास्तत्र निवत्स्यन्ति प्राप्ता देशाधिकारितां ॥

२६ तदीयसवकानाञ्च वंशो भोक्ष्यति मोदितं।
तन्नाम्नि प्रीयमाणा ये लोका वत्स्यन्ति तत्र ते॥

## ७० सप्ततितमं गीतं।

पापिरिपूणां विरुद्धं धार्म्मिकाणां प्रार्थना।

वाद्यनियन्त्रे दातव्यं दायूदः स्मरणार्थकं गीतं।

१ मामकीनपरित्राणं कर्त्तुमीश त्वमर्हसि।
मामकीनोपकारार्थं त्वं त्वरस्व परेश्वर॥
२ मत्प्राणान्वेषिलोकानां लज्जा व्रीडा च जायतां।
पलायन्तां विवर्णाश्च मदनिष्टप्रिया जनाः॥
३ ये मां वदन्ति हाहेति तेऽपयान्तु स्वलज्जया॥
४ सर्व्वे त्वदर्थिनस्त्वत्त आनन्दन्तूल्लसन्तु च।
त्वत्त्राणमोदिनो नित्यं भाषन्तां जयतीश्वरः॥
५ अहं दुःखी दरिद्रश्च मत्कृते त्वरयेश्वर।
त्वं मे रक्षी सहायश्च मा चिराय परेश्वर॥

## ७१ एकसप्ततितमं गीतं।

परमेश्वर आश्रयग्रहणं।

१ श्रद्दधामि परेश त्वां लज्जितं न विधेहि मां॥
२ त्वं स्वधर्म्मेण मां रक्ष ममोद्धारं कुरुष्व च।
मह्यं कर्णं निधाय त्वं मम त्राणं विधेहि हि॥
३ भव मे वासशैलस्त्वं सर्व्वदा सुगमो मम।
त्वं मत्त्राणविधातासि शैलो दुर्गश्च मे भवान्॥
४ हे मदीयेश्वर त्वं मां दुष्टलोकस्य हस्ततः।
दुर्वृत्तस्य खलस्यापि पापिभ्यश्च समुद्धर॥
५ त्वं मदीयप्रतीक्षायाः स्थानं प्रभो परेश्वर।
त्वमेवा बाल्यकालाद्धि प्रत्याशाविषयो मम॥
६ आ कुक्षिवासकालाच्च त्वं मदीयावलम्बनं।

त्वमेवा मातृगर्भाच्च मम मार्गप्रदर्शकः।
त्वामेवोद्दिश्य नित्यञ्च प्रशंसा क्रियते मया॥
अनेकैश्चित्रवन्मन्ये त्वन्तु मे दृढ आश्रयः॥ ७
पूर्णमस्ति मदीयास्यं तावकीनप्रशंसया। ८
त्वच्छोभायाः स्तवस्तेन क्रियते च निरन्तरं॥
मापसारय मां वृद्धं मा मां क्षीणबलं त्यज॥ ९
यतो मत्प्रातिकूल्येन भाषन्ते मम वैरिणः। १०
मत्प्राणान्वेषिणो लोका मिथः कुर्व्वन्ति मन्त्रणां॥
ईश्वरेणापि सन्त्यक्तम् अमुं धर्त्तुं प्रधावत। ११
तदीयोद्धारकः कोपि नास्तीत्येव वदन्ति ते॥
हे ईश्वर भवान् मत्तो नहि दूरेऽवतिष्ठतु। १२
मामकीनोपकाराय त्वं त्वरस्व मदीश्वर॥
मदात्मनो विपक्षाणां लज्जा नाशश्च जायतां। १३
निन्दापकीर्त्तिसञ्छन्नाः स्यु र्ममानिष्टचेष्टकाः॥
अहं नित्यं प्रतीक्षिष्ये वर्द्धयन् ते महास्तवं॥ १४
तावकीनस्य धर्म्मस्य त्वत्त्राणस्य च वर्णना। १५
मामकीनेन वक्त्रेण सर्व्वदैव करिष्यते।
यतो हेतो र्मया कापि सङ्ख्या नैवावगम्यते॥
प्रभोः परेशितुः शक्त्या करिष्याम्यहमागमं। १६
धर्म्मं ते वर्णयिष्यामि केवलं धर्म्ममेव ते॥
ईश्वर बाल्यमारभ्य मां त्वमेवोपदिष्टवान्। १७
अद्य यावत् प्रकाशन्ते तवाश्चर्य्याः क्रिया मया॥
ईश त्वं पक्वकेशं मां वार्द्धक्ये नहि सन्त्यज। १८
बलं ते ज्ञापयिष्यन्तम् एतत्कालिकमानवान्।
तावकीनप्रभावञ्च सर्व्वान् उत्तरकालिकान्॥
हे ईश तव यो धर्म्मः स त्वतीव समुन्नतः। १९
महन्ति तव कर्म्माणि तव कस्तुल्य ईश्वर॥
अतितीव्रान् बहून् क्लेशान् यस्त्वं मां समदर्शयः। २०
स एव त्वं पुनर्व्वारं मां हि सञ्जीवयिष्यसि।
क्षितेश्चाधःस्थलेभ्यो मां पुनरुन्नमयिष्यसि॥
वर्द्धयंश्च महत्त्वं मे भूयो मां सान्त्वयिष्यसि॥ २१

२२ केवलाख्येन यन्नेण त्वाञ्च स्तोष्याम्यहं तदा।
त्वदीयां सत्यतामेव संस्तोष्यामि मदीश्वर।
गास्यामि वीणयाहं त्वाम् ईस्रायेलः पवित्र राट्॥
२३ गायतस्त्वां समुद्दिश्य ममैतच्चाधरद्वयं।
त्वया मुक्तं मनश्चापि हर्षनादं करिष्यति॥
२४ मज्जिह्वापि दिनं कृत्स्नं धर्म्मं ते कीर्त्तयिष्यति।
यतो लज्जामकीर्त्तिञ्च प्राप्ता मेऽनिष्टचेष्टकाः॥

---

## ७२ द्विसप्ततितमं गीतं।

ख्रीष्टीयराजत्वे भविष्यद्वाक्यं।

सुलेमनुद्देश्यं गीतं।

१ हे ईश त्वं महीपालं स्वविचारविधीन् दिश।
क्षितीशस्य कुमाराय स्वीयधर्म्मं प्रदेहि च॥
२ शासनं तव लोकानां स न्यायेन विधास्यति।
सुविचारेण दीनानां त्वत्प्रजानाञ्च पालनं॥
३ तदानीञ्च भविष्यन्ति धर्म्मस्यैव प्रभावतः।
भूधराः क्षुद्रशैलाश्च प्रजानां शान्तिवाहकाः॥
४ दीनानाञ्च प्रजानां स सुविचारं करिष्यति।
निःस्वस्य सन्ततिं रक्षन् दुरात्मानञ्च चूर्णयन्॥
५ यावत् स्थास्यति सूर्य्यश्च यावच्छोभिष्यते विधुः।
तावत् प्रभेष्यति त्वत्तः पुरुषाणां परम्परा॥
६ यथा छिन्नतृणे वृष्टिस्तथा सोऽवतरिष्यति।
पृथिवीसेचनार्थस्य धारापातस्य वा समः॥
७ तस्य राजत्वकाले च प्रफुल्लिष्यति धार्म्मिकः।
चन्द्रस्य स्थितिपर्य्यन्तं महाशान्ति र्भविष्यति॥
८ सागरात् सागरं यावत् स राजत्वं करिष्यति।
नदीमारभ्य मेदिन्याः प्रान्तान् यावच्च शासनं॥
९ जानुपातं करिष्यन्ति तत्पाद्यान्मरुवासिनः।
क्षितिधूलीश्च लेक्ष्यन्ति सकलास्तस्य वैरिणः॥
१० द्वीपानां तर्शिशादीनां भूपा दास्यन्त्युपायनं।

शिवीयैश्च सिवीयैश्च नृपैरानेष्यते करः॥
तस्मै नमः करिष्यन्ति सकला भूमिपालकाः। ११
तस्य सेवां करिष्यन्ति सर्व्वजातीयमानवाः॥
यस्मात् समुद्धृतस्तेन दीनः खेदोक्तिमीरयन्। १२
मानवो दुर्द्दशापन्नो वर्ज्जितश्चोपकारिभिः॥
दुर्गतश्च दरिद्रश्च मनुष्यं सोऽनुकम्पते। १३
निर्धनस्यापि प्राणानां परित्राणं करोति सः॥
दौरात्म्यात् पीडितत्वाच्च स तेषां मोचयत्यसून्। १४
तत्पाद्धाच्छोणितं तेषां महामूल्यञ्च मन्यते॥
जीवन्तस्ते शिवीयञ्च तस्मै दास्यन्ति काञ्चनं। १५
तन्निमित्तं करिष्यन्ति प्रार्थनाञ्च निरन्तरं।
करिष्यन्ति च तस्यैव धन्यवादं दिने दिने॥
देशे पर्व्वतशृङ्गेषु बहुशस्यं भविष्यति। १६
लिवानोनाटवीवच्च तद्धान्यं दोलयिष्यति।
भूम्युत्पन्नतृणानीव फुल्लिष्यन्ति पुरे नराः॥
तस्य नाम सदा स्थायि यावद् राजिष्यते रविः। १७
तावत् तदीयनामापि तेजोवृद्धिं गमिष्यति।
आशीःप्राप्तिश्च तेनैव मनुष्याणां भविष्यति।
तच्च धन्यं वदिष्यन्ति सर्व्वजातीयमानवाः॥

---

धन्यः प्रभुः परेशः स इस्रायलीय ईश्वरः। १८
अद्वितीयः स एवास्ति सुमहाश्चर्य्यकर्म्मकृत्॥
धन्यं भूयात् सदा तस्य नामधेयं महायशः। १९
कृत्स्नं भूमण्डलं तस्य तेजसा परिपूर्य्यतां॥
तथास्तु। तथास्तु॥
यिशयसुतस्य दायूदः प्रार्थनाः सम्पूर्णतां प्राप्ताः॥ २०

---

# ७३ त्रिसप्ततितमं गीतं।

१ पापिलोकानां सुखं प्रतीर्ष्या १७ तस्याः प्रतीकारश्च।

आसफस्य धर्म्मगीतं।

१ इस्रायेले हितैष्येव शुद्धचित्तान् प्रतीश्वरः॥
२ किन्तु प्रायेण सञ्जातं पादयोः स्खलनं मम।
मदीयपादविक्षेपः कथञ्चिन्न हि प्राचलत्॥
३ यस्माद् ऐश्वर्य्यमद्दंयुभ्यः शान्तिं पश्यन् दुरात्मनां॥
४ मृत्यवे ते न बुध्यन्ते तेषां स्थूलः कलेवरः॥
५ मर्त्यवत् ते न ताप्यन्ते न क्लिश्यन्ते नरा इव॥
६ तस्मात् तेषामहङ्कारो जायते कण्ठभूषणं।
ते च दौरात्म्यवस्त्रेण कुर्व्वते स्वाङ्गवेष्टनं॥
७ मेदोबाहुल्यतस्तेषां वहिस्तिष्ठन्ति दृष्टयः।
तेषां मानससङ्कल्पाः सीमानञ्चातिशेरते॥
८ आचरन्तोऽभिमानं ते भाषन्ते द्वेषभावतः।
दौरात्म्यसूचकं वाक्यम् औद्धत्येन वदन्ति च॥
९ स्वर्गारोहि मुखं तेषां जिह्वा क्षौणिविहारिणी॥
१० ततो हेतोः प्रजास्तस्य भ्राम्यन्त्यत्र पराङ्मुखाः।
सलिलानि निपीयन्ते चातीव प्रचुराणि तैः॥
११ ते च वाक्यं वदन्तीदं कथं विज्ञास्यतीश्वरः।
सर्व्वेषामुपरिस्थस्य बुद्धिः किं काचनास्ति वा॥
१२ पश्यैते दुर्जना नित्यं सुस्थाः सम्पत्तिवर्द्धकाः॥
१३ वृथाकारि मया तर्हि निजचित्तस्य शोधनं।
वृथा निर्दोषतातोये हस्तयोः क्षालनं मम॥
१४ यस्मान्नित्यमहं ताप्ये सम्भर्त्स्ये च प्रगे प्रगे॥
१५ ईदृग्वाचं प्रभाषिष्ये कथामेनां वदन्नहं।
अविश्वासी भविष्यामि त्वत्सन्तानान्वयं प्रति॥
१६ तद् बोद्धुमहमध्यायं मद्दृष्ट्या तद् व्यथाकरं॥
१७ ईशस्य धर्म्मधामानि प्राविश्यन्त मया यदा।
तदा शेषदशा तेषां बोधगम्याभवन्मम॥
१८ स्थानेषु चिक्कणेष्वेव स्थापितास्ते नरास्त्वया।

त्वया निपातितास्तच्च खण्डखण्डं भवन्ति ते ॥
कीदृग्गुच्छिन्नतां यान्ति निमिषैकेन ते नराः। १९
ते लुप्यन्ते महात्रासैः सर्व्वनाशं व्रजन्ति च ॥
यथा स्वप्नः प्रबुद्धेन तेषां मूर्त्तिः प्रभो तथा। २०
त्वया जाग्रदवस्थायां सर्व्वथैवावमंस्यते ॥
इत्थं मे या मनःपीडा या च चित्तस्य यातना ॥ २१
तया बालोऽहमज्ञानः पशुवच्चास्मि ते पुरः ॥ २२
नित्यमस्मि त्वया सार्द्धं धृतदत्तकरस्त्वया। २३
त्वं स्वमन्त्रेण मां नीत्वा श्रिया पश्चाद् ग्रहीष्यसि ॥ २४
स्वर्गे मे कोऽस्ति पृथ्व्याञ्च त्वत्समो नास्ति मे प्रियः ॥ २५
देहे चित्ते च मे क्षीणे मच्चित्तस्य दृढाश्रयः। २६
नित्यस्थायी ममांशश्च विद्यते स्वयमीश्वरः ॥
यतः पश्य विनंक्ष्यन्ति त्वत्तो दूरे स्थिता नराः। २७
त्वां त्यक्त्वाभिचरन्तं त्वम् एकैकं ध्वंसयिष्यसि ॥
ईश्वरस्य तु सान्निध्यं मङ्गलोत्पादकं मम। २८
अहं प्रभोः परेशस्य समारक्षां समाश्रयं।
कर्म्मणां तस्य सर्व्वेषां वर्णनां कर्त्तुमिच्छुकः ॥

---

## ७४ चतुःसप्ततितमं गीतं।

१ मन्दिरविषयको विलापः १० ईश्वरे प्रार्थना च

आसफस्य ज्ञानसूचकं गीतं।

किमर्थं नित्यमेव त्वम् अस्मान् गर्हयसीश्वर। १
निजक्षेत्रस्थमेषेभ्यः कोपाग्ने धूममुत्क्षिपन् ॥
पूर्व्वकाले त्वया क्रीतां स्वकीयां समितिं स्मर। २
उत्तराधिकारस्य त्वया लब्धं सियोनाद्रिं त्वयाश्रितं ॥
चिरात् खण्डीकृतेऽस्मिंश्च गेहे पादार्पणं कुरु। ३
धर्म्मधामनि सर्व्वं हि विनष्टं परिपन्थिना ॥
तव मेलनशालानां मध्ये गर्ज्जन्ति तेऽरयः। ४
चिह्नार्थं स्वीयचिह्नानि तत्र संस्थापयन्ति च ॥

५ परश्वून् विपिने घोर ऊर्द्धमुत्थापयन्ति ये।
तेषां वृक्षच्छिदां तुल्याः प्रकाशन्ते नरा इमे॥
६ कुठारै र्मुद्गरैश्चापि साम्प्रतं युगपच्च ते।
भञ्जन्ति शिल्पकर्म्माणि तत्रत्यानि हि सर्व्वशः॥
७ त्वदीयधर्म्मधामानि वह्निना दीपयन्ति ते।
तव नाम्नोऽपि वासस्तै र्भूमिसात्कृत्य दूष्यते॥
८ युगपत् तानि लोप्स्याम इत्युक्त्वा निजमानसैः।
सर्व्वाण्यैश्वरवेश्मानि देशे ते दाहयन्ति हि॥
९ न पश्यामः स्वचिह्नानि भाविवादी न शिष्यते।
एतेषाञ्चान्तवित् कोपि मध्येऽस्माकं न विद्यते॥
१० हे ईश देविणा निन्दा कियत्कालं करिष्यते।
सर्व्वदा च विपक्षेण तव नामावमंस्यते॥
११ हस्तो दक्षिणहस्तस्ते कुतः सङ्कोच्यते त्वया।
वक्षसस्तं वहिष्कृत्य कुरु शत्रुविलोपनं॥
१२ आ पुरातनकालात् तु मम राजा त्वमीश्वर।
पुनः पुन र्मंहीमध्ये परित्राणविधायकः॥
१३ स्वीयपराक्रमेण त्वं तोयराशिं द्विधाकरोः।
सलिलाध्यक्षनागानां शिरोभङ्गस्त्वया कृतः॥
१४ लिवियाथनजन्तोश्च मूर्द्धानः खण्डितास्त्वया।
भक्ष्यार्थं मरुवासिभ्यस्तस्य दत्तश्च विग्रहः॥
१५ शैलं भित्त्वा त्वमुत्सश्च जलस्रोतश्च सृष्टवान्।
पुनः शोषितवांश्च त्वं तटिनी र्नित्यवाहिनीः॥
१६ दिवसस्तावकीनोऽस्ति तावकीना च शर्व्वरी।
दीप्ते र्दिवाकरस्यापि सृष्टिकर्त्ता त्वमेव हि॥
१७ वसुधायाश्च सीमानः सर्व्वे संस्थापितास्त्वया।
ग्रीष्महेमन्तकालानां त्वमेवासि विधायकः॥
१८ त्वया संस्मर्य्यतामेतत् परेशो निन्द्यते द्विषा।
ज्ञानवर्ज्जितया जात्या तव नामावमन्यते॥
१९ श्वापदे लोलभावे त्वं नार्पय स्वकलध्वनिं।
स्वीयदीनप्रजानाञ्च प्राणान् नित्यं न विस्मर॥
२० नियमं ते निरीक्षस्व यस्माद् भूमण्डलस्य हि।

तिमिरेणावृता देशाः पूर्णाः क्रौर्य्यस्य वेश्मभिः ॥
न परावर्त्ततां क्लिष्टो नरस्त्वत्तोऽपि लज्जितः। २१
लोकै र्दीनै र्दरिद्रैश्च तव नाम प्रशस्यतां ॥
ईश्वर त्वं समुत्तिष्ठ स्वविवादे वदस्व च। २२
स्मर त्वदीयनिन्दाञ्च ज्ञानहीनैः सदा कृतां ॥
तावकीनविपक्षाणां निनादञ्च न विस्मर। २३
उद्गच्छत्यूर्द्धमश्रान्तं गर्ज्जनं वैरिणां तव ॥

---

## ७५ पञ्चसप्ततितमं गीतं।

ईश्वरस्य धन्यवाद उपदेशकथनञ्च।

वाद्यनियन्त्रे दातव्यम् अल्तस्हेतनामकस्वरयुक्तम् आसफेन कृतं गानार्थकं धर्म्मगीतं।

ईश्वर त्वत्स्तुतिं कुर्म्मो वयं कुर्म्मस्तव स्तुतिं। १
समीपस्थञ्च ते नाम ज्ञाप्यतेऽद्भुतकर्म्मभिः ॥
मया सत्समयं प्राप्य न्याय्यं विचारयिष्यते ॥ २
लीयन्ते मेदिनी तस्याः सकलाश्च निवासिनः। ३
स्तम्भानान्तु तदीयानां स्थायित्वं निश्चितं मया ॥ सेला ॥
गर्व्विलोकानहं वच्मि यूयं मा भूत गर्व्विणः। ४
उच्चशृङ्गा न जायध्वम् इति वच्मि च दुर्जनान् ॥
निजशृङ्गञ्च युष्माभिरूर्द्धमुन्नम्यतां नहि। ५
न वा वाक्यान्युदीर्य्यन्तां साहङ्कारशिरोधिभिः ॥
नैव सूर्य्योदयस्थानात् नैव सूर्य्यास्तदेशतः। ६
नैव शून्यमरुस्थानाद् उन्नतिः सम्भविष्यति ॥
यतो हेतो र्विचारस्य विधाता स्वयमीश्वरः। ७
एकं करोति नीचं स तदन्यञ्च समुन्नतं ॥
तस्य परेशितु र्हस्ते विद्यते पानभाजनं। ८
क्षोभते तच्च मद्येन पूर्णं मिश्रितवस्तुना।
तेन तत् पायितैः सर्व्वै र्दुर्जनैः क्षितिवासिभिः।
कंसे स्थितं मलञ्चापि परिलिह्य निपास्यत ॥
सदा चाहं नविष्यामि गायन् याकूब ईश्वरं। ९

१० दुर्जनानाञ्च शृङ्गाणि प्रच्छेत्स्याम्यखिलान्यहं।
धार्म्मिकस्यैव शृङ्गाणि समाप्स्यन्ति समुन्नतिं॥

---

## ७६ षट्सप्ततितमं गीतं।

जयार्थमीश्वरीयगुणकीर्त्तनं।

वाद्यनियन्त्रे दातव्यम् आसफेन कृतं गानार्थकं धर्म्मगीतं।

१ सुविख्यातो यिहूदाख्ये देशे विद्यत ईश्वरः।
नामधेयं महत् तस्य चेस्रायेलीयनीवृति॥
२ दूष्यं तस्यास्ति शालेमे वासस्थानं सियोनि च॥
३ प्रभग्नं तेन तत्रैव वज्रतुल्यं शरासनं।
फलकश्चन्द्रहासश्च समरस्याखिलं बलं॥ सेला॥
४ तेजस्वी त्वं प्रतापी च चौरभूभृद्गणादपि॥
५ संहृता हि महानिद्रां ययु र्निश्चलचेतसः।
सर्व्वेषामेव वीराणां बभूवुरवशाः कराः॥
६ याकूबेश तवाक्रोशाद् रथा अश्वाश्च निद्रिताः॥
७ त्वं भेतव्यस्त्वयि क्रुद्धे त्वत्साक्षात् कोऽवतिष्ठते॥
८ तावक्रोनविचाराज्ञा स्वर्गतः श्राविता त्वया।
तेन पृथ्वी भयं प्राप्य निःशब्दा सम्बभूव हि॥
९ यस्माद् उत्थितवानीशो विचारं कर्त्तुमुद्यतः।
सकलान् पृथिवीस्थांश्च दीनान् सन्त्रास्यते हि सः॥ सेला॥
१० त्वत्प्रशंसा तु मर्त्त्यानां क्रोधेनोत्पादयिष्यते।
अतिरिक्तश्च यः क्रोधः स त्वया परिभन्त्स्यते॥
११ प्रभवे परमेशाय युष्माभि र्यत् प्रतिश्रुतं।
क्रियतां तस्य शोधोऽपि सर्व्वैस्तत्परिवेष्टकैः।
तं भयङ्करमुद्दिश्यानीयतामुपढौकनं॥
१२ राज्ञां प्राणापहर्त्ता स भेतव्यश्च क्षितीश्वरैः॥

---

## ७७ सप्तसप्ततितमं गीतं।

१ विपदः समये विलपनं १० परमेश्वरे समाश्रयणञ्च।

यिदूथूनवर्गीयवाद्यनियन्त्रे दातव्यम् आसफस्य धर्म्मगीतं।

ईशं प्रत्युच्चशब्देन मयाक्रामं विधीयते। १
ईशं प्रत्युच्चशब्दस्य मम वाक् तेन गृह्यतां॥
मामकीनविपत्काले करोम्यन्वेषणं प्रभोः। २
यामिन्यां मे करः क्लिन्नो विरामं नहि गच्छति।
मानसं मामकीनञ्च सान्त्वनां नहि मन्यते॥
ईशस्य स्मरणं कृत्वा क्रन्दनं क्रियते मया। ३
कुर्व्वतश्च मम ध्यानम् अवसीदति मानसं॥ सेला॥
यामिन्यां नेत्रयुग्मं मे निद्रातो वार्य्यते त्वया। ४
उद्वेगेन मया वाक्यं गदितुं नहि शक्यते॥
पूर्व्वदिनान्यनुध्यायन् वत्सरांश्च पुरातनान्। ५
यन्त्रवाद्यं स्मरिष्यामि रात्रिकाले मया कृतं। ६
मनसा चिन्तयिष्यामि मदात्मालोचयिष्यति॥
प्रभुनानन्तकालाय गर्हणं किं करिष्यते। ७
पुनश्चानुग्रहस्तेन नहि किं वाचरिष्यते॥
तत्कारुण्यस्य लोपः किं नित्यस्थायी भविष्यति। ८
पुरुषानुक्रमं यावद् किं वा नंक्ष्यति तद्वचः॥
ईश्वरस्य च किं जाता कृपाया अपि विस्मृतिः ९
क्रुद्धत्वाद् वा स्वकीयं किं वात्सल्यं स निरुद्धवान्॥ सेला॥
पश्चादित्थं मया प्रोक्तं योऽयं व्याधि र्ममाभवत्। १०
सोऽपि सर्व्वोपरिस्थस्य दक्षहस्तस्य वत्सरः॥
परमेशस्य कर्म्माणि चिन्तयिष्याम्यहं पुनः। ११
स्मरिष्यामि च प्राक्काले कृतास्तेनाद्भुताः क्रियाः॥
ध्यास्यामि तेऽखिलं कर्म्म भावयिष्यामि ते क्रियाः॥ १२
त्वदीयं वर्त्म हे ईश पवित्रत्वेन शोभते। १३
अस्मदीशस्य तुल्यः को महान् विद्यत ईश्वरः॥
ईश आश्चर्य्यकर्म्मा त्वं व्यक्तशक्तिश्च जातिषु॥ १४
निजबाहुबलेन त्वं स्वकीया मुक्तवान् प्रजाः। १५

याकूबस्यैव सन्तानान् यूषफस्य च वंशजान्॥ सेला॥
१६ अब्भिस्त्वां दृष्टवानीश त्वां दृष्ट्वाब्भिरकम्प्यत।
गम्भीराण्यपि वारीणि सन्त्रस्तान्यभवन् तदा॥
१७ अवर्षंस्तोयमम्भांसि मेघाश्चोदैरयन् ध्वनिं।
चतुर्द्दिक्षु व्यकीर्य्यन्त तावकीनशरा अपि॥
१८ पर्य्यभ्राम्यत् त्वदीयस्य स्तनितस्य च गर्जनं।
धरादीप्यत विद्युद्भिश्चक्षिभावेपतावनिः॥
१९ अर्णवे तव वर्त्मासीत् तव मार्गो महोदधौ।
आसंस्त्वानुपलभ्याणि पादयो र्लक्षणानि ते॥
२० मूसाहारोणयो र्हस्तैः स्वप्रजा नयतोऽविवत्॥

---

## ७८ अष्टसप्ततितमं गीतं।

इस्रायेलीयलोकान् प्रतीश्वरस्य शासनम् आश्चर्य्यं कर्म्म च।

आसफस्य ज्ञानसूचकं गीतं।

१ भो भो लोकाः स्वजातीया बुध्यध्वं शासनं मम।
श्रवणैः प्रतिगृह्णीत मम वक्त्रस्य भाषणं॥
२ अहं दृष्टान्तवाक्येन व्यादास्यामि निजं मुखं।
मया प्रव्याहरिष्यन्ते गूढार्थाः पूर्व्वकालिकाः॥
३ यच्छ्रुत्वा ज्ञायते ऽस्माभि र्निजतातै र्निवेदितं।
४ तत् तेषामात्मजेभ्यो नापङ्क्ष्यामहे वयं।
परेशस्य स्तवः शक्तिः कृतास्तेनाद्भुताः क्रियाः।
सर्व्वं हि भाविवंशायास्माभि र्निवेदयिष्यते॥
५ याकूवान्वयमध्ये स स्थापयामास शासनं।
इस्रायेलीयवंशे च स शास्त्रं विदधे तथा।
बालान् विनयतैतस्मिन्नित्यादिदेश च नः पितॄन्॥
६ तद् बुद्ध्वा सोष्यमाणैस्तैः सन्तानै र्भाविवंशजैः।
समुत्थाय स्वसूनुभ्यस्तच्छास्त्रं कथयिष्यते॥
७ ईश्वरं श्रद्दधानाश्च न विस्मृत्येशितुः क्रियाः।
ते तदीयनिदेशानाम् आचरिष्यन्ति वश्यतां॥

इत्थं ते न भविष्यन्ति निजतातगणोपमाः। ८
पथभ्रष्टा अबाध्या वा लोका अस्थिरचेतसः।
अविश्वास्यस्वभावा वा मानवा ईश्वरं प्रति॥
इफ्रयिमस्य सन्ताना धन्विनः शस्त्रधारिणः। ९
सङ्ग्रामस्यैव काले हि ते बभूवुः पराङ्मुखाः॥
ईशितु र्नियमस्यापि ते लोकाः न समाचरन्। १०
तस्य शास्त्रीयमार्गेऽपि गन्तुमासन् अनिच्छवः॥
व्यस्मरंस्ते क्रियास्तस्य स्वाश्चर्य्यास्तेन दर्शिताः॥ ११
कर्म्मातीवाद्भुतं तेषां पितॄणां दृष्टिगोचरे। १२
कृतं तेन मिसर्देशे सोयनस्यैव प्रान्तरे॥
स समुद्रं द्विधा कृत्वा तारयामास तान् स्वयं। १३
ऊर्द्धमुत्थापयामास सलिलान्यपि राशिवत्॥
दिवा मेघेन छत्त्रायां रजन्यां वह्नितेजसा। १४
गन्तव्यं दर्शयन् मार्गं गमयामास तान् जनान्॥
मरुस्थानेऽपि तेनैव द्विधा कृत्वा शिलोच्चयान्। १५
ते गम्भीरार्णवस्येव बहुतोयानि पायिताः॥
निष्क्रान्ताः सरितः शैलात् सुस्रुवुः सागरोर्म्मिवत्॥ १६
तदा तस्य विरुद्धं ते पुनः पापं समाचरन्। १७
पुनः सर्व्वोपरिस्थस्य तत्र प्राकोपयन् मरौ॥
स्वीयलोभस्य शान्त्यर्थं भक्ष्यस्य प्रार्थनेन ते। १८
ईश्वरस्य परीक्षाञ्च चक्रिरे निजमानसैः॥
ईश्वरस्य विरुद्धं ते वाचमेनां बभाषिरे। १९
उपकल्पयितुं भोज्यं किं शक्नोतीश्वरो मरौ॥
पश्य तेनाहते शैले वारीणि प्रास्रवन् यथा। २०
सलिलानां प्रवाहाश्च विनिरक्रमिषु र्यथा।
किं तथैवान्नदानञ्च विधातुं तेन शक्यते।
स्वप्रजानां कृते वा किं मांसं स रचयिष्यति॥
इति श्रुतेः समक्रुध्यत् तच्छ्रुत्वा परमेश्वरः। २१
याकूबस्य विरुद्धश्च कोपाग्निः प्राज्वलत् तदा।
इस्रायेलो विरुद्धश्च रोषधूमः समुद्गतः॥
यस्मादीशे न विश्वस्य तत्त्रायां नाश्रयन्त ते॥ २२

१३ तेनादिशोर्द्धगान् मेघान् व्योमद्वारं विमोच्य च ॥
२४ तेषु मान्नाभिधं भक्ष्यम् अवतार्य्यत वृष्टिवत्।
गोधूमो गगनोत्पन्नस्तेभ्यस्तादीयतान्नवत्॥
२५ इत्थं विक्रमिणां भक्ष्यम् एकैकेनोपभुज्यत।
स तेषां तृप्तिपर्य्यन्तं पाथेयं प्राहिणोत् तदा॥
२६ पुनस्तेन समुत्पाद्य पूर्व्ववायुं विहायसि।
समानीय स्वशक्त्या च दक्षिणाभिमुखानिलं॥
२७ अवतार्य्यन्त मांसानि तेषामुपरि धूलिवत्।
खगाः पक्षविशिष्टाश्च सामुद्रसिकता इव॥
२८ ते मध्ये शिविरं तेषां वासानां परितोऽपतन्॥
२९ तेन ते भोजनं कृत्वा महतीं तृप्तिमाप्नुवन्।
इत्थं तेन समानिन्ये द्रव्यं तैरभिलिप्सितं॥
३० अभीष्टादनिवृत्तानां मुखेष्वेवामिषे स्थिते।
३१ तेषां विरुद्धमीशस्य क्रोधः प्रादुर्बभूव हि।
तेषां मध्येऽतिपीनांश्च मारयामास मानवान्।
पातयामास चोत्कृष्टान् इस्रायेलीयवंशजान्॥
३२ तथा सत्यपि ते भूयस्तस्मै तं प्रति पातकं।
आचरद्भिरविश्वासं तदीयाश्चर्य्यकर्म्मसु॥
३३ तस्मात् स वासरांस्तेषां क्षययामास वाष्पवत्।
साध्वसेनैव तेषाञ्च सादयामास वत्सरान्॥
३४ यदाहन्यन्त ते तेन तदान्वैष्यंस्तमेव ते।
अकुर्व्वंश्च परावृत्ता ईश्वरस्य गवेषणां॥
३५ तदानीमीश्वरोऽस्माकं विद्यते हि शिलोच्चयः।
ईशः सर्व्वोपरिस्थश्च नस्त्रातास्तीति तेऽस्मरन्॥
३६ तदा तश्चास्तुवन् वक्त्रै र्जिह्वाभिश्चावदन् प्रियं॥
३७ किन्त्वन्तःकरणं तेषां नाभवत् तं प्रति स्थिरं।
न विश्वासेन वा तस्य नियमं ते समाचरन्॥
३८ सोऽनुकम्प्यपराधाच्च मुक्तिदो न विनाशकः।
तस्मात् संवारयामास निजकोपं पुनः पुनः।
न च प्रज्वलयामास पूर्णं क्रोधानलं निजं॥
३९ इमे मांसमया यच्च गत्वा न प्रतिगच्छति।

तस्य वायोः समाः सन्तीत्येव तेन विचिन्तितं ॥
कतिवारान् मरुस्थाने तेऽत्यजन् तस्य वश्यतां। ४०
निर्जने प्रान्तरे तस्य चामर्षमुदपादयन् ॥
भूयो भूयश्च तेऽकार्षुरीश्वरस्य परीक्षणं। ४१
इस्रायेलः पवित्रञ्च राजानं तेऽवमेनिरे ॥
तत्करं वैरितस्तेन मुक्तो घस्रञ्च विस्मृताः ॥ ४२
दर्शितानि स्वचिह्नानि तेन मीसरनीवृति। ४३
स्वकीयाश्चर्य्यकार्य्याणि सोयनप्रान्तरेषु च ॥
तत्रत्याः सरितस्तेन रक्तस्रोतांसि चक्रिरे। ४४
स्वनदीनाञ्च तोयानि लोकैः पातुं न शेकिरे ॥
प्रहिता मक्षिकास्तेन विदंदशुश्च मानवान्। ४५
प्रेषितास्तेन भेकाश्च तेषां नाशमसाधयन् ॥
अर्पयामास कीटेषु तेषां शस्यधनानि सः। ४६
फलानि श्रमजातानि शलभेभ्यो ददौ तथा ॥
शिलाभि र्नाशयामास स तेषां गोस्तनीलताः। ४७
आजघान तुषारैश्च तेषां सर्व्वानुडुम्बरान् ॥
करकायां पशूंस्तेषां व्रजान् विद्युत्सु चार्पयत् ॥ ४८
तान् प्रति प्रेषयामास निजक्रोधस्य चानलं। ४९
कोपं रोषं विपत्तिञ्चानिष्टानां दूतवाहिनीं ॥
इत्थमेव स्वकोपार्थं मार्गं निर्म्माय विस्तृतं। ५०
तेषां प्राणान् कृतान्ताय दातुं तेन न निह्नुतं।
मार्य्यामेव स्वयं तेषाम् अर्पयामास जीवनं ॥
सर्व्वान् मीसरदेशस्थान् अग्रजान् आजघान सः। ५१
हामवंशीयदूष्यस्थान् बलेनाग्रसरान् जनान् ॥
पश्चात् प्रस्थापयामास स्वप्रजा एडकानिव। ५२
स्वलोकांश्च मरुस्थाने गमयामास पालवत् ॥
निर्व्विघ्नं तेन नीतास्ते साध्वसं चक्रिरे नहि। ५३
किञ्च विद्वेषिणस्तेषां छादयामास तोयधिः ॥
स तु तान् प्रापयामास स्वपुण्यावाससन्निधिं। ५४
एतमूर्व्वीधरं क्रीतं तस्य दक्षिणपाणिना ॥
स तेषामग्रतो लोकान् दूरीकृत्यान्यजातिजान्। ५५

तद्देशस्याधिकारित्वं मानरज्ज्वा विभज्य च।
इस्रायेलान्वयांस्तेषां वासस्थानेष्ववासयत्॥
५६ सर्व्वश्रेष्ठं तमीशं ते परीक्ष्याकोपयन् पुनः।
तदीयादेशवाक्यानि न समाचरितानि तैः॥
५७ विमुखा वञ्चयामासुस्ते पूर्व्वपुरुषा इव।
शिथिलश्च धनु र्यद्वत् ते प्रचुच्युविरे तथा॥
५८ ते स्वकीयभ्रगुस्थानैस्तं विरक्तञ्च चक्रिरे।
स्वकीयप्रतिमाभिश्च क्रोधं तस्योदपादयन्॥
५९ ईश्वरस्तु तदाकर्ण्य रोषयुक्तो बभूव हि।
इस्रायेलीयवंशे च तस्य जज्ञे महाघृणा॥
६० ततो हितो नरैः सार्द्धं वसतस्तस्य यद् गृहं।
स तदेव परित्यज्य शीलुस्थं पटमन्दिरं॥
६१ बन्दित्वे स्वबलं शत्रो र्हस्ते च स्वश्रियं ददौ॥
६२ आर्पयत् स्वप्रजाः खड्गे स्वाधिकाराय चाकुपत्॥
६३ तेषां यूनोऽग्रसद् वह्नि र्युवत्यो व्यूहिरे नहि॥
६४ याजकाश्चासिना पेतु र्विधवा व्यलपन् नहि॥
६५ तदा प्रभु र्जजागार भग्ननिद्रमनुष्यवत्।
गोस्तनीरसपानाद् वा हुङ्कारकारिवीरवत्॥
६६ स्वप्रद्वेषिमनुष्याणां पृष्ठदेशं प्रहृत्य च।
अपमानेन नित्येन योजयामास तान् रिपून्॥
६७ गर्हित्वा यूषफो दूष्यम् अतुष्टेफ्रयिमान्वये॥
६८ स वव्रे यिहूदावंशं सियोनाद्रिमभीप्सितं॥
६९ निर्म्ममे च स्वप्रासादम् उन्नतान् भूधरानिव।
चिरकालनिमित्तं वा स्वेन स्पृष्टां महीमिव॥
७० स चाभिरोचयामास दायूदाख्यं स्वसेवकं।
तं समादाय मेषाणां शालाभ्योऽपजहार च॥
७१ इत्थं तं स्तन्यदात्रीणां मेषीणामनुवर्त्तनात्।
समानीय स तस्मिन् हि याकूवाख्या निजाः प्रजाः।
इस्रायेलीयराष्ट्रञ्च पालनाय समार्पयत्॥
७२ स तु स्वचित्तशुद्धत्वात् पालयामास तान् जनान्।
हस्तयुग्मस्य दाक्ष्याच्च चारयामास ताः प्रजाः॥

# ७९ ऊनाशीतितमं गीतं।

यिरूशालमविषये विलापः परमेश्वरं प्रति प्रार्थना च।

आसफस्य धर्म्मगीतं।

हे ईश भिन्नजातीयाः प्राविशन् विषयं तव। १
प्रासादं तावकं पुण्यं मलिनं चक्रिरे च ते।
विदधुः प्रस्तराणां हि राशिवद् यिरूशालमं॥
कुणपांस्तव दासानां खगेभ्यो ददुरन्नवत्। २
त्वद्भक्तानां त्वचां मांसं वन्यजन्तुगणाय च॥
यिरूशालमि सर्व्वत्र तेषां रक्तञ्च तोयवत्। ३
सुस्राव नाकरोत् कोऽपि तेषामन्त्यक्रियां तदा॥
अभवाम वयं तस्मान्निन्द्या निकटवासिभिः। ४
हास्यास्पदानि तुच्छानि चतुर्द्दिक्स्थजनानामपि॥
हे परेश कियत्कालं नित्यं क्रोधं करिष्यसि। ५
अमर्षस्तावकीनस्ते प्रज्वलिष्यति वह्निवत्॥
ये लोका भिन्नजातीयास्त्वां न जानन्ति सर्व्वशः। ६
प्रार्थनां तव नाम्ना ये न कुर्व्वन्ति विदेशिनः।
तेषामेवोपरि स्वीयस्त्वया रोषोऽवतार्य्यतां॥
यतस्तै याकुबं ग्रस्त्वा वसतिस्तस्य नाशिता॥ ७
अस्मत्पूर्व्वापराधांस्त्वं नो विरुद्धं न संस्मर। ८
तावकीनानुकम्पास्मान् प्रतिगृह्णातु सत्वरं।
यतो हीनतारतिक्षीणा अभवाम वयं खलु॥
हे अस्मत्तारकेश त्वं स्वनाम्नस्तेजसः कृते। ९
अस्माकं कुरु साहाय्यं स्वीयनाम्नश्च हेतुतः।
विधायोद्धारमस्माकम् अपराधान् क्षमस्व नः॥
अमीषामीश्वरः क्वेति ब्रूयुः कुतोऽन्यजातयः। १०
त्वदीयसेवकानां यन्निषिक्तं भुवि शोणितं।
बुध्यतां तत्प्रतीकारोऽस्मत्साक्षाद् अन्यजातिभिः॥
वन्दिनः कातरोक्तिश्च त्वत्साक्षादुपतिष्ठतु। ११
स्वमहाबाहुना लोकान् मुमूर्षूंस्त्वञ्च धारय॥

१२ यथा त्वां निन्दयामासुरस्मदन्तिकवासिनः।
त्वं तत्सप्तगुणां निन्दां तेषां क्रोडेऽर्पय प्रभो॥
१३ तत्प्रजास्तव केदारे स्थिता मेषाश्च ये वयं।
वयमेव प्रशंसां ते करिष्यामो निरन्तरं।
स्तवं ते वर्णयिष्यामः पुरुषानुक्रमं प्रति॥

---

# ८० अशीतितमं गीतं।

छिन्नदाचालताम् इस्रायेलवंशं प्रति विलाप ईश्वरं प्रति प्रार्थना च।

वाद्यनियन्त्रे दातव्यं शोशन्नेदूतनामकस्वरयुक्तम् आसफस्य धर्म्मगीतं।

१ इस्रायेलीयवृन्दस्य यूथवत् प्रतिपालक।
मेषवद् यूषफोघस्य चारक त्वं निशामय।
किरूवयोः समासीन त्वं स्वतेजः प्रकाशय॥
२ इफ्रयीमस्य प्रत्यक्षं विन्यामीनस्य चाग्रतः॥
मिनशेश्च समक्षं त्वं निजशक्तिं प्रकाशय।
आगत्य स्वयमस्माकं परित्राणं कुरुष्व च॥
३ हे ईश्वर त्वयास्माकं परावृत्तिं विधाय हि।
प्रसन्नं क्रियतां स्वास्यं त्राणं लप्स्यामहे तदा॥
४ सैन्याध्यक्ष परेश त्वं प्रजानां प्रार्थनां प्रति।
कियत्कालं स्वकोपाग्नेर्धूममुद्गमयिष्यसि॥
५ अन्नं नेत्राम्बुरूपं त्वं स्वलोकेभ्यः प्रयच्छसि।
तान् पाययसि चाश्रूणि परिमाणातिगानि हि॥
६ विवादविषयान् अस्मान् करोष्यासन्नवासिनां।
उपहासञ्च कुर्व्वन्त्यस्माकं विद्वेषिणो मिथः॥
७ सैन्याधीश त्वयास्माकं परावृत्तिं विधाय हि।
प्रसन्नं क्रियतां स्वास्यं त्राणं लप्स्यामहे तदा॥
८ मिसर्देशात् समानीय त्वयैकां गोस्तनीलतां।
दूरीकृत्यान्यजातीयान् क्षेत्रं तस्या हि रोपणं॥
९ त्वया तस्या निमित्तन्तु स्थाने निष्कण्टकीकृते।

सम्यग् वर्धितमूला सा कृत्स्नं देशमपूपुरत् ॥
समाच्छाद्यन्त तस्याश्च छायया धरणीधराः। १०
शाखाभिरीश्वरीयाश्च पादपा एरसाभिधाः ॥
सा च महार्णवं यावत् स्वप्रसूनान्यवर्धयत्। ११
तथा महानदीं यावद् व्यस्तृणोत् स्वीयपल्लवान् ॥
किमर्थं साम्प्रतं तस्या वारणी पातिता त्वया। १२
तस्मात् सा सकलैः पान्थै र्हृतपर्णा विधीयते ॥
काननाच्च विनिर्गत्य वराहेण प्रमृद्यते। १३
नाश्यते खाद्यमाना च पशुभि र्वनचारिभिः ॥
सैन्याधीश निवर्त्तस्व स्वर्गाद् दृष्टिं निपातय। १४
अवलोक्याभिगच्छ त्वम् इमां ते गोस्तनीलतां ॥
पल्लवं तव हस्तेन दक्षिणेनैव रोपितं। १५
नन्दनं स्वनिमित्तञ्च त्वयैव प्रबलीकृतं ॥
सा लता वह्निना दग्धा सम्यगुच्छिन्नतां गता। १६
त्वत्प्रजाश्च विनश्यन्ति तव वक्तस्य गर्ज्जनात् ॥
अधितिष्ठतु ते हस्तो नरं त्वद्दक्षिणे स्थितं। १७
नृपुत्रं स्वनिमित्तञ्च त्वयैव प्रबलीकृतं ॥
तेन नापसरिष्यामो वयं त्वत्तः पराङ्मुखाः। १८
जीवयास्मांस्तदास्माभिस्त्वन्नाम्ना प्रार्थयिष्यते ॥
सैन्याधीश परेश त्वं कृत्वा नः परिवर्त्तनं। १९
स्वं प्रसन्नीकुरुष्वास्यं त्राणं लप्स्यामहे तदा ॥

---

## ८१ एकाशीतितमं गीतं।

१ अनुग्रहस्य निमित्तम् ईश्वरस्य धन्यवादं कर्त्तुम् आसफस्य विनयः
६ आज्ञाग्रहणस्य फलञ्च।

वाद्यनियन्त्रे दातव्यं गित्तीतनामकस्वरयुक्तम् आसफस्य गीतं।

अस्मभ्यं बलदातारम् ईशं गानेन विष्टुत। १
याकूबीयेशमुद्दिश्य कुरुध्वञ्च जयध्वनिं ॥
यूयं गातुं प्रवर्त्तध्वं कुरुतानकवादनं। २
वीणाछोमञ्च सुश्राव्यं नेवलाख्यततैः सह ॥

३ यूयमस्मिन् शुभे मासि कुरुध्वं श्टङ्गवादनं।
समये पूर्णचन्द्रस्य तस्मिन् नः पर्व्वणो दिने॥
४ इस्रायेलि तदादिष्टं याकूबेशस्य शासनं॥
५ मिसर्देशस्य मध्येन यस्मिन् काले स निर्गतः।
तदा स स्थापयामास तं विधिं यूषफान्वये।
तस्मिन् देशे मयाश्रावि वाणी बोधातिगा मम॥
६ मया वियोजयाञ्चक्रे भारः स्कन्धद्वयात् तव।
प्रापतु भांडकान्मुक्तिं तावकीनकरावपि॥
७ विपत्काले त्वयाहूतस्त्वां समुद्धृतवानहं।
वज्रमेघेषु प्रच्छन्नश्चाददां तुभ्यमुत्तरं।
मिरीवाख्यपयस्विन्यां चाकार्षं ते परीक्षणं॥ सेला॥
८ हे मदीयप्रजावर्ग शृणु त्वामादिशाम्यहं।
इस्रायेलान्वय त्वं मे वाक्यमादातुमर्हसि॥
९ कश्चनेतरदेवोऽपि तव मध्ये न वर्त्ततां।
कस्यापीतरदेवस्य पूजा मा क्रियतां त्वया॥
१० त्वत्प्रभुः परमेशोऽहं मिसरात् त्वामुदानयं।
स्वास्यं व्यादेहि सम्यक् त्वं मया तत् पूरयिष्यते॥
११ किन्तु मे स प्रजावर्गो नाश्रौषीद् वचनं मम।
इस्रायेलीयवंशश्च मयि सन्तुष्टवान् नहि॥
१२ तस्मात् स्वमनसां जाड्ये ते लोका अर्पिता मया।
सर्व्वे चाकुर्व्वताचारं स्वीयमन्त्रानुयायिनं॥
१३ मामकीनप्रजाभिश्चेत् समश्रोष्यत मे वचः।
इस्रायेलीयलोकाश्चेद् आचरिष्यन् ममायनं॥
१४ तूर्णं पर्य्यदमिष्यन्त तदा तेषां द्विषो मया।
अहं तेषां विपक्षेषु चाकरिष्यं करार्पणं॥
१५ शत्रवः परमेशस्य प्रावदिष्यंश्च तं प्रियं।
अभविष्यदनन्तञ्च लोकानां मम मङ्गलं॥
१६ अहं प्राभोजयिष्ये च गोधूमानुत्तमान् हि तान्।
मधुनातर्पयिष्यञ्च शैलादुत्पादितेन तान्॥

## ८२ द्व्यशीतितमं गीतं।

विचारकान् प्रति तिरस्कारः।

आसफस्य धर्म्मगीतं।

ईश्वरीयसमज्यायाम् अवतिष्ठत ईश्वरः। १
ईश्वराणाञ्च मध्ये स विचारं विदधाति हि॥
अन्यायेन कियत्कालं यूयं विचारयिष्यथ। २
कियत्कालञ्च दुष्टानां पक्षपातं करिष्यथ॥ सेला॥
दुर्गतं पितृहीनञ्च सद्विचारेण रक्षत। ३
दुःखिनं निर्धनानाञ्च निर्दोषत्वं प्रघोषत॥
दीनं निःस्वञ्च प्रोद्धृत्य कराद् रक्षत पापिनां॥ ४
अज्ञाना बुद्धिहीनाश्च भ्राम्यन्तीमे तमिस्रके। ५
मेदिन्या मूलवस्तूनि सकलानि चलन्ति हि॥
मयोक्तमीश्वरा यूयं सर्व्वे श्रेष्ठस्य चात्मजाः॥ ६
अवश्यं मर्त्यवद् यूयं परलोकं गमिष्यथ। ७
यथा वा कश्चनाध्यक्षस्तथा यूयं पतिष्यथ॥
ईश्वर त्वं समुत्थाय विचारं जगतः कुरु। ८
यस्मात् तवास्ति सर्व्वासां जातीनामधिकारिता॥

---

## ८३ त्र्यशीतितमं गीतं।

दुष्टरिपूणां विरुद्धम् आसफस्य प्रार्थनं।

आसफेन कृतं गानार्थकं धर्म्मगीतं।

ईश मा भव निःशब्द ईश मौनी न शाम्य हि॥ १
यतो हेतो विपक्षास्ते पश्य कुर्व्वन्ति गर्ज्जनं। २
त्वाञ्च द्विषन्ति ये लोकास्ते व्रजन्त्युच्चमस्तकाः॥
त्वत्प्रजानां विरुद्धं ते कल्पयन्ति छलं मिथः। ३
गुप्तानां तव रत्नानाम् अहितं मन्त्रयन्ति च॥
ते वदन्ति समायात लोप्स्यामस्तान् अशेषतः। ४
इस्रायेलीयनामापि न संस्मारिष्यते पुनः॥
इदोमीयेस्रायेलीया मानवा दूष्यवासिनः। ५

मोयावीयमनुष्याश्च हाजिरीयजना अपि ॥
६ गिवाल् अम्मोन् अमालेकः पिलेष्टी सोरवासिनः।
७ इमे सर्व्वे ससौहार्द्दं कृतवन्तः कुमन्त्रणां।
तवैव प्रातिकूल्येन नियमञ्च न्यरूपयन् ॥
८ असूरीयमहाराजस्तेषु चासज्यते दृढं।
लोटवंशीयलोकानां बाहुवत् सोऽभवत् स्वयं॥ सेला॥
९ तान् प्रत्याचर तादृक् त्वं यादृक् मिदीयनं प्रति।
यादृक् सीषिरयाबीनौ प्रति वा कीशुनस्तटे॥
१० तत्रैन्दोरे विनष्टौ च भूम्याश्च सारतां गतौ॥
११ एतेषां कुरु चाध्यक्षान् समान् ओरेवसेवयोः।
यथा सेवहसल्मुन्नौ तथैतेषां पतीन् कुरु॥
१२ यतस्तैरुक्तमीशस्य वासान् भोक्ष्यामहे वयं॥
१३ तान् मदीश कुरुङ्क्रान्तान् वायुचालितनालवत्॥
१४ यथारण्यं प्रसेद् वह्निः यथा लिह्याद् गिरीन् शिखा॥
१५ तद्वत् स्वचण्डवातेन त्वमेतान् अनुधाव हि।
तान् विधेहि च सन्त्रस्तान् प्रचण्डेन स्ववायुना॥
१६ वदनानि च तेषां त्वम् अपमानेन पूरय।
तदा गवेषयिष्यन्ति ते त्वन्नाम परेश्वर॥
१७ नो चेन्नित्यं सलज्जास्ते भविष्यन्ति भयातुराः।
व्रीडया च समाच्छन्नास्ते गमिष्यन्ति लुप्ततां॥
१८ तेन ज्ञास्यन्ति लोका यत् केवलस्त्वं परेश्वर।
कृत्स्नाया अवनेः सम्राट् इतिनाम्ना प्रसिध्यसि॥

---

## ८४ चतुरशीतितमं गीतं।

१ ईश्वरं मन्दिर आराधयितुमिच्छा ४ भजनाकारिणः सुखस्य वर्णनं ८ तत्-सुखभोगाय प्रार्थनञ्च।

वाद्यनियन्त्रे दातव्यं गित्तीतनामकस्वरयुक्तं कोरहीयवंशस्य गीतं।

१ कीदृक् प्रियास्तवावासाः सैन्याध्यक्ष परेश्वर॥
२ प्राङ्गणानि परेशस्याकाङ्क्ष्य सीदति मे मनः।
अमरेश्वरमुद्दिश्य नदतो हृत् तनुश्च मे॥

प्राप्तो हि पक्षिणा गेहः स्वनीडश्चातकेन च। ३
शावकानां निधानार्थं त्वदीया एव वेदयः।
परेश वाहिनीनाथ मम राजन् ममेश्वर॥
त्वद्गृहवासिनो धन्यास्त्वां स्तोष्यन्ति पुनश्च ते॥ सेला॥ ४
धन्यास्ते मानवा येषां शक्तिस्त्वय्येव विद्यते। ५
ऋजुमार्गास्वरूपाणि येषां चित्तानि सन्ति च॥
अश्रुदरीं तरन्तस्ते तां कुर्व्वन्ति जलाशयं। ६
सरोवराश्च शोभन्ते वृष्टिजातेन तेजसा॥
वर्धमानाः सदा शक्त्या भवन्त्यग्रसराश्च ते। ७
शेषे सियोनि चैकैकः प्राप्नोतीशस्य दर्शनं॥
सैन्याध्यक्ष परेश त्वं मदीयां प्रार्थनां शृणु। ८
क्रियतामवधानञ्च त्वया याकूब ईश्वर॥ सेला॥
हे अस्मत्फलकेश त्वं कुरुष्वात्र निरीक्षणं। ९
राज्ञस्त्वयाभिषिक्तस्य वदनञ्चावलोकय॥
श्रेष्ठं दिनसहस्रेभ्यो दिनमेकं तवाङ्गने। १०
पापवेश्मसु संवासाद् ईश्वरस्यैव मन्दिरे।
द्वारिवत् परिचर्य्यापि मह्यं हि रोचतेऽधिकं॥
यस्मात् प्रभुः परेशो यो भास्करः फलकश्च सः। ११
प्रसादञ्च महत्त्वञ्च परमेशः प्रयच्छति।
सरलाचारिलोकानां किञ्चित् क्षेमं न स क्रुते॥
नरस्त्वामाश्रितो धन्यः सैन्याध्यक्ष परेश्वर॥ १२

---

## ८५ पञ्चाशीतितमं गीतं।

पारमार्थिकसम्पदो निमित्तमीश्वरं प्रति प्रार्थनं तन्निमित्तमीश्वरे प्रत्याशनञ्च।

वाद्यनियन्त्रे दातव्यं कोरहवंशस्य धर्म्मगीतं।

पूर्व्वमासीः प्रसन्नस्त्वं स्वीयदेशे परेश्वर। १
अन्वयं याकूबीयञ्च दासत्वात् पर्य्यमूमुचः॥
त्वया स्वीयप्रजानाञ्च दोषो दूरीकृतस्तदा। २
सर्व्वमेव स्वलोकानां पापमाच्छादितं त्वया॥ सेला॥
तदानीं शमयित्वा च निजक्रोधमशेषतः। ३

त्वं स्वकोपानलस्यैव च्चगाडतातो न्यवर्त्तथाः ॥
४ च्चस्मत्त्राणकदीश त्वं परावर्त्तस्व नः प्रति।
च्चस्मान् प्रति निजामर्षम् च्चधुनापि निवर्त्तय ॥
५ त्वमस्मान् प्रति किं कोपं नित्यमेव करिष्यसि।
किं रक्षिष्यसि स्वक्रोधं पुरुषानुक्रमं प्रति ॥
६ परावृत्य त्वमस्मान् किं नहि सञ्जीवयिष्यसि।
त्वत्तः स्वीयप्रजानान्तु हर्षं उत्पत्स्यते तदा ॥
७ हे परेश त्वमेवास्मान् स्वप्रसादं विदर्शय।
त्वत्तो जातं परित्राणम् च्चस्मभ्यं दीयतां त्वया ॥
८ वक्ष्यति प्रभुरीशो यत् मया तच्छ्रोष्यते वचः।
यस्मात् स्वीयप्रजानाञ्च स्वसाधूनाञ्च मङ्गलं।
स गदिष्यति ते किन्तु न पुन र्यान्तु मूढतां ॥
९ तद्भक्तानां समीपस्थं तत्परित्राणमस्ति हि।
च्चस्मज्जनपदे तस्माद् च्चधिष्ठास्यति गौरवं ॥
१० मिलनञ्च करिष्येते करुणासत्यते मिथः।
परस्परं करिष्येते धर्म्मः शान्तिश्च चुम्बनं ॥
११ प्ररोक्ष्यत्यवनौ सत्यं स्वर्गाद् धर्म्मोऽवभास्यति ॥
१२ परेशो दास्यति क्षेमं भू र्नः शस्यञ्च दास्यति ॥
१३ धर्म्मो यास्यति तस्याग्रे पदाभ्यां वर्त्म कल्पयन् ॥

---

## ८६ षडशीतितमं गीतं।

दायूदः प्रार्थनं।

१ हे परेश त्वयाकर्ण्य दीयतां मह्यमुत्तरं।
यतो हेतोरहं दीनो दरिद्रश्च भवामि हि ॥
२ च्चभिरक्ष मम प्राणान् यतोऽहमस्मि पुण्यवान्।
हे मदीश निजं दासं त्वं त्रायस्व त्वदाश्रितं ॥
३ प्रभो मामनुकम्पस्व त्वामाह्वयेऽखिलं दिनं ॥
४ स्वीयदासस्य चित्तं त्वं हर्षयुक्तं विधेहि च।
यस्मात् त्वां प्रत्यहं चित्तम् उन्नयामि हि हे प्रभो ॥

प्रभो त्वमेव सद्भावः क्षमायुक्तश्च विद्यसे। ५
यावन्तस्त्वाह्वयन्ति त्वां तान् प्रति त्वं कृपानिधिः॥
प्रार्थनां मामकीनां त्वं हे परेश निशामय। ६
क्रियतामवधानञ्च मम खेदोक्तिषु त्वया॥
त्वामाह्वये विपत्काले त्वं मे दातासि चोत्तरं॥ ७
हे प्रभो नास्ति देवानां मध्ये कोऽपि त्वया समः। ८
नैव कर्म्माणि विद्यन्ते तुल्यानि कर्म्मणां तव॥
त्वत्सृष्टाः सर्व्वजातीया उपस्थाय तवाग्रतः। ९
हे प्रभो त्वां प्रणंस्यन्ति स्तोष्यन्ति तव नाम च॥
महांश्चाद्भुतकर्म्मा त्वम् अद्वितीयस्त्वमीश्वरः॥ १०
परमेश स्वमार्गं त्वं मां दर्शयितुमर्हसि। ११
यतोऽहमभिवाञ्छामि सत्यमाचरितुं तव।
तव नाम्नो भयाय त्वम् एकाग्रं कुरु मे मनः॥
सर्व्वान्तःकरणेन त्वां स्तोष्ये मदीश्वर प्रभो। १२
अनन्तकालपर्य्यन्तम् अर्चयिष्यामि नाम ते॥
यतस्त्वदीयकारुण्यं सुमहद् वर्त्तते मयि। १३
अधःस्थात् परलोकाच्च मत्प्राणा उद्धृतास्त्वया॥
ईश मत्प्रातिकूल्येन समुत्तिष्ठन्ति गर्व्विणः। १४
दुर्वृत्तानां समाजश्च प्राणान्तं मम चेष्टते।
न स्थापयन्ति ते लोकास्त्वां स्वीयदृष्टिगोचरे॥
किन्तु प्रभो दयालुस्त्वम् अनुग्राहक ईश्वरः। १५
सहिष्णुश्च महान् प्रीत्या सत्यत्वेनापि विद्यसे॥
अतो मह्यं परावृत्य करुणां कुरु मां प्रति। १६
एतस्मै निजदासाय देहि स्वीयपराक्रमं।
स्वीयदासीसुतस्यैव परित्राणं विधेहि च॥
कुरु मां प्रति चाचारं शुभलक्षणरूपकं। १७
तद् दृष्ट्वा त्रपिष्यन्ते सकला द्वेषिणो मम।
यतो मां परमेश त्वम् उपकृत्याभ्यसान्त्वयः॥

---

# ८७ सप्ताशीतितमं गीतं।

समाजीयप्रशंसनं।

कोरहीयवंशेन कृतं गानार्थकं धर्म्मगीतं।

१ पर्व्वतेषु पवित्रेषु विद्यते तस्य निर्म्मितिः॥
२ परमेशः सियोनस्य द्वारेषु प्रीयते यथा।
याकूबः सर्व्ववासेषु स न सम्प्रीयते तथा॥
३ उच्यन्ते श्लाघ्यवाक्यानि हे ईशस्य पुरि त्वयि॥ सेला॥
४ रहबं वाबिलञ्चाहं गणयामि स्वमित्रवत्।
पिलेष्टी सोरकूशौ च पश्येमे तत्र जज्ञिरे॥
५ सियोनाख्यपुरीञ्चाधि वाक्यमेतद् गदिष्यते।
एष लोको नरोऽसौ च तस्या मध्येऽभ्यजायत।
स्वयं सर्व्वोपरिस्थश्च सुस्थिरां विदधाति तां॥
६ जातिलेखनकाले च गणानां परमेश्वरः।
करिष्यतीदृशीं पश्य तत्रायं जन्म लब्धवान्॥ सेला॥
७ गायका वादकाश्चापि वदिष्यन्ति कथामिमां।
अस्माकं सकला उत्सा विद्यन्तेऽभ्यन्तरे तव॥

---

# ८८ अष्टाशीतितमं गीतं।

मुमूर्षुलोकस्य प्रार्थनं।

कोरहवंशेन कृतं गानार्थकं धर्म्मगीतं। वाद्यनियन्त्रे दातव्यं मह-लतलियन्नोतनामकस्वरयुक्तम् इस्राहीयहेमनस्योपदेशगीतं।

१ हे मदीयपरित्रातरीश हे परमेश्वर।
दिवा करोमि खेदोक्तिं निशायाञ्च तवाग्रतः॥
२ प्रार्थना मामकीना हि त्वदीयगोचरीभवेत्।
मामकीनार्त्तरावे त्वं निजकर्णं निधेहि च॥
३ पूर्णाः क्लेशै र्मम प्राणाः प्रेत्यासन्नाश्च मेऽसवः॥
४ गर्त्तेऽवरूढलोकानां मध्ये गण्योऽहमस्मि हि।
शक्तिहीनमनुष्यस्य समानश्च भवाम्यहं॥
५ विरक्तो वा प्रमीतेषु हतेष्ववटशायिषु।

न स्मृतेषु त्वया भूयः वियुक्तेषु करात् तव ॥
निहितोऽहञ्च गर्त्तेऽधो गम्भीरे तमसि त्वया ॥ ६
तव कोपेन चाक्रान्तः क्लिष्टे सर्व्वैस्तवोर्म्मिभिः ॥ सेला ॥ ७
त्वं दूरीकृत्य बन्धूनां गर्हणीयं करोषि मां। ८
अवरुद्धश्च विद्येऽहं निर्यातुं पारयामि न ॥
दुःखेन क्षीणनेत्रोऽहम् आह्वयाम्यखिलं दिनं। ९
सर्व्वेश परेश त्वां हस्तौ तुभ्यं प्रसारयन् ॥
मृतान् प्रति किमाश्चर्य्यं कर्म्म कारिष्यते त्वया। १०
प्रेता वा किं समुत्थाय करिष्यन्ति तव स्तुतिं ॥ सेला ॥
लोकाः किं वर्णयिष्यन्ति त्वत्कारुण्यं शवावटे। ११
सत्यतां तावकीनां वा सर्व्वनाशस्य वेश्मनि ॥
तिमिरे किं तवाश्चर्य्यं कर्म्म केनापि भोत्स्यते। १२
किं वा ते भोत्स्यते धर्म्मस्तत्र विस्मृतिनीवृति ॥
अहन्तु त्वां समुद्दिश्य परमेश्वर रोदिमि। १३
उपस्थास्यति प्रातश्च त्वामियं प्रार्थना मम ॥
हे परेश किमर्थं त्वं मत्प्राणान् परिगर्हसे। १४
किमर्थं निजवक्त्रञ्च मत्तः प्रच्छाद्यते त्वया ॥
बाल्यकालादहं दुःखी मृतकल्पो भवामि च। १५
तव भीषणभाराच्च नैराश्यं जायते मम ॥
त्वत्कोपेन समाच्छन्नं त्वत्त्रासा नाशयन्ति मां ॥ १६
वेष्टन्ते च जलानीव ते मामेव निरन्तरं। १७
ते सर्व्वे मां चतुर्द्दिक्षु परिगच्छन्ति सङ्घशः ॥
सुहृदं प्रियबन्धुञ्च त्वं मत्तोऽदवयः खलु। १८
अन्धकारात् किमन्यो हि मद्बन्धुरवशिष्यते ॥

---

## ८९ ऊननवतितमंगीतं।

१ आभाषः ५ परमेश्वरस्य गुणकीर्त्तनं १९ दायूदं प्रतीश्वरस्य प्रतिज्ञा ३८ दुःखे विलापः ४६ प्रार्थना च।

इस्राहीयैथनस्य ज्ञानसूचकं गीतं।

गास्यामि परमेशस्य बहुरूपां कृपां सदा। १

अहं स्वकीयवक्त्रेण पुरुषानुक्रमं प्रति ।
मानवान् ज्ञापयिष्यामि तव विश्वास्यतां प्रभो ॥
२ मयोक्तं सर्व्वदा स्थायि कृपामन्दिरमेधते ।
व्योम्न्येव स्थापिता चास्ति निजविश्वास्यता त्वया ॥
३ स्वाभिरुचितलोकेन सह मे नियमः कृतः ।
निजदासस्य दायूदः कृते दिव्यमकारि च ॥
४ अहमेव विधास्यामि तव वंशं सदा स्थिरं ।
पुरुषानुक्रमं यावद् दृढं सिंहासनञ्च ते ॥ सेला ॥
५ परमेश तवाश्चर्य्यं कर्म्म स्वर्गे प्रशस्यते ।
पवित्राणां सभायाञ्च मध्ये विश्वास्यता तव ॥
६ उपमेयः परेशेन को जनो विद्यते दिवि ।
ईशसन्ततिमध्ये वा कः समानः परेशितुः ॥
७ पवित्राणां सभामध्येऽतीव भेतव्य ईश्वरः ।
यावन्तस्तञ्च वेष्टन्ते तेषां सोऽस्ति भयङ्करः ॥
८ तव को विद्यते तुल्यः सैन्याधीश परेश्वर ।
परमेशः पराक्रान्तः स्वविश्वास्यतयावृतः ॥
९ आधिपत्यं करोषि त्वं सागरस्याभिमानिनः ।
तदीयोच्चतरङ्गाणां शान्तिं त्वं विदधासि च ॥
१० रहबश्च त्वया चूर्णो यथा मर्त्त्योऽसिना हतः ।
द्वेषिणश्च विकीर्णास्ते बलिना तव बाहुना ॥
११ स्वर्ग एव त्वदीयोऽस्ति त्वदीयास्ति च मेदिनी ।
विश्वं तत्पूरणञ्चापि सर्व्वं संस्थापितं त्वया ॥
१२ उत्तरा दक्षिणा चोभे सृज्येतां त्वया दिशौ ।
हर्षात् ताबोरहर्म्मोणौ तव नाम्नैव गायतः ॥
१३ तावकीनश्च यो बाहुः स पराक्रमसंयुतः ।
शक्तिमांस्तव पाणिश्च प्रोच्चस्ते दक्षिणः करः ॥
१४ धर्म्मन्यायौ हि विद्येते मूले सिंहासनस्य ते ।
करुणा सत्यता चेमे त्वत्पुरस्ताद्धि गच्छतः ॥
१५ धन्यां वदामि तां जातिं या जानाति जयध्वनिं ।
परमेश त्वदास्यस्य दीप्तौ लोका व्रजन्ति ते ॥
१६ आनन्दं तव नाम्नैव ते कुर्व्वन्त्यखिलं दिनं ।

तावकीनेन धर्म्मेण चाप्नुवन्ति समुन्नतिं॥
यतो हेतोस्त्वमेवासि शोभा तेषां बलप्रदा। १७
त्वत्प्रसादेन नः शृङ्गं त्वं करोषि समुन्नतं॥
यस्माद् यः फलकोऽस्माकं स एवास्ति परेशितुः। १८
इस्रायेलः पवित्रस्य राज्ञो दासोऽस्ति नो नृपः॥
तदा स्वसाधुलोकांस्त्वम् आलप्येत्थमभाषथाः। १९
उपकारस्य भारो हि मया वीरे समर्पितः।
प्रजानां मध्यतो धृत्वा नरश्चोच्चीकृतो मया॥
मामकीनमिमं दासं दायूदं लब्धवानहं। २०
तमेव स्वीयतैलेन पवित्रेणाभिषिक्तवान्॥
स्थिरस्तस्य सहायश्च मम हस्तो भविष्यति। २१
तमेव मम बाहुश्च बलवन्तं करिष्यति॥
नोपद्रोष्यति तं द्वेषी न तं क्लेक्ष्यति दुर्जनः॥ २२
तस्याग्रे चूर्णयिष्यन्ते मया तत्परिपन्थिनः। २३
मया समाहनिष्यन्ते सकलास्तस्य वैरिणः॥
स्थास्यतस्तेन सार्द्धञ्च दया विश्वास्यता च मे। २४
उन्नतं मम नाम्ना च तस्य शृङ्गं भविष्यति॥
मत्साहाय्येन हस्तं स धुनीनाथेऽर्पयिष्यति। २५
स्वीयदक्षिणपाणिञ्च तटिनीषु निधास्यति॥
मम तातस्त्वमेवासि त्वमेवासि मदीश्वरः। २६
त्वं मम त्राणदः शैल इत्याक्रास्यति मां हि सः
पुनश्चाहं करिष्यामि तमेव ज्येष्ठमात्मजं। २७
उपर्य्युपरि सर्व्वेषां नृपाणां क्षितिवासिनां॥
तं प्रत्यनन्तकालार्थं रक्षिष्यामि कृपां मम। २८
तेन स्थास्यति सार्द्धञ्च निश्चलो नियमो मम॥
मया तदीयवंशश्च नित्यस्थायी विधास्यते। २९
तस्य सिंहासनञ्चापि व्योमवद् दीर्घकालिकं॥
मम शास्त्रं परित्यज्य राजनीतिं विहाय च। ३०
तदीयपुत्रपौत्राश्चेद् विलङ्घेरन् विधीन् मम। ३१
आज्ञानां मामकीनानां न कुर्य्युः परिपालनं॥
तर्हि दास्यामि दण्डेन तेभ्यो दुष्कर्म्मणः फलं। ३२

प्रहारैरपराधस्य करिष्यामि च शासनं ॥
३३ नाहं निवर्त्तयिष्यामि तस्मात् स्वीयमनुग्रहं।
निजविश्वास्यतायाश्च न करिष्यामि वञ्चनं ॥
३४ नियमो मामकीनश्च नहि लङ्घिष्यते मया।
निर्गतं यन्ममोष्ठाभ्यां तन्न कारिष्यतेऽन्यथा ॥
३५ शपथो हि मयाकारि स्वपवित्रतया सकृत्।
दायूदं प्रति तत्राहं न भविष्याम्यसत्यवाक् ॥
३६ सर्व्वदा वर्त्तमानश्च तस्य वंशो भविष्यति।
तस्य भद्रासनं स्थाता मत्साक्षाद् भास्करोपमं ॥
३७ चन्द्रवत् तत् सदा स्थास्नु तत्साक्षी नियतो दिवि ॥ सेला ॥
३८ निराकुर्व्वन् विरक्तस्त्वं स्वाभिषिक्ताय कुप्यसि ॥
३९ स्वदासस्य पणं भित्त्वा स्वजं धूलौ विक्षत्य च ॥
४० सकला वारणीस्तस्य छिद्रयुक्ताः करोषि हि।
तस्य दुर्गाणि शङ्काया वसती र्विदधासि च ॥
४१ तत्रत्याः पथिकाः सर्व्वे तस्य द्रव्यं हरन्ति हि।
निन्दास्पदञ्च मन्यन्ते तं तदासन्नवासिनः ॥
४२ त्वया तदीयशत्रूणाम् उन्नता दक्षिणाः कराः।
द्वेषिणः सकलास्तस्य हर्षयुक्ताः कृतास्त्वया ॥
४३ भंक्ता तस्यासिवच्चं स त्वयाकार्य्यस्थिरो रणे ॥
४४ तस्य शोभां त्वया लुप्ता क्षिप्तं सिंहासनं भुवि ॥
४५ तथा ह्रासितकौमारः स त्वया लज्जयावृतः ॥
४६ परमेश कियत्कालं गुप्तः स्थास्यसि सर्व्वदा।
कियत्कालञ्च कोपस्ते प्रज्वलिष्यति वह्निवत् ॥
४७ स्मर मां कीदृगस्थास्नु ममायुश्चेति चिन्तय।
किमर्थं नरसन्तानाः सर्व्वे सृष्टा मुधा त्वया ॥
४८ कुत्र जीवति मर्त्त्यः स मरणं न निरीक्ष्य यः।
स्वप्राणान् परकालस्य हस्ताभ्यामुद्धरिष्यति ॥ सेला ॥
४९ हे प्रभो कुत्र विद्यन्ते वरास्ते पूर्व्वकालिकाः।
स्वसत्येन त्वया शप्ता दायूदे हि प्रतिश्रुताः ॥
५० प्रभो त्वद्भृत्यवर्गस्य निन्दां स्मर्त्तुं त्वमर्हसि।
सह्यते सा मया क्रोडे बलवज्जातिभिः कृता ॥

तया निन्दितवन्तस्ते देवियास्ते परेश्वर। ५१
रात्नस्त्वदभिषिक्तस्य पादचिह्नानि निन्दया॥
अनन्तानेहसं व्याप्य धन्यो भूयात् परेश्वरः॥ ५२
तथास्तु। तथास्तु॥

---

## ९० नवतितमं गीतं।

१ मनुष्याणामसारत्वं १२ ईश्वरे मङ्गलाय प्रार्थना।

ईश्वरीयलोकस्य मूससः प्रार्थनं।

प्रभो त्वमाश्रयोऽस्माकम् आपौरुषपरम्परं॥ १
यदा शैला अनुत्पन्ना भूजगच्च न निर्म्मितं। २
आ तत्कालात् त्वमेवास्यनाद्यनन्तश्च ईश्वरः॥
मर्त्यास्त्वया परावर्त्त्य विधीयन्ते हि चूर्णवत्। ३
नरजाः परिवर्त्तध्वम् इति वाग् ईर्य्यते त्वया॥
त्वद्दृष्टौ वर्षसाहस्रं गतह्योदिवसोपमं। ४
रात्रेरेकेन यामेन समानं प्रतिभाति वा॥
त्वयैव स्राव्यमाणो हि स्वप्नतुल्योऽस्ति मानवः। ५
प्रातःकाले विकारं स तृणवत् परिगच्छति॥
प्रातःकाले प्रफुल्लः स विकारमधिगच्छति। ६
सायङ्काले परिच्छिन्नः शुष्कतां प्रतिगच्छति॥
यस्मात् त्वदीयकोपेन क्षीणतां प्राप्नुमो वयं। ७
तावकीनादमर्षाच्च वयं पर्य्युद्विजामहे॥
अस्मदीयापराधांस्त्वं निदधासि स्वसम्मुखे। ८
अस्माकं गुप्तपापानि स्वीयवक्त्रस्य तेजसि॥
यस्मान्नो दिवसाः सर्व्वे त्वत्कोपादतियन्ति हि। ९
सङ्कल्पा इव चास्माभि र्याप्यन्ते निजवत्सराः॥
अस्मदीयायुषो मानं सप्ततिः सन्ति वत्सराः। १०
अशीतिवर्षमानं चेद् भवेदायु र्महाबलात्।
तर्हि तस्यापि या शोभा सा सकष्टकदुर्दशा॥
इत्थं प्रचालितास्तूर्णं वयं दूरं डयामहे॥
तावकीनस्य कोपस्य प्राबल्यं केन बुध्यते। ११

याद्टग् आदरणीयत्वं तव क्रोधोऽपि तादृशः॥
१२ त्वमस्मान् स्वदिनानां तां गणनामभिशिक्षय।
स्वमनांसि यया सर्व्वे ज्ञाने नेष्यामहे वयं॥
१३ परमेश निवर्त्तस्व कतिकालं विलम्बसे।
त्वया स्वकीयदासेषु चानुकम्पा विधीयतां॥
१४ प्रातःकाले त्वमेवास्मान् स्वप्रसादेन तर्पय।
यावज्जीवं प्रफुल्लाश्च नन्दिष्यामो वयं ततः॥
१५ त्वत्तो नः क्लेशभोगस्य दिनानामनुसारतः।
दुःखदर्शनवर्षाणां साम्याच्चास्मान् प्रहर्षय॥
१६ तावकीनेषु दासेषु तव कार्य्यं प्रकाश्यतां।
त्वदीयो महिमा तेषां सन्तानेषु च दृश्यतां॥
१७ अस्मत्प्रभोः परेशस्य शोभास्मास्वधितिष्ठतु।
अस्मद्धस्तैः कृतं कर्म्म त्वं स्थिरीकुरु नः कृते।
कृतं यन्नः करैः कर्म्म तत् त्वमेव स्थिरं कुरु॥

---

## ९१ एकनवतितमं गीतं।

१ परमेश्वराश्रितानां जनानां निर्विघ्नत्वं १४ तान् प्रतीश्वरस्यानुग्रहश्च।

१ नरः सर्व्वोपरिस्थस्य गुप्तस्थानं समाश्रितः।
सर्व्वशक्तिमतस्तस्य छायायां सन्निवत्स्यति॥
२ परमेश्वरमुद्दिश्य भाषेऽहं त्वं ममाश्रयः।
मामकीनश्च दुर्गं त्वं ममाशाभूमिरीश्वरः॥
३ स त्वां व्याधस्य पाशाच्च पापमार्य्याश्च मोक्ष्यति।
४ स्वकीयेन पतत्रेण स त्वामाच्छादयिष्यति।
त्वं तस्य पक्षयुग्माधः शरणञ्च गमिष्यसि।
भविता तस्य सत्यत्वं फलको वारणञ्च ते॥
५ न भविष्यति ते त्रासो रात्रिकालिकभीषणात्।
न दिवाकाशमार्गेण पततो वा कलम्बतः।
६ न तमोगामिनो व्याधे र्न माध्याह्निकमारकात्॥
७ त्वत्पार्श्वस्थाः पतिष्यन्ति सहस्रसंख्यका जनाः।
अयुतं दक्षिणस्थाश्च त्वां न स्प्रक्ष्यति सा विपत्॥

केवलं स्वीयचक्षुर्भ्यां त्वं तामालोकयिष्यसि। ८
प्रतीकारञ्च दुष्टानां प्रसमीक्षिष्यसे नरां॥
परमेश त्वमेवासि मामकीनसमाश्रयः। ९
सर्व्वोपरिस्थमेव त्वं हे मनः शरणं गतं॥
नोपस्थास्यत्यनिष्टं त्वां मारी नाप्स्यति ते गृहं॥ १०
आदेक्ष्यति स्वदूतान् स रक्षां ते सर्व्ववर्त्मसु। ११
यस्माच्चान्याः पदं शैले तत् त्वां वक्ष्यन्ति ते करैः॥ १२
त्वं करिष्यसि सिंहे च विषास्ये च पदार्पणं। १३
पशुराजं पृदाकुञ्च पद्भ्यां मर्द्दिष्यसि स्वयं॥
आसक्तो मय्यसौ तस्मात् तं रक्षिष्याम्यहं किल। १४
उन्नतं तं करिष्यामि यस्मात् स मम नामवित्॥
मयि प्रार्थयमानाय तस्मै दास्यामि चोत्तरं। १५
अहमेव करिष्यामि साहाय्यं तस्य सङ्कटे।
तञ्च निस्तारयिष्यामि तस्मै दास्ये च गौरवं॥
सुदीर्घेणायुषा तस्य करिष्यामि च तर्पणं। १६
दर्शयिष्यामि तञ्चाहं परित्राणं मया कृतं॥

---

## ९२ द्विनवतितमं गीतं।

१ ईश्वरीयगुणानां कीर्त्तनं ६ पापिनां दुःखं पुण्यवतां सुखं।

विश्रामदिने गातव्यं धर्म्मगीतं।

उत्तमं परमेशस्य गुणानामनुकीर्त्तनं। १
गायनं नामधेये च तव सर्व्वोपरिस्थित।
नेवला दशतन्त्र्या च वीणया च गभीरया। २
प्रातस्तव प्रसादस्य निशि सत्यस्य बोधनं॥ ३
यस्मान्मां व्यदधा हृष्टं त्वं परेश स्वकर्म्मणा। ४
त्वदीयहस्तयोः कार्य्यैरुल्लासो जायते मम॥
कीदृङ्महन्ति विद्यन्ते त्वत्कार्य्याणि परेश्वर। ५
सन्ति चातीव गम्भीरा मनसः कल्पनास्तव॥
न वेत्ति पशुवल्लोको मूढश्चेदं न बुध्यते॥ ६
दुष्टानां तृणवद्वृद्धिः फुल्लतिश्च कुकर्म्मणां। ७

तेषां शाश्वतनाशेन सफला सम्भविष्यति ॥
८ किन्तु हे परमेश त्वं नित्यमासे समुन्नतः ॥
९ परेश त्वद्द्विषः पश्य विनंक्ष्यन्ति तव द्विषः ।
दुष्क्रियाचारिणः सर्व्वे गमिष्यन्ति विकीर्णतां ॥
१० त्वं विधास्यसि मच्छृङ्गम् उच्छ्रितं खड्गिशृङ्गवत् ।
सद्योजातेन तैलेन मच्छिरश्चाभिषेक्ष्यते ॥
११ तृप्तिं यास्यति मच्चक्षु दर्शनाद् द्वेषिणां मम ।
मम कर्णौ विपक्षाणां श्रवणाच्च दुरात्मनां ॥
१२ परिवर्द्धिष्यते सम्यग् धार्म्मिकस्तृणराजवत् ।
स भविष्यति चात्युच्चो लिवानोन्धेरसो यथा ॥
१३ धार्म्मिका रोपयिष्यन्ते परमेशस्य मन्दिरे ।
वर्द्धिष्यन्ते च तेऽस्माकम् ईशस्य प्राङ्गणेषु हि ॥
१४ वार्द्धक्येऽपि फलिष्यन्ति सरसास्ते सतेजसः ॥
१५ परमेशो यथार्थोऽस्ति स एवास्माकमाश्रयः ।
कपटस्तस्य नास्तीति ज्ञापयिष्यन्ति ते नराः ॥

---

## ९३ त्रिनवतितमं गीतं।

ईश्वरीयराजत्वस्य सौन्दर्य्यस्थैर्ययो वर्णनं।

१ परेशः कुरुते राज्यं महिम्ना परिभूषितः ।
भूषितः परमेशोऽस्ति बद्धश्रोणि र्बलेन च ।
तस्मादेव जगत् स्थास्नु निश्चलञ्च वितिष्ठते ॥
२ प्राक्कालात् ते स्थिरो मञ्चस्त्वमनादिश्च वर्त्तसे ॥
३ हे परेश नदा उच्चै र्नदा उच्चै र्नदन्ति हि ।
उच्चैरेव तरङ्गिण्यः कल्लोलैः प्रधनन्ति च ॥
४ तोयराशे र्ध्वनिभ्योऽपि महोर्म्मिभ्योऽर्णवस्य च ।
ऊर्द्धवासिपरेशस्य महिमा त्वतिरिच्यते ॥
५ साक्ष्यवाक्यानि ते सम्यग् विश्वास्यानि भवन्ति हि ।
पुण्यता शोभते नित्यं तव गेहे परेश्वर ॥

---

# ९४ चतुर्नवतितमं गीतं।

१ पातकिलोकानां विरुद्धं प्रार्थनं तान् प्रति तिरस्कारश्च १६ धार्म्मिकाणां सुखस्य वर्णनं।

कर्म्मणां फलदाता त्वं हे प्रभो परमेश्वर। १
कर्म्मणां फलदाता त्वम् ईश राजस्व सूर्य्यवत्॥
क्षौण्या नियन्तस्तिष्ठ फलमर्पय गर्व्विषु॥ २
कियत्कालं दुरात्मानो हृष्यन्ति परेश्वर। ३
कियत्कालं दुरात्मानो करिष्यन्ति जयध्वनिं॥
वाचालत्वेन वाक्यानि निन्दार्थानीरयन्ति ते। ४
आत्मश्लाघाञ्च कुर्व्वन्ति सर्व्वे दुष्कर्म्मकारिणः॥
चूर्णयन्ति प्रभो लोकांस्तव क्लिश्नन्ति च प्रजाः॥ ५
विधवाश्चातिथीन् घ्नन्ति निर्नाथान् मारयन्ति च॥ ६
ते नराश्च वदन्तीदं परमेशो न पश्यति। ७
याकूबोयेश्वरश्चात्र किञ्चिदेव न बुध्यते॥
प्रजामध्ये स्थिता मूढा यूयं बुद्धिमवाप्नुत। ८
हे निर्बोधाः कदा यूयं विज्ञतामाचरिष्यथ॥
श्रवणेन्द्रियस्रष्टा यस्तेन किं श्रूयते नहि। ९
दर्शनेन्द्रियनिर्म्माता किं समालोक्यते नहि॥
जातीनां बोधकः किं वा करोति नहि शासनं। १०
ज्ञानदाता मनुष्याणाम् अद्वितीयः स विद्यते॥
प्रभु र्वेत्ति नृणां चिन्ता यतोऽसारा हि सन्ति ते॥ ११
स धन्यो मानवो यस्मै विधाय शासनं त्वया। १२
स्वीयशास्त्रोद्भवा शिक्षा दीयते परमेश्वर॥
दुर्जनस्य कृते गर्त्तो यावन्नहि खनिष्यते। १३
तावत् त्वत्तो विपत्काले स विश्राममवाप्स्यति॥
यतो हेतोः परेशेन न त्यक्ष्यन्ते निजप्रजाः। १४
अधिकारः स्वकीयश्च तेन नैव विहास्यते॥
धर्म्मं प्रति विचारस्तु परिवर्त्तिष्यते पुनः। १५
तमेवानुचरिष्यन्ति सकला ऋजुमानसाः॥
क उत्थास्यति मत्पक्षे दुष्टानां प्रतिकूलतः। १६

दुष्क्रियाचारिभिः सार्द्धं मदर्थं को हि योत्स्यते ॥
১৭ मामकीनोपकारी चेन्नाभविष्यत् परेश्वरः।
तर्हि शीघ्रं मम प्राणा न्यवत्स्यन् मौनवेश्मनि ॥
১৮ विचलिष्यति मत्पाद इति वाक्ये मयेरिते।
परमेश तव प्रीतिः सुस्थिरं विदधाति मां ॥
১৯ बहुसंख्यासु चिन्तासु सञ्जातासु मदन्तरे।
तव प्रबोधवाक्यानि हर्षयन्ति मनो मम ॥
২০ किं सम्बन्धि तव स्यात् तत् पापाशयन्टपासनं।
यत् करोति विधानेन दौरात्म्यस्य निरूपणां ॥
২১ उपाक्रामन्ति ते लोका धार्म्मिकस्यैव जीवनं।
रक्तपाताय निर्दोषे दोषमारोपयन्ति च ॥
২২ किन्तु मे प्रोन्नतं दुर्गं परमेशो भविष्यति।
मदीयाश्रयशैलश्च भविता हि ममेश्वरः ॥
২৩ स तेषामपराधानां फलं तान् प्रापयिष्यति।
तेषां दुष्टतया तांश्च समुच्छिन्नान् करिष्यति।
परेशः प्रभुरस्माकं तानुच्छिन्नान् करिष्यति ॥

---

## ৯৫ पञ्चनवतितमं गीतं।

১ ईश्वरं प्रशंसितुं विनयः ৬ अनादेशकर्त्तां दण्डश्च।

১ आगच्छत प्रगास्यामो वयं सर्व्वे परेश्वरं।
अस्मत्त्राणाद्रिमुद्दिश्य करिष्यामो जयध्वनिं ॥
২ प्रशंसामेव कुर्व्वन्तो यास्यामस्तस्य सम्मुखं।
तं समुद्दिश्य गीतैश्च करिष्यामो जयध्वनिं ॥
৩ यतो हेतो र्महान् ईशः केवलः परमेश्वरः।
स महान् अधिराजश्च समस्तदेवगणोपरि ॥
৪ मह्याः सर्व्वाणि मूलानि तस्य हस्ते स्थितानि हि।
गिरीणां दुर्गमाः कूटाः सर्व्वे तस्यैव सन्ति च ॥
৫ तस्यैवास्ति समुद्रोऽपि यस्मात् तेन स निर्म्मितः।
तथा शुष्कस्थलं तस्य हस्ताभ्यान्तु निरूपितं ॥
৬ आगच्छत करिष्यामो भजनं प्रणता वयं।

खानुपातश्च नः खड्गः परमेशस्य सम्मुखे॥
यतो हेतोः स एवास्ते ऽद्वितीयो ऽस्माकमीश्वरः। ७
वयं पाल्यप्रजास्तस्य मेषास्तत्पाणिना भृताः।
अद्य तस्य रवं यूयं यदि संश्रोतुमिच्छथ॥
कृतं तर्हि मिरीवाख्ये विवादस्य स्थले यथा। ८
प्रान्तरस्थमसायाञ्च परीक्षादिवसे यथा।
युष्माभिः स्वमनो नैव कठोरीक्रियतां तथा॥
युष्माकं पितरस्तत्र प्राकुर्व्वन् मत्परीक्षणं। ९
कृतं तैर्मे ऽनुसन्धानं वीक्षमाणैः क्रिया मम॥
चत्वारिंशत् समा यावद् अखिद्ये ऽहं तदन्वये। १०
ततो ऽहमवदं लोका भ्रान्तान्तःकरणा इमे।
मामकीनानि वर्त्मानि न जानन्ति नरा इमे॥
ततो हेतोरहं कोपात् शपथं कृतवानिमं। ११
मद्विश्रामस्थलं लोकैरेतै नैव प्रवेक्ष्यते॥

---

## ९६ षन्नवतितमं गीतं।

प्राधान्यस्य स्वामित्वस्य शासनस्य च निमित्तं परमेश्वरं धन्यं वक्तुं विज्ञप्तिः।

परमेश्वरमुद्दिश्य गीतं गायत नूतनं। १
सङ्गायत परेशाय सकलाः क्षितिवासिनः॥
सङ्गायत परेशाय वन्दध्वं तस्य नाम च। २
कृतं तेन परित्राणं समाख्यात दिने दिने॥
युष्माभि र्वर्ण्यतां तस्य गौरवं भिन्नजातिषु। ३
आश्चर्य्याश्च क्रियास्तस्य कथ्यन्तां सर्व्वदेशिषु॥
यतो हेतो र्महान् सम्यक् स्तोतव्यश्च परेश्वरः। ४
स एवादरणीयश्च सर्व्वदेवगणोपरि॥
यतो ऽन्यदेशिनां देवाः सर्व्वे निःसारमूर्त्तयः। ५
परन्तु परमेशेन निर्म्ममे व्योममण्डलं॥
महिमा च प्रतापश्च तिष्ठतस्तस्य सम्मुखे। ६
शक्तिः शोभा च विद्येते तदीयधर्म्मधामनि॥
हे वंशाः सर्व्वदेशीयाः सम्मनुध्वं परेश्वरं। ७

गौरवेण च श्रद्धया च समर्पयध्वं परेश्वरं॥
८ स्वनाम्नो गौरवेणैव समर्पयध्वं परेश्वरं।
उपहारं समादाय यात तत्प्राङ्गणानि च॥
९ भजनं परमेशस्य विधद्धं पूतशोभया।
बिभीत तस्य साक्षाच्च सकलाः क्षितिवासिनः॥
१० भिन्नजातिषु ब्रूतेदं राजत्वं कुरुते प्रभुः।
ततो क्षेत्रो जगत् स्थास्नु न कदापि चलिष्यति।
न्यायेन सर्व्वजातीनां विचारं विदधाति सः॥
११ अनेनानन्दतु स्वर्गो नरलोकश्च हृष्यतु।
गर्जनञ्च करोत्वब्धिस्तस्य सर्व्वञ्च पूरकं॥
१२ उल्लसन्तु च केदारास्तन्मत्यैः सकलैः सह।
जयनादञ्च कुर्व्वन्तु सकला वनपादपाः॥
१३ अग्रतः परमेशस्य यतः स आगमिष्यति।
वसुधाया विचारार्थम् आगमं स करिष्यति।
विचारं नरलोकस्य स धर्म्मेण विधास्यति।
स्वीयसत्यतया चैव शासनं सर्व्वदेशिनां॥

---

## ९७ सप्तनवतितमं गीतं।

ईश्वरस्य प्रशंसा धार्म्मिकाणां सुखवर्णना च।

१ परेशः कुरुते राज्यं तेन नन्दतु मेदिनी।
बहुसङ्ख्या अपि द्वीपास्तेन कुर्व्वन्तु हर्षणं॥
२ मेघमाला तमिस्रञ्च तच्चतुर्दिक्षु तिष्ठतः।
धर्म्मे च सुविचारे च स्थापितं तन्नृपासनं॥
३ वह्निस्तस्याग्रतो गच्छन् चतुःपार्श्वे दहत्यरीन्॥
४ तदीयमेघदीपा हि दीपयन्ति चराचरं।
तत् समालोकमाना च पृथिवी परिकम्पते॥
५ क्षरन्ति सिक्थवच्छैलाः परमेशस्य सम्मुखे।
कृत्स्नभूलोकनाथस्य परमेशस्य सम्मुखे॥
६ आकाशमण्डलं तस्य धर्म्ममेव प्रशंसति।
सर्व्वदेशीयलोकैश्च तस्य तेजो विलोक्यते॥

[illegible] सर्व्वे [illegible] मूर्त्तिपूजकाः । ७
युष्माभिः सकला देवा एष एव प्रणम्यतां ॥
विचारांस्तावकान् श्रुत्वा सियोनाद्रिः प्रहृष्यति । ८
तासां कृते च नन्दन्ति यिहूदाः पुत्रिका अपि ॥
उन्नतोऽसि परेश त्वं कृत्स्नभूमण्डलोपरि । ९
अतीवोच्चपदस्थश्च कृत्स्नदेवगणोपरि ॥
हे परेशप्रिया यूयमृतीयध्वमसाधुतां । १०
स्वीयसाधुमनुष्याणां प्राणान् स परिरक्षति ।
दुरात्मनाञ्च हस्तेभ्यस्तान् स एवोद्धरिष्यति ॥
दीप्त्युत्पादकवीजानि न्युप्यन्ते धर्म्मिणः कृते । ११
आनन्दस्य च वीजानि निमित्तं सरलात्मनां ॥
हे नरा धार्म्मिका यूयं ह्लादध्वं परमेश्वरे । १२
स्मरन्तस्तस्य पावित्र्यं कुरुध्वञ्च प्रशंसनं ॥

---

## ९८ अष्टनवतितमं गीतं ।

परमेश्वरं प्रशंसितुं सर्व्वान् प्रति विनयः ।

धर्म्मगीतं ।

परमेश्वरमुद्दिश्य गीतं गायत नूतनं । १
एता हेतोः स कर्म्माणि आश्चर्य्याणि चकार हि ।
पूतो दोर्द्दण्डहस्तश्च तस्य त्राणमसाधयत् ॥
परेशः स्वकृतं त्राणं स्वयमज्ञापयज्जनान् । २
स्वधर्म्मः सर्व्वजातीनां साक्षात् तेन प्रकाशितः ॥
इस्रायेलन्वयार्थं सो ऽस्मारीत् स्वसत्यतादये । ३
अदर्शीशस्य नस्त्राणं सर्व्वैः क्षित्यन्तवासिभिः ॥
परेशं जयिनं ब्रूत सकलाः क्षितिवासिनः । ४
ह्लादध्वं हर्षनादेन उच्चवाद्येन गायत ॥
परमेश्वरमुद्दिश्य गीतं गायत वीणया । ५
वीणया धर्म्मगीतस्य मधुरेण स्वरेण च ॥
शृङ्गैश्च तूर्य्यशब्दैश्च कुरुध्वं हि जयध्वनिं । ६
विश्वलोकाधिराजस्य परमेशस्य सम्मुखे ॥

७ गर्जद्भिः समामपि शैलाः सवासिभिः सह ॥
८ करतालं नद्यः कुर्य्युः शैलाः सर्व्वे जयध्वनिं।
९ प्रभोरग्रे विचारार्थं मेदिन्या आगमिष्यतः।
विचारं नरलोकस्य स धर्म्मेण विधास्यति।
याथार्थ्येन च लोकानां शासनं सर्व्वदेशिनां॥

---

# ९९ ऊनशततमं गीतं।

आश्चर्य्यकर्म्मकारिणः प्रार्थनाश्रवणकारिणश्चेश्वरस्य प्रशंसनं।

१ परेशः कुरुते राज्यं कम्पन्ते जातयस्ततः।
किरूवयोः स आसीनो विचलत्यवनिस्ततः॥
२ परमेशः सियोनाद्रौ वर्त्तते महिमान्वितः।
उन्नतश्च स एवास्ति कृत्स्नवंशगणोपरि॥
३ भवतो नामधेयस्य महतो भीषणस्य च।
प्रशंसां ते करिष्यन्ति सुपवित्रो यतो भवान्॥
४ सुविचारप्रियस्यैव राज्ञस्तैः स्तोष्यते बलं।
यथार्थव्यवहारस्य त्वया स्थैर्य्यं निरूपितं।
सुविचारश्च धर्म्मश्च याकूवि स्थापितस्त्वया॥
५ अस्मत्प्रभोः परेशस्य महिमानं प्रशंसत।
पादपीठे नतास्तस्य सुपवित्रो यतोऽस्ति सः॥
६ मूसाहारोणनामानौ तद्याजकाविमौ।
तन्नाम्ना प्रार्थिनाश्चैकः शिमूयेलाभिधो नरः।
परमेश्वरमुद्दिश्य सदाकुर्व्वत प्रार्थनां।
स तेभ्यः प्रार्थमानेभ्य उत्तरं व्यतरत् स्वयं॥
७ मेघस्तम्भेऽधितिष्ठन् स समभाषत तैः सह।
स्वीयप्रमाणधारिभ्यस्तेभ्यः स दत्तवान् विधिं॥
८ अस्मत्प्रभो परेश त्वम् अददास्तेभ्य उत्तरं।
क्षमावान् ईश्वरश्च त्वम् अभवस्तान् नरान् प्रति।
किन्तु तेषाम् अधर्म्माणां प्रतीकारविधायकः॥
९ अस्मत्प्रभोः परेशस्य महिमानं प्रशंसत।

प्रकुरुध्वं प्रणामञ्च पवित्रे तस्य पर्व्वते।
यतो हेतोः पवित्रोऽस्ति नः प्रभुः परमेश्वरः॥

---

## १०० शततमं गीतं।

महिमपराक्रमानुग्रहनिमित्तम् ईश्वरस्य प्रशंसनं।

प्रशंसार्थकं धर्म्मगीतं।

परेशं जयिनं ब्रूत सकलाः क्षितिवासिनः॥ १
आनन्देन कुरुध्वञ्च परमेशस्य सेवनं। २
हर्षनादेन तस्यैव समक्षमुपतिष्ठत॥
युष्माभि र्ज्ञायतामेतत् परेशः सत्य ईश्वरः। ३
अस्मत्सृष्टिः क्रिया तस्य सा त्वस्माकं क्रिया नहि।
वय तस्य प्रजावर्गस्तत्क्षेत्रस्यावयो वयं॥
स्तुत्या कुरुत तस्यैव गोपुरेषु प्रवेशनं। ४
धर्मगानं प्रकुर्व्वन्तो यात तत्प्राङ्गणानि च।
कुरुध्वञ्च स्तवं तस्य नाम तस्य प्रशंसत॥
यतो हेतोः परेशः सन् करुणा तस्य शाश्वती। ५
पुरुषानुक्रमं यावत् स्थायिनी तस्य सत्यता॥

---

## १०१ एकशततमं गीतं।

दायूदो मानवं प्रतिज्ञा च।

दायूदो धर्म्मगीतं।

दयां दण्डञ्च गास्यामि त्वां परेशोपवीणयन्॥ १
विज्ञतामाचरिष्यामि सिद्धमार्गे व्रजन्नहं। २
अभ्यागमो मदासन्ने कदा कारिष्यते त्वया।
सिद्धान्तःकरणेनाहम् आचरिष्यामि मद्गृहे॥
समाक्षान्नैव दुष्कर्म्म स्थापयिष्यामि लक्ष्यवत्। ३
गर्ह्यं भ्रष्टस्य कर्म्माहं मयि तन्न लगिष्यति॥
वक्रभावो मनुष्यस्य मत्तो दूरं सरिष्यति। ४

दुर्जनेन सहालापो नैव कारिष्यते मया ॥
५ मित्रं निन्दति यो गुप्तं स समुच्छेत्स्यते मया।
ऊर्द्धाक्षो गर्व्विभावश्च न सह्यो मन्यते मया ॥
६ विश्वास्यान् देशजान् वीक्षे ते वत्स्यन्ति मया सह।
सिद्धमार्गावलम्बी यः स मद्भृत्यो भविष्यति ॥
७ मानवः कपटाचारी मम गेहे न वत्स्यति।
मृषावादी च मत्साक्षाद् अवस्थातुं न शक्ष्यति ॥
८ उच्छेत्स्यामि प्रतिप्रातर्देशस्थान् सर्व्वदुर्जनान्।
परेशस्य पुरात् सर्व्वान् परिछन्नन् कुकर्म्मिणः ॥

---

## १०२ द्विशततमं गीतं।

अवसन्नत्वात् परमेश्वराय स्वचिन्तां निवेदयतो दीनहीनस्य प्रार्थना।

१ प्रार्थनां मामकीनां त्वं परमेश्वर संशृणु।
मामकीनार्त्तरावश्च त्वत्साक्षाद् उपतिष्ठतु ॥
२ मा समाच्छाद्यतां मत्तो भवता स्वीयमाननं।
मद्विपत्ते र्दिने त्वञ्च मयि श्रोत्रं निधेहि हि।
मदाह्वानदिने देहि त्वरितं मह्यमुत्तरं ॥
३ यतो हेतो र्विलुप्यन्ते दिवसा मम धूमवत्।
उल्कावन्मामकीनानि कीकसानि ज्वलन्ति च ॥
४ आहतं तृणवच्छुष्कम् अस्यन्तःकरणं मम।
तस्मान्मदीयचित्तस्य भोक्तुं भवति विस्मृतिः ॥
५ मम खेदोक्तिशब्देन लगन्त्यस्थीनि चर्म्मणि ॥
६ मरुभूमिस्थकङ्कस्य सादृश्यं प्राप्तवानहं।
तुल्योऽस्मि वायसारातेरच्छिन्नालयवासिनः ॥
७ जाग्रन् वर्त्ते च निःसङ्गः पटले चटको यथा।
८ मामकीनविपक्षा मां विनिन्दन्त्यखिलं दिनं।
ये च मां प्रति कोपान्धास्ते मां शापास्पदं विदुः ॥
९ अन्नवद् भस्म भक्षामि मिश्रयाम्यश्रुभिः पयः ॥
१० त्वदीयक्रोधरोषाभ्यां त्वयोन्नम्य निपातितः ॥

सान्धच्छायावदायुर्मे परिशुष्यामि घासवत्। ११
नित्यं सिंहासनासीनः स्थास्यसि त्वं परेश्वर। १२
पुरुषानुक्रमं यावत् स्थायिनी तव संस्मृतिः॥
त्वमुत्थाय सियोनाख्याम् अनुकम्पिष्यसे पुरीं। १३
अयं तत्प्रियताकालः समयः समुपागतः॥
यतस्तस्याः शिलाराशौ प्रीयन्ते तव सेवकाः। १४
तस्या धूलिसमूहे च करुणार्द्रा भवन्ति ते॥
भेष्यन्ते सर्व्वजातीयाः परमेशस्य नामतः। १५
सर्व्वे चौण्याश्च राजानस्तावकीनप्रतापतः॥
यतो हेतोः सियोनं स निर्म्मास्यति परेश्वरः। १६
तदा स्वीयप्रतापेन दर्शनं स प्रदास्यति॥
प्रार्थनायाञ्च दीनानां स प्रसन्नो भविष्यति। १७
लोकानां प्रार्थना तेषां नैव तेनावमंस्यते॥
भाविवंशीयलोकानां निमित्तं लिख्यते त्विदं। १८
स्रक्ष्यते यः प्रजावर्गः स स्तोष्यति परेश्वरं॥
अधो विधाय दृक्पातं ऊर्द्ध्वस्थधर्म्मधामतः। १९
स्वर्गादेव समालोक्य पृथिवीं परमेश्वरः॥
कारावद्धस्य लोकस्य रावमाकर्णयिष्यति। २०
मृतकल्पमनुष्यस्य मोचनञ्च करिष्यति॥
ततः परेशसेवार्थं सर्व्वदेशनिवासिभिः। २१
सर्व्वराष्ट्रीयलोकैश्च युगपन्मिलने कृते॥
सियोने परमेशस्य नाम संवर्णयिष्यते। २२
यिरूशालमपुर्य्याञ्च तस्य कारिष्यते स्तवः॥
न्यूनं हि क्रियते तेन पथिमध्ये बलं मम। २३
मामकीनदिनानाञ्च छेदनं विदधाति सः॥
ततोऽहं वच्मि हे ईश मामर्द्धायुषि मा हर। २४
पुरुषानुक्रमं यावद् वत्सराः स्थास्नवस्तव॥
आदिकाले हि मेदिन्या मूलं संस्थापितं त्वया। २५
तथा त्वदीयहस्ताभ्यां निर्म्मितं व्योममण्डलं॥
उभे ते यास्यतो नाशं किन्तु त्वमवतिष्ठसे। २६
जीर्णताञ्च गमिष्यन्ति तानि सर्व्वाणि वस्त्रवत्।

अवाप्स्यन्ति विकारश्च विकार्य्य वेशवत् त्वया॥
१७ त्वन्तु नित्यं स एवासि निरन्तास्तव वत्सराः॥
१८ त्वदीयसेवकानान्तु सन्तानै वास आप्स्यते।
सुस्थिरस्तव साक्षाच्च तेषां वंशो भविष्यति॥

---

# १०३ त्रिशततमं गीतं।

दयानुग्रहयोः कृते परमेश्वरं प्रशंसितुं विषयः।

दायूदो गीतं।

१ परमेश्वरमेव त्वं वन्दस्व हे मनो मम।
वन्दस्व तस्य पूतञ्च नाम कृत्स्न मदन्तर॥
२ परमेश्वरमेव त्वं वन्दस्व हे मनो मम।
तदीयहितकर्म्माणि सकलानि न विस्मर॥
३ दोषाणां तव सर्व्वेषां मार्ज्जनं विदधाति सः।
व्याधीनां तव सर्व्वेषां प्रतीकारं करोति च॥
४ नाशतश्च तवासूनाम् उद्धारस्तेन साध्यते।
स दयाकरुणाभ्याञ्च त्वां करोति किरीटिनं॥
५ तर्पयत्युत्तमै र्द्रव्यैस्तावकीनाननञ्च सः।
यौवनं कुररस्येव नवीनं जायते तव॥
६ परमेश्वर एवास्ति न्यायकर्म्मविधायकः।
सर्व्वेषां पीड्यमानानां सुविचारं करोति सः॥
७ पुरा स्वकीयमार्गान् स ज्ञापयामास मूससं।
इस्रायेलीयवंशञ्च स्वीयकर्म्माण्यवेदयत्॥
८ अनुकम्पी दयालुश्च स्मृतः स परमेश्वरः।
क्रोधे विलम्बकारी स वरिष्ठोऽनुग्रहे तथा॥
९ न स वैरायते नित्यं न स कुप्यति सर्व्वदा॥
१० अस्मत्पापानुसारेण नाचचार स नः प्रति।
अस्मभ्यञ्चापराधानां न समं स ददौ फलं॥
११ भुवनोपरि यत्युच्चं भवेद् गगनमण्डलं।
तति गुर्व्वी कृपा तस्य स्वीयभक्तगणोपरि॥

उदयाद् यति दूरञ्च सूर्य्यास्तस्य स्थलं भवेत्। १२
अस्मत्तो निजपापानि तति दूरीकरोति सः॥
यादृशी निजपुत्त्रेषु जनकस्य दया भवेत्। १३
स्वभक्तेषु परेशस्य तादृशी जायते दया॥
किम्भूता सृष्टिरस्माकं सम्यग् वेत्ति स एव तत्। १४
वयं रेणुमया एतत् तेन संस्मर्य्यते ध्रुवं॥
तृणतुल्यानि मर्त्त्यस्य दिनानीह भवन्ति हि। १५
क्षेत्रे पुष्पं यथा फुल्लेत् तद्वदेव स फुल्लति॥
तं स्पृष्ट्वा पवने याते स निःसत्त्वं प्रगच्छति। १६
न स्वकीयस्थलेनापि स पुनः परिचीयते॥
परन्त्वनाद्यनन्तैव करुणा परमेशितुः। १७
भक्तेषु वर्त्तते तस्य धर्म्मः पुत्त्रसुतेषु च।
नियमाचारिणां तस्य स्मरतां कर्म्मभि र्विधीन्॥ १८
स्वर्गे संस्थापयामास परमेशो निजासनं। १९
करोति स्वीयराजत्वे स सर्व्वोपरि शासनं॥
वन्दध्वं परमेशं तं यूयं दूतास्तदीयकाः। २०
वीरा महाबला यूयं तदीयादेशसाधकाः।
तदीयादेशशब्दस्य श्रवणे नित्यमुद्यताः॥
वन्दध्वं परमेशं तं तस्य सर्व्वबलान्यपि। २१
तदीयसेवका यूयं तदभीष्टस्य साधकाः॥
वन्दध्वं परमेशं तं हे तदीयाखिलाः क्रियाः। २२
तदधीनस्य राष्ट्रस्य सर्व्वस्थानेषु विस्तृताः।
परमेश्वरमेव त्वं वन्दस्व हे मनो मम॥

---

## १०४ चतुःशततमं गीतं।

ईश्वरस्य गुणकर्म्मणो र्वर्णनं प्रशंसा च।

परमेश्वरमेव त्वं वन्दस्व हे मनो मम। १
त्वमतीव महान् आसे हे परेश्वर मत्प्रभो।
तेजःशोभास्वरूपेण वाससा त्वं विभूषितः॥
त्वं परिच्छदवद् दीप्त्या चात्मानं परिवेष्टसे। २

उल्लोचश्च यथा तद्वद् अन्तरीक्षं तनोषि हि॥
३ जलैः स्वाट्टांश्च निर्म्मासि करोष्यभ्रमं निजं रथं।
गन्धवाहस्य पक्षाभ्यां विदधासि समागमौ॥
४ स्वदूतान् कुरुषे वायून् स्वभृत्यान् ज्वलितानलं॥
५ स्वकीयभित्तिमूलेषु स्थापिता मेदिनी त्वया।
न चलिष्यति तस्मात् सा सर्व्वकालावधि स्थिरा॥
६ त्वं व्यस्तारी गंभीराणि वारीण्यावरणं यथा।
उर्द्दतिष्ठंश्च तोयानि तदानीं भूधरोपरि॥
७ किन्तु तानि पलायन्त दूरं त्वदीयभर्त्सनात्।
तव गर्ज्जनशब्दाच्च कम्पस्तेषामजायत॥
८ उदतिष्ठन् तदा शैला अधोऽगच्छन्नुपत्यकाः।
प्रत्येकञ्च त्वयादिष्टं स्वीयस्थानं समाश्रयन्॥
९ तेषामलङ्घनीयञ्च सीमानं त्वं न्यरूपयः।
न कदापि परावृत्य धरा तैश्छादयिष्यते॥
१० निम्नभूमिषु तोयानाम् उत्सा उत्पादितास्त्वया।
गिरीणामन्तरालेषु विसर्पन्तो व्रजन्ति हि॥
११ सर्व्वेभ्यो वन्यजन्तुभ्यः पेयं तैः प्रतिपाद्यते।
तृष्णां छिन्दन्ति तत्रैव गर्द्दभा वनवासिनः॥
१२ तदूर्द्धं कुर्व्वते वासं पक्षिणो व्योमचारिणः।
शाखामध्ये सुखासीना गायन्त्युच्चरवेण च॥
१३ स्वीयाट्टेभ्यो जलं प्रेष्य त्वं हि सिञ्चसि पर्व्वतान्।
महीं त्वत्सृष्टवस्तूनां फलैस्तर्पयसि स्वयं॥
१४ तृणं प्ररोह्य पश्वर्थं शाकं नृणां हिताय च।
उत्पाद्यन्ते हि भक्ष्याणि धराया मध्यतस्त्वया॥
१५ द्राक्षारसा मनुष्याणां हृत्सु हर्षप्रदायिनः।
तैलात् तदीयवक्त्राणां प्रफुल्लत्वप्रवर्द्धकाः।
गोधूमा अपि मर्त्यानां चित्ताप्यायनकारिणः॥
१६ रसपूर्णा हि विद्यन्ते परमेशस्य पादपाः।
एरसाख्या लिवानोने हस्ताभ्यां तेन रोपिताः॥
१७ तत्र स्थाने प्रकुर्व्वन्ति स्वनीडान् क्षुद्रपक्षिणः
आलया लग्लगानाञ्च विद्यन्ते देवदारवः॥

उच्चशैलाः प्रयच्छन्ति वनछागेभ्य आश्रयं। १८
शाफटाभिधजन्तूनाम् आश्रयाश्च शिलोच्चयाः॥
कालपर्य्यायबोधार्थं त्वयासर्जि निशापतिः। १९
अस्तालम्बनकालञ्च विजानाति दिवाकरः॥
अन्धकारे त्वयानीते रजनी तूपतिष्ठति। २०
प्रसर्पन्ति तदा सर्व्वे पशवोऽरण्यवासिनः॥
सिंहा गर्जन्ति मांसार्थं याचन्ते चान्नमीश्वरात्॥ २१
सूर्य्योदयेऽपगच्छन्तः स्वगुहासु स्वपन्ति ते॥ २२
नरः कार्य्याय निष्क्रान्तः सन्ध्यां यावद् व्यवस्यति॥ २३
कीदृग् बहूनि विद्यन्ते त्वत्कर्म्माणि परेश्वर। २४
तानि सर्व्वाणि सज्ञानं साधयाञ्चक्रिरे त्वया।
परिपूर्णा त्वदीयार्थैरियमस्ति वसुन्धरा॥
अमुं महार्णवं पश्य सुविस्तीर्णं समन्ततः। २५
असंख्यास्तत्र विद्यन्ते प्राणिनो वारिवासिनः।
तत्र क्षुद्रा महान्तश्च वर्त्तन्ते जलजन्तवः॥
विहारं कुर्व्वते तत्र पोताः सागरगामिनः। २६
क्रीडनार्थञ्च तन्मध्ये त्वत्सृष्टो लिवियाथनः॥
स्वकाले भक्ष्यदाता त्वं सर्व्वैरेतैरुदीक्ष्यसे॥ २७
त्वया यद् दीयते तेभ्यः सञ्चिन्वन्ति तदेव ते २८
त्वदीयमुक्तहस्तत्वात् तृप्यन्ति मङ्गलेन ते॥
त्वया प्रच्छादिते वक्त्रे पर्य्युद्विग्ना भवन्ति ते। २९
नासावायौ त्वया तेषां रुद्धे प्राणान् त्यजन्ति च।
जन्मस्थानं रजोरूपं पुनर्व्वारं प्रयान्ति च॥
स्वनिःश्वासं त्वया त्यक्ते तेषां सृष्टि र्विधीयते। ३०
भूमण्डलस्य रूपञ्च नवीनीक्रियते पुनः॥
प्रतापः परमेशस्य सदा स्थायी भविष्यति। ३१
स्वकीयेभ्यो हि कर्म्मभ्यस्तस्य हर्षो जनिष्यते॥
पृथिव्यां तेन दृक्पाते कृते सा परिकम्पते। ३२
भूधरास्तेन संस्पृष्टा धूममूर्द्धं क्षिपन्ति च॥
गास्यामि जीवनं यावत् समुद्दिश्य परेश्वरं। ३३
प्राणानां धारणं यावद् वाद्यैः स्तोष्ये महीश्वरः॥

३४ तस्मिन् मदीयकं ध्यानं सुखदायि भविष्यति ।
आनन्दञ्च करिष्यामि परमं परमेश्वरे ॥
३५ नंक्ष्यन्ति पापिनो मह्यां लोपं यास्यन्ति दुर्जनाः ।
परमेश्वरमेव त्वं वन्दस्व हे मनो मम ।
धन्यवादं परेशस्य कुरुध्वं सर्व्वमानवाः ॥

---

## १०५ पञ्चशततमं गीतं ।

इस्रायेल्लोकान् प्रतीश्वरस्य व्यवहाराणां वर्णनं ।

१ यूयं परेश्वरं स्तुध्वं तन्नाम्ना कुरुतार्थनं ।
सर्व्वदेशीयलोकेषु तत्कर्म्माणि प्रशंसत ॥
२ तस्मै गायत तस्मै च कुरुध्वं यन्त्रवादनं ।
अनुध्यायत तस्यैव सकला अद्भुताः क्रियाः ॥
३ तदीयस्य पवित्रस्य नाम्नः श्लाघां विधत्त च ।
तिष्ठत्वानन्दसंयुक्तं परमेशार्थिनां मनः ॥
४ कुरुध्वं परमेशस्य तच्छक्तेश्च गवेषणां ।
तदीयमाननं प्राप्तुं विचेष्टध्वं निरन्तरं ॥
५ अनुचिन्तयताश्चर्य्याः क्रियास्तेनैव साधिताः ।
तदीयाद्भुतचिह्नानि तद्वक्त्रस्य विधीनपि ॥
६ भो भो तदीयदासस्येब्राहीमाख्यस्य वंशजाः ।
भो भो तेन गृहीतस्य याकूबोऽन्वयसम्भवाः ॥
७ अस्मत्प्रभुः परेशः स कृत्स्नमह्या विचारकः ॥
८ स्वकीयो नियमस्तेन स्मर्य्यते हि निरन्तरं ।
सहस्रपुरुषान् यावद् आदिष्टं तेन तद् वचः ॥
९ इब्राहीमे प्रतिज्ञातम् इस्हाके शपथेन च ॥
१० याकूबीयस्य वंशस्य विधिवच्च निरूपितं ।
अनन्तनियमार्थं तद् इस्रायेलि स्थिरीकृतं ॥
११ स जगाद किनानाख्यं तुभ्यं दास्यामि नीवृतं ।
युष्मदीयाधिकारार्थं मानरज्ज्वेव मापितं ॥
१२ तदानीमासुगण्यास्ते स्वल्पास्तत्र प्रवासिनः ॥
१३ वंशाद् वंशान्तरं जग्मू राष्ट्राद् राष्ट्रान्तरं तथा ॥

स तु तान् प्रति कस्यापि नान्यजानादुपद्रवं। १४
तेषां कृते महीपालान् भर्त्सयंश्चेदमब्रवीत्॥
मा स्पृशताभिषिक्तान् मे मत्प्रवक्तृन् न हिंसत॥ १५
अपरं तेन दुर्भिक्षं समाहूय मही प्रति। १६
सर्व्वमेवान्नरूपञ्च विनिर्भज्यावलम्बनं॥
अग्रगः प्रहितस्तेषां यूषफ् व्यक्रायि दासवत्॥ १७
निगडैः क्लिष्टपादस्य तस्यासून् लौहमस्पृशत्॥ १८
शेषे तदीयवाक्यस्य सफलत्वे प्रकाशिते। १९
परमेशस्य वाचा च सिद्धे तस्य परीक्षणे॥
राजोद्धार तं दूतैर्भूपालस्तममूमुचत्॥ २०
तं स्वगेहाधिपं कृत्वा सर्व्वस्वस्य च नायकं॥ २१
स्वकीयेच्छानुसारेण कुलीनानाञ्च बन्धनं। २२
मन्त्रिणां बोधनञ्चापि तस्मिन्नेव समार्पयत्॥
तदानीं मिसरं देशम् इस्रायेल् अभियातवान्। २३
हामो जनपदे याकूब् प्रवासी सम्बभूव च॥
ईशः स्वीयप्रजानाञ्च वंशं सम्यगवर्द्धयत्। २४
विपक्षाणां बलात् तासां बलं श्रेष्ठं चकार च॥
स्वप्रजाः प्रति विद्वेषं स्वदासान् प्रति धूर्त्ततां। २५
यथा कुर्य्युस्तथा तेषां द्विषां चित्तं प्रवर्त्य सः॥
स्वदासं मूससं प्रैषीत् हारोणञ्च प्रियं नरं॥ २६
तेषां मध्ये तु तौ तस्य लक्षणानि सुविस्तरं। २७
अद्भुतानि च कर्म्माणि चक्रतु र्हामनीवृति॥
प्रहिते तिमिरे तेन घोरसन्तमसावृते। २८
ते नरास्तस्य वाक्यानां न बभूवु र्विरोधिनः॥
तेषां तोयान्यसृक् कृत्वा तेषां मीनान् जघान सः॥ २९
भेकास्तेषां भुवं व्यापू राज्ञामन्तःपुरेष्वपि॥ ३०
तद्वाचा मशका आयन् यूकास्तेषाञ्च नीवृतं॥ ३१
वृष्ट्यर्थं स शिलास्तेभ्यो देशे चाग्निशिखा ददौ॥ ३२
आहन् द्राक्षालतास्तेषां सकलानप्युडुम्बरान्। ३३
तेषां देशे स्थितान् सर्व्वान् प्रबभञ्ज च पादपान्॥
तद्वाचा शलभा एत्य शूककीटाश्च कोटिशः॥ ३४

३५ तेषां जनपदे जातं भक्षादुः सकलं तृणं।
अभक्षिषु र्हि सर्व्वाणि भूमिजानि फलानि ते॥
३६ सकलान् अग्रजातांश्च तेषां देशे जघान सः।
सर्व्वमेव न्तृणां तेषां वीर्य्यजं प्रथमं फलं॥
३७ स्वर्णरूप्यैः समं तेन स्वलोका निन्यिरे वहिः।
तेषां वंशेषु नैकोऽपि चाभवत् स्खलनोन्मुखः॥
३८ आननन्द र्हि मिस्रीयास्तेषां निर्गमनात् तदा।
तेषां भयानकत्वेन सर्व्वे जाता भयातुराः॥
३९ सोऽतानीत् मेघमुल्लोचं वह्निञ्च रात्रिदीपकं॥
४० याचितस्तैः समानैषीत् दूराद् वर्त्तकपक्षिणः।
स्वर्गीयेण च भक्ष्येण तर्पयामास तान् जनान्॥
४१ पाषाणे छिद्रिते तेन सलिलानि विसुस्रुवुः।
नदीवत् तान्यकुर्व्वंश्च मरुभूमौ विसर्पणं॥
४२ स्मरन् स्वपूतवाक्यं स इब्राहीमञ्च सेवकं।
४३ प्रजा उद्धृत्य हर्षेण स्वप्रियान्तस्वेन च।
४४ भिन्नजातीयलोकानां देशान् तेभ्यो ददौ तदा।
तांश्चकारान्यवंशानां कर्म्मणः फलभोगिनः॥
४५ किमर्थं ते यथा तस्य मन्येरन् सकलान् विधीन्।
तस्याज्ञाः पालयेयुश्च यूयं स्तुत परेश्वरं॥

---

## १०६ षट्शततमं गीतं।

ईश्वरं प्रतीस्रायेलीयलोकानां व्यवहारवर्णनं।

१ यूयं परेश्वरं स्तुध्वं परमेशं प्रशंसत।
यतो हेतोः स सद्भावो दया तस्य च शाश्वती॥
२ केन कीर्त्तयितुं शक्याः परेशस्य महाक्रियाः।
कृत्स्नां तस्य प्रशंसां वा कः प्रकाशयितुं क्षमः॥
३ धन्यो विचाररक्षी च धर्म्माचारी च सर्व्वदा॥
४ हे परेश प्रसादेन स्वप्रजामिव मां स्मर।
समादाय निजत्राणम् आगमं कुरु मां प्रति॥
५ त्वदीयानुगृहीतानां जनानां वीक्ष्य मङ्गलं।

त्वत्प्रजानां हि हर्षेण प्रहर्षिष्याम्यहं तदा।
उल्लासञ्च करिष्यामि तवाधीननरैः सह॥
पितरो नो वयञ्चापि पापाचारमकुर्म्महि। ६
तेनापराधिनो जाता दुर्जनाश्च स्मृता वयं॥
पितरो नो मिसर्देशे न जज्ञुस्तेऽद्भुताः क्रियाः। ७
तावकीनप्रसादञ्च बहुरूपं न सस्मरुः।
सूफाब्धौ च बभूवुस्त ईश्वरस्य विरोधिनः॥
स्वनामार्थं स तान् तत्रे स्वप्रभावं प्रकाशयन्॥ ८
भर्त्सितस्तेन सूफाब्धिः प्राप्तवान् परिशुष्कतां। ९
तस्मात् स प्रान्तरेणेव समुद्रेण निनाय तान्॥
अरातेश्च करात् तत्रे द्विषो हस्ताद् ररक्ष च॥ १०
आप आच्छादयामासुस्तेषां सर्व्वविरोधिनः। ११
शत्रूणां मध्य एकोऽपि नावाशिष्यत रक्षितः॥
तस्य वाक्येषु विश्वस्य ते जगुस्तत्स्तवं तदा॥ १२
विस्मृत्य तत्क्रियास्तूर्णं मन्त्रणाञ्चाप्रतीक्ष्य ते। १३
प्रान्तरे लोभिनो जाताः पर्य्यैक्षन्तेश्वरं मरौ॥ १४
स तेभ्यः प्रार्थितं दत्त्वा प्राणेषु प्राहिणोत् क्षयं॥ १५
शिविराभ्यन्तरे तेषु लोकेर्ष्वीर्ष्यत्सु मूससे। १६
परेशार्थं पविचाय हारोणाख्यनराय च।
मुखं व्यादाय जग्रास दाथनं मेदिनी स्वयं। १७
अवीरामस्य दलञ्चाच्छादयामास मण्डली॥
तेषां समाजमध्ये च प्रजज्वाल हुताशनः। १८
दुर्जनाः प्रतिजग्मुश्च शिखाभिस्तस्य दग्धतां॥
वत्सं होरेवि कृत्वा ते धातुमूर्त्तिमपूजयन्॥ १९
तृणाशिनश्च गो मूर्त्त्या स्वशोभां पर्य्यवर्त्तयन्॥ २०
ते स्वीयत्राणदातारम् ईश्वरं तं विसस्मरुः। २१
येन महान्ति कर्म्माणि मिसर्देशेऽति चक्रिरे।
हामदेशे च चित्राणि सूफाब्धौ भीषणानि च॥ २२
अतस्तान् नाशयिष्यामि वाक्यमेतत् स उक्तवान्। २३
किन्तु तस्य प्रियो मूसाश्छिद्रे स्थित्वा तदग्रतः।
तत्कोपं शमयित्वा च तं विनाशं न्यवारयत्॥

१४ रम्यदेशे विरक्तास्ते तदाक्वे व्यस्मन् नहि॥
१५ अपवाय स्वदृष्टेषु प्रभोराज्ञां न शुश्रुवुः॥
१६ तदानीमूर्द्धबाहुः स इत्थं शेपे हि तानधि।
अहं निपातयिष्यामि जनान् एतान् मरुस्थले॥
१७ जातीनां मध्य एतेषां पातयिष्यामि वंशजान्।
सकलेष्वेव देशेषु विकरीष्यामि तानहं॥
१८ ते वाल्पियोरमालम्ब्य प्रेतयज्ञान् उपाश्य च।
१९ स्वकार्य्यैः कोपिते तस्मिन् मरकस्तान् समाक्रमीत्॥
३० पीनिहसेन तूत्थाय दण्डिते व्यरमदिपत्॥
३१ तत् तस्मै गणितं पुण्यम् अनन्तं सर्व्वपौरुषं॥
३२ मिरीवानामतोयेषु पुनस्तैः कोपिते प्रभौ।
तेषामेव कृतेऽनिष्टं मूससं प्रत्यवर्त्तत॥
३३ यस्मात् स तै र्विरक्तात्मा स्वोष्ठाभ्यां सहसालपत्॥
३४ निर्द्दिष्टान् परमेशेन मानवान् न विनाश्य ते।
३५ मिश्रिता भिन्नजातीयैः क्रियास्तेषां शिशिक्षिरे॥
३६ विग्रहांश्चार्च्चयंस्तेषां स्वकीयोन्मायबन्धनाम्॥
३७ ते स्वपुत्त्रान् स्वपुत्त्रीश्च देवेभ्यो बलिवद्ददुः॥
३८ इत्थं निरपराधानां तैरपात्यत शोणितं।
शोणितं पुत्रपुत्रीणां किनानीयसुरान् प्रति।
बलिवत् तैः प्रदत्तानां देशश्चादूष्यतासृजा॥
३९ दुष्कृतैस्तेषु लिप्तेषु भ्रष्टेषु च स्वकर्म्मभिः।
४० प्राज्वलत् परमेशस्य कोपाग्निः स्वप्रजाः प्रति।
स्वकीयविषये तस्य गर्हणाचोदपद्यत॥
४१ तस्मात् ते भिन्नजातीनां हस्ते तेन समर्पिताः।
तेषामरातयस्तेषाम् आधिपत्यमकुर्व्वत॥
४२ पीडिता द्वेषिभिस्तेषां पाणिभारेण चानताः।
४३ ते लोकाः परमेशेन बहुकृत्वो ररक्षिरे।
पश्चात् तं क्रोधयामासु र्निजमन्त्रणया स्वयं।
इत्थं स्वीयापराधेन दुर्द्दशां लेभिरे पुनः॥
४४ श्रुत्वा तेषां विलापन्तु स तान् क्लिष्टान् निरैक्षत॥
४५ स्वकीयं नियमञ्चापि तेषां क्षेमार्थमस्मरत्।

निजानुग्रहबाहुल्यात् स्वयं तांश्चान्वकम्पत ॥
यैस्ते वन्दीकृतास्तेषां कृपापात्रं चकार तान् ॥ ४६
प्रभो परेश्वरास्माकं त्वं मस्त्राणं विधेहि हि। ४७
अन्यजातीयलोकानां मध्यान्नः सङ्गृहाण च।
तदानीं स्तोष्यतेऽस्माभिः पवित्रं तव नाम च।
स्तवानां तावकीनानां श्लाघा च प्रकरिष्यते ॥
अनादिकालतोऽनन्तं कालं यावदनुक्रमं। ४८
धन्यो भूयात् परेशः स इस्रायेलीय ईश्वरः।
प्रजाः सर्व्वा वदन्त्वामेन् यूयं स्तुत परेश्वरं ॥

---

## १०७ सप्तशततमं गीतं।

१ भ्रमिणः १० वन्दिनः १७ दुःखिनः २३ पोतीयान् ३३ तदन्यजनांश्च प्रतीश्वरानुग्रहस्य वर्णनं।

प्रशंसा परमेशस्य युष्माभिः सम्प्रकीर्त्यतां। १
यतो हेतोः स सद्भावः कृपा तस्य च शाश्वती ॥
इत्थं ब्रूयुः परेशेन मोचिताः सर्व्वमानवाः। २
द्वेषिणामेव हस्तेभ्यस्तेन ये प्रतिमोचिताः।
सङ्गृहीताश्च देशेभ्यः प्राक्प्रत्यगुत्तरार्णवात् ॥ ३
अभ्राम्यंस्ते मरुस्थाने प्रान्तरे मार्गवर्जिते। ४
नगरं किञ्चन प्राप्तुं नरसेवितमक्षमाः।
ते क्षुधार्त्तास्तृषार्त्ताश्चाभवन् मूर्च्छितचेतसः ॥ ५
तस्मिन्नेव विपत्काले ते परेश्वरमाह्वयन्। ६
तेषां क्लेशेभ्य उद्धारं तदा तेन विधाय हि।
ऋजुमार्गेण नीतास्ते प्राप्तुं लोकालयं पुरं। ७
परमेश्वरमुद्दिश्य ते प्रशंसन्तु तत्कृपां। ८
समक्षं नरवंशानां तत्कर्म्माण्यद्भुतानि च ॥
यतः स तर्पयामास प्राणान् तृष्णावसीदतः। ९
असून् क्षुत्पीडितान् द्रव्यैस्तोषयामास चोत्तमैः ॥
अन्धकारमृतिच्छाये आश्रिताः केऽपि मानवाः। १०
निबद्धा दुःखलोहाभ्यां समवर्त्तन्त वन्दिवत् ॥

११ यस्माद् ऐश्वरवाक्यानां ते बभूवु र्विरोधिनः।
तथा सर्व्वोपरिस्थस्य मन्त्रणामवमेनिरे।
१२ तस्मात् स नमयामास क्लेशैस्तेषां मनांसि हि।
तदा ते स्खलनं प्रापुः कोऽपि नोपचकार तान्॥
१३ तस्मिन्नेव विपत्काले ते परेश्वरमाह्वयन्।
तेषां क्लेशेभ्य उद्धारं तदा तेन विधाय हि।
१४ मृत्युच्छायान्धकाराभ्यां ते मनुष्या वहिष्कृताः।
अपच्छिन्नानि तेषाञ्च सर्व्वाणि बन्धनान्यपि॥
१५ परमेश्वरमुद्दिश्य ते प्रशंसन्तु तत्कृपां।
समक्षं नरवंशानां तत्कर्म्माण्यद्भुतानि च॥
१६ यस्मात् ताम्रकपाटानि तेनैव प्रबभञ्जिरे।
तद्वद् बिभिदिरे तेन लौहिकान्यर्गलान्यपि॥
१७ स्वपापाचरणेनाज्ञा ये क्लिश्यन्ते स्वपातकैः।
१८ गर्हन्ते सर्व्वभक्ष्यं ते मृत्युद्वारं स्पृशन्ति च॥
१९ तस्मिन्नेव विपत्काले परेशस्याह्वयन्ति ते।
तेषां क्लेशेभ्य उद्धारं तदानीं विदधाति सः॥
२० स्ववचः प्रेष्य तान् स्वस्थान् कृत्वा नाशाच्च रक्षति॥
२१ परमेश्वरमुद्दिश्य ते प्रशंसन्तु तत्कृपां।
समक्षं नरवंशानां तत्कर्म्माण्यद्भुतानि च॥
२२ प्रशंसार्थबलीन् दत्त्वा चानुतिष्ठन्तु याजनं।
उल्लासेन च कुर्व्वन्तु क्रियाणां तस्य वर्णनां॥
२३ पोतै र्ये सागरं यान्ति जलधौ कर्म्मकारिणः।
२४ परमेशस्य कर्म्माणि वीक्षितुं प्राप्नुवन्ति ते।
तस्याश्चर्य्यक्रिया एव सुगम्भीरे महोदधौ॥
२५ तद्वाक्याद् वात्ययोत्पन्न प्रोत्थितेषु जलोर्म्मिषु।
२६ नभ आरोहतां तेषाम् अगाधे चावरोहतां।
प्राणा एव विलीयन्ते मग्ना आपत्सरित्पतौ॥
२७ नृत्यन्तस्ते चलन्तश्च मत्तवत् हतबुद्धयः।
२८ तस्मिन्नेव विपत्काल आह्वयन्ति परेश्वरं।
तेषां क्लेशेभ्य उद्धारं तदानीं विदधाति सः॥
२९ वायौ प्रशमिते तेन तरङ्गा विरमन्ति च॥

ते तु कुर्व्वन्ति विश्रामात् गीयन्ते चेष्टमाश्रयं ॥ १०
परमेश्वरमुद्दिश्य ते प्रशंसन्तु तत्कृपां । ३१
समक्षं नरवंशानां तत्कर्म्माण्यद्भुतानि च ॥
प्रजानाञ्च समाजेऽपि तत्स्तवं वर्णयन्तु ते । ३२
अध्यक्षाणां सभायाञ्च तस्य कुर्व्वन्तु वन्दनां ॥
स नदीः प्रान्तरं कुर्य्यात् निर्झरांश्च मरुस्थलं । ३३
उर्व्वरां भूमिमूषञ्च दौर्जन्यात् तन्निवासिनां ॥ ३४
प्रान्तरञ्च सरः कुर्य्यात् मरुभूमिञ्च निर्झरान् ॥ ३५
वासितास्तेन दीनाश्च तत्र निर्म्मिमते पुरीं ॥ ३६
उप्त्वा क्षेत्रेषु वीजानि द्राक्षावल्लीः प्ररोप्य च । ३७
भूमिजातानि भूरीणि फलान्युत्पादयन्ति ते ॥
आशीर्व्वादे कृते तेन वर्द्धन्तेऽतीव ते नराः । ३८
तेषां गवादियूथानि नहि न्यूनीकरोति सः ॥
पुन र्द्दौःखविपच्छोकैरल्पीभूय क्लसन्ति ते ॥ ३९
प्रकरोत्यधिपानां स चाभिषेकमवज्ञया । ४०
मार्गहीने मरुस्थाने भ्रान्तांस्तान् विदधाति च ॥
दीनञ्चोन्नयति क्लेशात् मेषवद् बर्द्धितान्वयं ॥ ४१
तद् दृष्ट्वा सरलात्मानो लोका हर्षं प्रकुर्व्वते । ४२
अधर्म्मो निखिलः स्वीयं मुखं रुद्धं करोति च ॥
यः कश्चिज्ज्ञानवांस्तेन सर्व्वमेतद् विचार्य्यतां । ४३
ज्ञात्वा तर्हि परेशस्य करुणा तेन भोत्स्यते ॥

---

## १०८ अष्टशततमं गीतं ।

परमेश्वरस्य प्रशंसा तस्मिन् प्रत्याशा च ।

दायूदा कृतं गानार्थकं धर्म्मगीतं ।

मच्चित्तं स्थिरमस्तीश मया गानं करिष्यते । १
मया कारिष्यते वाद्यं मनसापि प्रियेश मे ॥
नेवलयन्त्र प्रबुध्यस्व हे वीणे त्वञ्च जागृहि । २
अहं प्रजागरिष्यामि ह्यरुणोदयतः पुरा ॥
परेश लोकमध्येऽहं कीर्त्तयिष्यामि ते स्तवं । ३

प्रशंसिष्यामि ते नाम जातीनामेव मध्यतः॥
४ यतः स्वर्गोपरिष्टाद्धि विस्तीर्णास्ति कृपा तव।
त्वदीया सत्यता तद्वत् स्पृशति व्योममण्डलं॥
५ स्वर्गे प्रकाशतामीश तावकीना समुन्नतिः।
मेदिन्या अपि सर्व्वत्र कीर्त्त्यतां महिमा तव॥
६ यथा तव प्रिया लोका परित्राणमाप्नुयुः।
तदर्थं त्वं स्वहस्तेन त्रात्वा देहि न उत्तरं॥
७ स्वपवित्रतयावादीत् ईशस्तेनोल्लसाम्यहं।
शिखिमं तु विभक्ष्यामि मास्ये सुक्कोतप्रान्तरं॥
८ मदीयो गिलियादोऽस्ति मिनशिश्च मदीयकः।
इफ्रयिमः शिरस्त्रं मे यिहूदा विधिदायकः॥
९ मोयाबो जलपात्रं मे क्षालनस्योपकारकं।
इदोमस्योपरि स्वीयां पादुकां प्रक्षिपाम्यहं।
पिलेष्टीयाख्यदेशे च प्रकरोमि जयध्वनिं॥
१० सुदृढं नगरं नीत्वा को मां तत् प्रापयिष्यति।
क इदोमपुरं यावन्मार्गं मां दर्शयिष्यति॥
११ ईशास्मान् त्यक्तवान् यस्त्वं त्वं किं तन्न करिष्यसि।
ईश त्वं वाहिनीनां नो मध्ये किं न गमिष्यसि॥
१२ अस्मान् क्लेशात उद्धर्त्तुम् उपकारं विधेहि नः।
उपकारो मनुष्येण कृतो निष्फल एव हि॥
१३ ईश्वरेणैव वीरत्वम् वयमाचरितुं क्षमाः।
स एवास्मद्विपक्षांश्च चरणाभ्यां विमर्द्दिता॥

---

## १०९ नवशततमं गीतं।

दुष्टारीणां विरुद्धं दायूदः प्रार्थना २१ परमेश्वराश्रयश्च।

वाद्यनियन्त्रे दातव्यं दायूदो धर्म्मगीतं।

१ हे मत्प्रशंसनीयेश मा सन्तिष्ठस्व नीरवः॥
२ पापमुखश्च धूर्त्तश्च मुखं आदाय मां प्रति।
लोका निःसत्यजिह्वाभिः संलपन्ति मया सह॥

रुन्धन्ति द्वेषवाक्यैर्मां युध्यन्ते च मया वृथा । ३
मत्प्रेमार्थं हि ते सर्व्वे द्विषन्ति प्रार्थनाश्रितं ॥ ४
उपकारस्य शोधार्थं मेऽपकारञ्च कुर्व्वते । ५
मम प्रेम्णश्च शोधार्थम् आचरन्ति विरोधितां ॥
ईदृशस्योपरि त्वञ्च दुरात्मानं नियोजय । ६
दक्षिणे तस्य पार्श्वे च शैतान् तिष्ठतां स्वयं ॥
विचारे स भवेद् दोषी प्रार्थना तस्य पापवत् ॥ ७
तस्य घस्रा भवन्त्वल्पा अन्यश्चाप्नोतु तत्पदं ॥ ८
अनाथाः सन्तु तद्बालास्तत्पत्नी विधवा भवेत् ॥ ९
पर्य्यटन्तः सदा भिक्षां याचन्तां तस्य पुत्रकाः । १०
स्वोच्छिन्नवसतिस्थाने भक्ष्यमन्वेषयन्तु च ॥
क्रियतामुत्तमर्णेन तत्सर्व्वस्वमशेषतः । ११
श्रमजातं फलं तस्य लुण्टयन्तु परा जनाः ॥
अनुकम्पा न केनापि क्रियतां तं नरं प्रति । १२
तदीयानाथपुत्रेषु सदयः कोऽपि मा भवत् ॥
फलं पारत्रिकं तस्य भवेदुच्छिन्नतार्थकं । १३
द्वितीये पुरुषे तेषां नाम लोपं प्रगच्छतु ॥
स्मर्य्यतां परमेशेन तस्य पैतृकपातकं । १४
तस्य मातृकपापञ्च लुप्ततां नहि गच्छतु ॥
परमेशस्य साक्षात् तत् सर्व्वदोपस्थितं भवेत् । १५
भवेदुत्पाटितं तेषां स्मरणं धरणीतलात् ॥
यतो हेतोः कृपां कर्त्तुं न संस्मृत्यानुधावितः ॥ १६
तेन दीनो दरिद्रश्च क्षुण्णात्मा च वधैषिणा ॥
समप्रीयत शापे स आक्रमीच्च स एव तं । १७
आशी र्न रुरुचे तस्मै तस्माद्दूरं गता च सा ॥
योऽभिशापः सदा तेन पर्य्यधीयत वस्त्रवत् । १८
तस्यान्तश्चाम्बुवद् व्याप्नोत् तस्यास्थीनि च तैलवत् ।
परिधेयं यथा तस्य वसनं स तथा भवेत् । १९
यथा वा पट्टकं नित्यं कट्यां बद्धं तथा भवेत् ॥
ये मां द्विषन्ति मत्प्राणान् हन्तुं दुष्टं वदन्ति च । २०
इदमेव फलं सर्व्वे ते प्राप्स्यन्ति परेश्वरात् ॥

११ प्रभो परेश मह्यं त्वं स्वनाम्नः कृत आचर।
उत्तमं तव कारुण्यम् अतस्त्वं मां समुद्धर॥
१२ दीनोऽहं दुर्गतश्चास्मि हृच्च विद्धं ममान्तरे॥
१३ दीर्घच्छायावदत्येमि प्रचाल्ये च पतङ्गवत्॥
१४ मज्जानुन्युपवासेन स्खलनाय समुद्यते।
तैलाभावेन मे मांसं म्लानत्वञ्च प्रगच्छति॥
१५ मनुष्याणां समीपे च निन्दनीयो भवाम्यहं।
सर्व्वे निरीक्षमाणा मां चालयन्ति शिरांसि हि॥
१६ मत्प्रभो परमेश त्वम् उपकारं कुरुष्व मे।
स्वकारुण्यानुसारेण मम त्राणं विधेहि च॥
१७ तेऽत्र जानन्तु हस्तं ते त्वत्क्रियाञ्च परेश्वर॥
१८ ते यदा दीयते शापस्तदाशीर्द्दीयतां त्वया।
यदोत्तिष्ठन्ति ते लोकास्तदा लज्जां प्रयान्तु ते।
किन्तु त्वदीयदासोऽयं हर्षमेवाधिगच्छतु॥
१९ वस्त्रेणेवापमानेन वेष्ट्यन्तां द्वेषिणो मम।
स्वीयप्रावारकेणेव प्रच्छाद्यन्तामवज्ञया॥
२० परमेशं स्ववक्त्रेण संस्तोष्यामितरामहं।
लोकारण्यस्य मध्येऽपि करिष्ये तत्प्रशंसनं॥
२१ यतो हेतोः स दीनस्य दक्षिणे समवस्थितः।
प्राणदण्डविधातृभ्यस्तं समुद्धरति स्वयं॥

---

# ११० दशशततमं गीतं।

ख्रीष्टस्य राज्यशासकत्वजयेषु भविष्यद्वाक्यं।

दायूदो धर्म्मगीतं।

१ मम प्रभुमिदं वाक्यं बभाषे परमेश्वरः।
त्वच्छत्रून् पादपीठं ते यावन्नहि करोम्यहं।
अवतिष्ठस्व तावत् त्वम् आसीनो मम दक्षिणे॥
२ परेशो बलदण्डं ते सीयोनात् प्रेषयिष्यति।
राजत्वं निजशत्रूणां मध्ये त्वञ्च करिष्यसि॥
३ त्वज्जयस्य दिने तुभ्यं स्वयन्दत्तास्तव प्रजाः।

भास्यन्ति पूतया कान्त्यारुणजाच्छिशिरादपि।
स कुमारसमूहस्य शिशिरस्ते भविष्यति॥
परमेश इदं शेपे न च तेनानुतप्स्यते। ४
त्वं मल्कीषेदको रीत्या याजकः सार्व्वकालिकः॥
त्वदीयदक्षिणे पार्श्वे यः प्रभुः पर्य्युपस्थितः। ५
स्वीयक्रोधदिने भूपांश्चूर्णयिष्यति स ध्रुवं॥
अन्यजातीयलोकानां विचारं स विधास्यति। ६
भूतलञ्च स्वशत्रूणां कुणपैः परिपूरयन्।
रणक्षेत्रे सुविस्तीर्णे चूर्णयिष्यति मस्तकान्॥
स च मार्गे तरङ्गिण्याः सलिलानि प्रपास्यति। ७
ततो हेतो निजं तेन शिर उन्नमयिष्यते॥

---

## १११ एकादशशततमं गीतं।

इब्रिभाषया ककारादिगीतेन परमेश्वरानुग्रहप्रशंसनं।

प्रशंसा परमेशस्य युष्माभिः सम्यकीर्त्त्यतां॥ १
सर्व्वान्तःकरणेनाहं त्वां स्तोष्यामि परेश्वर।
सरलानां समज्यायां मनुष्याणाञ्च संसदि॥
परमेशस्य कर्म्माणि सुमहान्ति भवन्ति हि। २
यावन्तस्तेषु तुष्यन्ति तैस्तान्यालोचितानि च॥
मान्यं श्लाघ्यञ्च तत्कार्य्यं धर्म्मस्तस्य सदा स्थिरः॥ ३
निजाद्भुतक्रियास्तेन स्मरणार्थमनुष्ठिताः। ४
दयाशीलोऽनुकम्पी च विद्यते परमेश्वरः॥
स्वभक्तेभ्योऽन्नदाता स सदा स्वनियमं स्मरन्॥ ५
स्वप्रजा निजकार्य्याणां विक्रमं स न्यदर्शयत्। ६
भिन्नजातीयलोकानां देशं तासु समार्पयत्॥
सर्व्वं तत्करयोः कर्म्म फलं सत्यविचारयोः। ७
शासनं सकलं तस्य दृढविश्वासमर्हति॥
सर्व्वकालञ्च यावत् तत् सदा तिष्ठति निश्चलं। ८
सत्यत्वसरलत्वाभ्यां तत् सर्व्वं तेन साध्यते॥
प्राहिणोच्च परित्राणं स स्वकीयप्रजाः प्रति। ९

स ह्योयं नियमश्चापि सर्व्वकालार्थमादिशत्।
नामधेयञ्च यत् तस्य पवित्रं भीषणञ्च तत्॥
१० परमेशात्तु या भीतिः सा प्रज्ञाया उपक्रमः।
तदाज्ञापालकानाञ्च सर्व्वेषां बुद्धिरुत्तमा।
प्रशंसा परमेशस्य सर्व्वदा तिष्ठति स्थिरा॥

---

## ११२ द्वादशशततमं गीतं।

इब्रिभाषया ककारादिगीतेन भद्रलोकस्य प्रशंसनं।

१ प्रशंसा परमेशस्य युष्माभिः सम्यक्कीर्त्त्यतां।
धन्यं वच्मि मनुष्यं तं यो बिभेति परेश्वरात्।
तस्य सर्व्वनिदेशेन यश्चातीव प्रतुष्यति॥
२ पृथिव्यां तस्य वंशो हि पराक्रान्तो भविष्यति।
शुद्धाचारस्य लोकस्य कुलमाशिषमाप्स्यति॥
३ श्री र्धनञ्चास्ति तद्गेहे धर्म्मस्तस्य सदा स्थिरः॥
४ उदेति ध्वान्ततो दीप्तिः शुद्धाचारनरं प्रति।
दयाशीलोऽनुकम्पी च धार्म्मिकश्च स विद्यते॥
५ सुजनः स दयां कुर्व्वन् ऋणदानं करोति हि।
सुविचारात् स्वकार्य्याणां सिद्धत्वञ्चाधिगच्छति॥
६ निश्चलः सर्व्वकाले स स्मर्त्तव्यो धार्म्मिकः सदा॥
७ अनिष्टस्यापि वार्त्तायां स निःशङ्को ऽवतिष्ठते।
तस्यान्तःकरणं धीरं परमेश्वरमाश्रितं॥
८ स्थिरचित्तो ऽभयो ऽरीणां दर्शनं स प्रतीक्षते॥
९ स विकीर्य्य निजं वित्तं दरिद्रेभ्यो ददाति हि॥
धर्म्मस्तस्य सदा स्थायी तस्य श्रीः शोभयोन्नता॥
१० तद्दृष्ट्वा दुर्ज्जनः क्रुद्धो दन्तैः श्वेडन् विलीयते।
दुराचारमनुष्याणां मनोऽभीष्टं विनंक्ष्यति॥

---

## ११३ त्रयोदशशततमं गीतं।

अनुग्रहार्थमीश्वरस्य प्रशंसनं।

प्रशंसा परमेशस्य युष्माभिः सम्प्रकीर्त्त्यतां। १
हे परेश्वरदासेया युष्माभिः स प्रशस्यतां।
परमेशस्य यन्नाम युष्माभिस्तत् प्रशस्यतां॥
अद्यारभ्य सदा धन्यं भूयान्नाम परेशितुः॥ २
उदयाचलमारभ्य यावदस्ताचलं रवेः। ३
नामधेयं परेशस्य प्रशंसायोग्यमस्ति हि॥
उन्नतः परमेशो ऽस्ति सर्व्वजातिगणोपरि। ४
अन्तरीक्षोपरिष्टाच्च महिमा तस्य राजते॥
को ऽस्मत्प्रभोः परेशस्य तुल्यः स ऊर्द्धवासकृत्॥ ५
स्वर्गे मर्त्त्ये च सर्व्वाणि स निरीक्षत आनतः॥ ६
स धूले र्दीनमुत्थाप्य मलादुन्नम्य दुर्गतं। ७
आसयत्यधिपैः सार्द्धं स्वदेशीयाधिपैः सह॥ ८
बन्ध्या या गृहिणी तां स समावासयति ध्रुवं। ९
नन्दनानाञ्च सानन्दां जननीं विदधाति तां॥
प्रशंसा परमेशस्य युष्माभिः सम्प्रकीर्त्त्यतां॥

---

## ११४ चतुर्द्दशशततमं गीतं।

परमेश्वरात् स्थलजलयो भैयं।

वहि र्याति यदेस्रायेल् मिसर्देशस्य मध्यतः। १
परभाषीयजातेश्च मध्याद् याकूब आवलिः।
यिहूदाः परमेशस्य धर्म्मधामाभवत् तदा। २
इस्रायेलीयवंशस्य तस्य राष्ट्रमजायत॥
तद् दृष्ट्वा व्यद्रवद् वार्धि र्यर्द्दन् पश्चान्न्यवर्त्तत। ३
अनृत्यन्नविवच्छैला गिरयो मेषवत्सवत्॥ ४
कुतस्त्वं व्यद्रवो वार्धे त्वञ्च यर्द्दन् न्यवर्त्तथाः। ५
अनर्त्तिष्टाविवच्छैला गिरयो मेषवत्सवत्॥ ६

७ हे भूः त्वम्भ्य प्रभोः साक्षात् याकूवीयेश्वितुः पुरः ॥
८ करोत्यद्रिं तडागं स वह्निम्मानञ्च निर्भरं ॥

---

## ११५ पञ्चदशशततमं गीतं।

१ प्रतिमानामसारता ९ ईश्वरस्य सारतायाश्च वर्णनं।

१ हे परेश्वर नास्माकं नास्माकं गौरवं कुरु।
किन्तु त्वदीयनाम्नो हि गौरवं सम्प्रकाशय।
तावकीनक्षपायाश्च सत्यतायाश्च हेतुतः ॥
२ अमीषामीश्वरः क्वेति ब्रूयु र्देवार्चकाः कुतः ॥
३ स्वर्गे त्वस्तीश्वरोऽस्माकं यच्च वाञ्छेत् करोति तत् ॥
४ रौप्यस्वर्णसुरास्तेषां मर्त्त्यहस्तै र्विनिर्म्मिताः ॥
५ सवक्त्रास्ते न भाषन्ते न पश्यन्ति सलोचनाः ॥
६ सकर्णाश्च न शृण्वन्ति न जिघ्रन्ति सनासिकाः ॥
७ न स्पृशन्ति सहस्तास्ते सपादा न चरन्ति च।
कश्चन स्वीयकण्ठैश्च शब्दं नोदीरयन्ति ते ॥
८ तत्समाः कारवस्तेषां सर्व्वे तांश्चाश्रिता जनाः ॥
९ इस्रायेलीयवंश त्वं श्रद्धत्स्व परमेश्वरं।
स्वश्रद्दधानलोकानां सहायः फलकश्च सः ॥
१० हे हारोणान्वया यूयं श्रद्धद्ध्वं परमेश्वरं।
स्वश्रद्दधानलोकानां सहायः फलकश्च सः ॥
११ हे परेशार्चका यूयं श्रद्धद्ध्वं परमेश्वरं।
स्वश्रद्दधानलोकानां सहायः फलकश्च सः ॥
१२ परमेशः स्मरत्यस्मान् आशिषं स प्रदास्यति।
इस्रायेलीयवंशेभ्य आशिषं स प्रदास्यति।
हारोणस्यान्ववायेभ्य आशिषं स प्रदास्यति ॥
१३ परमेशार्चकेभ्यः स आशिषञ्च प्रदास्यति।
क्षुद्रेभ्यश्च महद्भ्यश्च सकलेभ्यः प्रदास्यति ॥
१४ परेशो बर्द्धयेद्युष्मान् युष्मान् युष्मत्सुतानपि ॥
१५ धन्या यूयं परेशेन निर्म्माता स्वर्गमर्त्त्ययोः ॥
१६ स्वर्गः परेशितुः स्वर्गो मर्त्त्यः सोऽदान्नृजातये ॥

न स्तुवन्ति प्रभुं प्रेता न मौनालयगामिनः॥ १७
वयमेव नविष्यामस्त्वद्यारभ्य सदा प्रभुं॥ १८
प्रशंसा परमेशस्य युष्माभिः संप्रकीर्त्त्यतां॥

# ११६ षोडशशततमं गीतं।

अनुग्रहादीश्वरस्य प्रशंसनं।

प्रीये परेश्वरे यत् स उक्तियाच्ञे शृणोति मे॥ १
मयि कर्णौ निधत्ते स संक्राम्ये तं सदा ततः॥ २
वेष्टितो रज्जुभि र्म्मृत्योराक्रान्तो नारकार्त्तिभिः। ३
कदाचिद् विषमं क्लेशम् उद्वेगञ्चाहमाप्नवं॥
तदानीं परमेशस्य नाम्नेत्थं प्रार्थितं मया। ४
हे परेश दयां कृत्वा मम प्राणान् समुद्धर॥
परेशः सदयो धर्म्मी सानुकम्पो न ईश्वरः॥ ५
परेशोऽल्पधियां रक्षी दीनं मां स उपाकरोत्। ६
हे मदीयमनो याहि स्वविश्रामस्थलं पुनः। ७
यतो हेतोः परेशेन हितमाचरितं तव॥
उद्धारः साधितस्तेन प्राणानां मम मृत्युतः। ८
अश्रुतो नेत्रयुग्मस्य स्खलनात् पादयोश्च मे॥
चरिष्यामि परेशस्य पुरोऽहं जीवतां भुवि॥ ९
अभवन्मम विश्वासस्ततो वाक्यमुदैरयं। १०
किन्त्वतीव महादुःखम् तदा मां समुपागमत्॥
सर्व्वमर्त्त्यो मृषाभाषीत्युदितं क्षोभतो मया॥ ११
किं फलं परमेशाय प्रतिदायिष्यते मया। १२
योग्यं सर्व्वोपकाराणां कृतानां तेन मां प्रति॥
त्राणकंसं गृहीत्वैव तन्नामाकाह्वास्यते मया॥ १३
परमेश्वरमुद्दिश्य मया यद्यत् प्रतिश्रुतं। १४
तत् सर्व्वं पूरयिष्यामि तत्प्रजागणसम्मुखे॥
गुर्व्वी परेशितु र्दृष्टौ स्वीयपुण्यवतां मृतिः॥ १५
परेश तव दासोऽहं दास एव तवास्म्यहं। १६
तव दास्या हि पुत्रोऽहं मत्पाशा मोचितास्त्वया॥

१७ त्वामेवाहं प्रयस्यामि प्रशंसाबलिना ततः।
परमेशस्य नाम्ना च करिष्ये प्रार्थनामहं॥
१८ परमेश्वरमुद्दिश्य मया यद्यत् प्रतिश्रुतं।
तत् सर्व्वं पूरयिष्यामि तत्प्रजागणसम्मुखे॥
१९ परमेशीयगेहस्याङ्गनानामेव मध्यतः।
हे यिरूशालमाख्याते पुरि मध्यस्थले तव॥
प्रशंसा परमेशस्य युष्माभिः सम्प्रकीर्त्त्यतां॥

## ११७ सप्तदशशततमं गीतं।

परमेश्वरस्य प्रशंसा।

१ हे लोकाः सर्व्वजातीयाः परमेशं प्रशंसत।
हे नराः सर्व्वदेशस्था यूयं तं समभिष्टुत॥
२ यस्मात् सुमहती तस्य दयास्मासु प्रकाशते।
सत्यत्वञ्च परेशस्य नित्यस्थायि भविष्यति॥
प्रशंसा परमेशस्य युष्माभिः सम्प्रकीर्त्त्यतां॥

## ११८ अष्टादशशततमं गीतं।

१ ईश्वरस्य प्रशंसा ५ विपदो रक्षणार्थं ईश्वरगुणकीर्त्तनं २२ श्लोके भविष्यद्वाक्यञ्च।

१ प्रभुं स्तुत स सद्भावः करुणा तस्य शाश्वती॥
२ इस्रायेल् अधुना ब्रूयात् करुणा तस्य शाश्वती॥
३ हारोणस्यान्वया ब्रूयुः करुणा तस्य शाश्वती॥
४ परमेशार्चका ब्रूयुः करुणा तस्य शाश्वती॥
५ परमेश्वरमुद्दिश्य सङ्कटे प्रार्थितं मया।
परमेशश्च विस्तीर्णे स्थलेऽदान्मह्यमुत्तरं॥
६ मत्पक्षे परमेशोऽस्ति न करिष्यामि साध्वसं।
यस्मान्मां प्रति किं कर्त्तुं मानवः शक्तिमान् भवेत्॥
७ ममोपकारिणामेको मत्पक्षेऽस्ति परेश्वरः।
तस्मान्मद्वेषिणां दृष्ट्या लोचनं मम तर्प्स्यति॥
८ वरं परेश्वरे श्रद्धा न च श्रद्धा मनुष्यके॥

वरं परेश्वरे श्रद्धा न च श्रद्धा नृपेष्वपि ॥ ९
सर्व्वजातीयलोका मां संवेष्टन्ते समन्ततः। १०
परमेशस्य नाम्नाहं तान् उच्छेत्स्यामि निश्चितं ॥
ते हि संवेष्टमाना मां निरुन्धन्ति समन्ततः। ११
परमेशस्य नाम्नाहं तान् उच्छेत्स्यामि निश्चितं ॥
ते लोका मां चतुर्द्दिक्षु संवेष्टन्ते ऽलिवृन्दवत्। १२
किन्तु यास्यन्ति निर्व्वाणं दग्धकण्टकवह्निवत्।
परमेशस्य नाम्नाहं तान् उच्छेत्स्यामि निश्चितं ॥
हे प्रभो मन्निपातार्थं त्वं बलान्मामताडयः। १३
उपकारं मदीयन्तु कृतवान् परमेश्वरः ॥
परेशो मे बलं गीतं परित्राता च मे ऽभवत् ॥ १४
उत्सवो जयनादश्च धार्म्मिकाणामस्ति वेश्मसु। १५
दक्षिणः परमेशस्य हस्तो विक्रमसाधकः ॥
दक्षिणः परमेशस्य हस्त उन्नतिकारकः। १६
दक्षिणः परमेशस्य हस्तो विक्रमसाधकः ॥
न मरिष्याम्यहं तस्मात् किन्तु स्थास्यामि जीवितः। १७
वर्णनाञ्च करिष्यामि कर्म्मणां परमेशितुः ॥
चण्डादेव परेशो मां न तु मृत्यौ समार्पयत् ॥ १८
धर्म्मद्वाराणि युष्माभि र्मोच्यन्तां मम सम्मुखे। १९
ततस्तानि प्रविश्याहं संस्तोष्यामि परेश्वरं ॥
इदं द्वारं परेशस्य प्रविशन्त्यत्र धार्म्मिकाः ॥ २०
त्वामेवाहं नविष्यामि यतोऽदा मह्यमुत्तरं। २१
मामकीनपरित्राता यतस्त्वञ्चाभवः स्वयं ॥
गृहनिर्म्मातृभि र्लोकै र्यः पाषाणो निराकृतः। २२
स एव गृहकोणस्थः प्रमुखः प्रस्तरो ऽभवत् ॥
परमेशस्य कर्म्मेदम् अस्मद्दृष्टौ तदद्भुतं ॥ २३
सृष्टं यत् परमेशेन दिनमेतद्धि तद्दिनं। २४
आगच्छत वयं तत्र नन्दाम प्रोल्लसाम च ॥
भोः परेश कुरु त्राणम् भोः परेश समेधय ॥ २५
परमेशस्य नाम्ना य आयाति धन्य एव सः। २६
धन्यान् युष्मान् वयं ब्रूमः परेशस्य गृहे स्थिताः ॥

१७ यिहोवाः सत्य ईश्वरोऽस्ति सोऽस्मभ्यं दत्तवान् द्युतिं।
वेद्याः शृङ्गेषु युष्माभि र्बध्यतां रज्जुभि र्बलिः॥
१८ मामकीनेश्वरोऽसि त्वं करिष्यामि तव स्तवं।
मामकीनेश्वरोऽसि त्वं प्रगास्यामि तवोन्नतिं॥
१९ प्रभुं स्तुत स सद्भावः करुणा तस्य शाश्वती॥

---

# ११९ ऊनविंशतिशततमं गीतं।

इब्रिभाषया ककारादिगीतं तच शास्त्रस्य गुणवर्णनं बहुप्रार्थनाप्रशंसास्वपदेशाश्च।

א आलफ्।

१ धन्याः शुद्धायना लोकाः प्रभोः शास्त्रानुगामिनः॥
२ धन्यास्तस्य प्रबोधानां प्रतिपालनकारिणः।
सर्व्वान्तःकरणेनैव तस्यान्वेषणकारिणः॥
३ अधर्म्मं ते न कुर्व्वन्ति चरन्तस्तस्य वर्त्मसु॥
४ सयत्नं पालनार्थं त्वं स्वनियोगान् समादिशः॥
५ पदन्यासो मदीयोऽस्तु त्वद्विधीन् रक्षितुं स्थिरः॥
६ न प्राप्स्यामि तदा लज्जां सर्व्वाज्ञा लक्षयंस्तव॥
७ शिक्षित्वा धर्म्मनीतीस्ते स्तोष्ये त्वां शुद्धचित्ततः॥
८ त्वद्विधीन् पालयिष्यामि त्वं नितान्तं न मां त्यज॥

ב बेत्।

९ निजमार्गं युवा लोकः कथं शुचीकरिष्यति।
सावधानतया गच्छंस्तव वाक्यानुसारतः॥
१० सर्व्वान्तःकरणेनाहं करोम्यन्वेषणं तव।
त्वदीयाज्ञाः परित्यज्य चोतुं मां न प्रवर्त्तय॥
११ पापं त्वत्प्रातिकूल्येन न क्रियेत मया यथा।
रक्ष्यन्ते तव वाक्यानि निजान्तःकरणे तथा॥
१२ हे परेश्वर धन्यस्त्वं स्वविधीन् मां नु शिक्षय॥
१३ त्वदास्यस्याखिलां नीतिं स्वोष्ठाभ्यां वर्णयाम्यहं॥
१४ त्वत्प्रबोधपथे ह्लादे राशीभूते धने यथा॥
१५ त्वन्नियोगाननुध्यायन् निरीक्षेऽहं पथस्तव॥
१६ त्वद्विधीनभिनन्दामि त्वद्वाचो विस्मरामि न॥

ג गिमल्।

निजदासं समुद्दिश्य त्वं विधेहि वदान्यतां। १७
ततो ऽहं जीवनं प्राप्य पालयिष्यामि ते वचः॥
मामकीनाक्षियुग्मस्य त्वमेवोन्मीलनं कुरु। १८
तव शास्त्रादहं तर्हि प्राप्स्याम्यद्भुतदर्शनं॥
भूतलेऽहं प्रवास्यस्मि मत्तः स्वाज्ञा न गोपय॥ १९
मन्मनो ऽस्ति सदा चूर्णं त्वद्विचारस्य काङ्क्षया॥ २०
सम्भर्त्सयोऽद्धतान् शप्तान् त्वदाज्ञाभ्यश्च्युतान् नरान्॥ २१
तिरस्कारमवज्ञाञ्च दूरं मत्तोऽपसारय। २२
यतो हेतोः प्रबोधांस्ते पालयामितरामहं॥
मद्विरुद्धे समासीनाः सम्भाषन्ते न्टपा अपि। २३
तावकीनस्त्वयं दासो परिध्यायति ते विधीन्॥
त्वत्प्रबोधेष्वहं ह्लादे मन्त्रिणो मे भवन्ति ते॥ २४

ד दालत्।

मन्मनः सज्जते धूलौ मां स्ववाक्येन जीवय॥ २५
निजकृत्स्नगतिं तुभ्यं पुराहं विन्यवेदयं। २६
त्वञ्चादा उत्तरं मह्यं स्वविधीन् मां नु शिक्षय॥
तावकीननियोगानां पदवीं माञ्च बोधय। २७
त्वदीयाद्भुतकर्म्माणि ध्यायिष्यन्ते तदा मया॥
शोकाद् गलन्ति मत्प्राणाः स्ववाक्यान्मां समुच्छ्रय॥ २८
मत्तोऽपास्य म्टषाचारं मां स्वशास्त्रेण वर्द्धय॥ २९
सत्यमार्गो मयाग्राहि त्वन्नीति र्वीक्ष्यते मया॥ ३०
त्वत्प्रबोधेषु सक्तोऽहं प्रभो त्वं मां न लज्जय॥ ३१
त्वदाज्ञारूपमार्गेऽहं प्रकरिष्यामि धावनं। ३२
ममान्तःकरणं यस्मात् त्वया विस्तारयिष्यते॥

ה हे।

विधीनां तव पन्थानं मां परेश निदर्शय। ३३
ततोऽहं शेषपर्य्यन्तं करिष्ये तस्य पालनं॥
ज्ञानं देहि तदा शास्त्रं पालयिष्याम्यहं तव। ३४
तत् समुपाचरिष्यामि सर्व्वान्तःकरणेन च॥
नय स्वाज्ञापमार्गे मां तत्र तुष्याम्यहं यतः॥ ३५

३६ मन्मनस्त्वत्प्रबोधेषु न च लोभे प्रवर्त्तय ॥
३७ मायाया दर्शनात् त्वं मे परावर्त्तय लोचने।
तावकीनेषु मार्गेषु मह्यं देहि च जीवनं ॥
३८ प्रत्ययजानाः स्वभक्त्यै यत् तत् स्वदासे हि साधय ॥
३९ त्वं निवारय मे निन्दां साध्वसोत्पादिकां मम।
यस्माद् या राजनीतिस्ते मन्ये सा नीतिरुत्तमा ॥
४० आकाङ्क्षामि नियोगांस्ते मां स्वधर्म्मेण जीवय ॥
१ वौ।
४१ हे परेश प्रसादस्ते प्रचुरो वर्त्ततां मयि।
कृतं त्वया परित्राणं निजवाक्यानुसारतः ॥
४२ तेन मन्निन्दकायाहं शक्ष्यामि दातुमुत्तरं।
यतस्त्वदीयवाणीं हि शरणं गतवानहं ॥
४३ मन्मुखात् सत्यवाक्यं त्वं नितान्तं नहि गोपय।
यतोऽहं त्वद्विचाराणाम् अवतिष्ठे प्रतीक्षया ॥
४४ त्वच्छास्त्रं पालयिष्यामि सर्व्वकाले निरन्तरं।
४५ पृथुमार्गे च यास्यामि त्वन्नियोगान् गवेषयन् ॥
४६ त्वत्प्रबोधान् प्रभाषिष्ये नृपाणामपि सम्मुखे।
न भविष्यति मे तत्र व्रीडाबोधः कथञ्चन ॥
४७ हर्षिष्यामि त्वदाज्ञासु तास्तु सन्ति प्रियाः मम ॥
४८ त्वदाज्ञानां समीपेऽहं भविष्यामि कृताञ्जलिः।
तास्च मम प्रिया मंस्येऽनुध्यास्यामि विधींश्च ते।
१ सयिन्।
४९ स्वदासार्थं स्मरोक्तिं तां यया त्वं मां व्यश्वसः ॥
५० जीव्येऽहं तव वाचा यत् तत् दुःखे मम सान्त्वनं ॥
५१ दर्पिभिः सूपहस्येऽहं न च त्वच्छास्त्रतश्च्यवे ॥
५२ प्रभो त्वत्प्राक्तनां नीतिं स्मरन् प्राप्नोमि सान्त्वनां ॥
५३ त्वच्छास्त्रत्यागिदुष्टेषु रोमाञ्चो जायते मम ॥
५४ प्रवासधाम्नि गीतानि मेऽभवन् विधयस्तव ॥
५५ हे परेश्वर यामिन्यां तव नाम स्मरामि हि।
तावकीनस्य शास्त्रस्य पालनञ्च करोम्यहं ॥
५६ यद् रक्षामि नियोगांस्ते तदेवास्ति धनं मम॥

ח हेत्।

दायो मे परमेशो ऽस्ति मनस्तद्वाक्यपालनं ॥ ५७
स्वीयवाक्यानुसारेण त्वं दयां कुरु मां प्रति।
सर्व्वान्तःकरणेनाहं त्वां प्रसाद्येदमर्थये ॥ ५८
स्वगतिं चिन्तयन् पादौ त्वत्प्रबोधाम् नयाम्यहं ॥ ५९
त्वदाज्ञापालनायाहम् अविलम्ब्य त्वरेतरां ॥ ६०
दुष्टानां वेष्टितः सूत्रै र्न शास्त्रं विस्मरामि ते ॥ ६१
उत्तिष्ठाम्यर्द्धरात्रे त्वां स्तोतुं त्वद्धर्म्मनीतितः ॥ ६२
त्वद्भक्तानामहं मित्रं तथा त्वद्विधिपालिनां ॥ ६३
पूर्णा त्वत्कृपया पृथ्वी प्रभो मां शाधि ते विधीन् ॥ ६४

ט टेट्।

स्वदासस्य हिताचारी त्वं परेश स्ववाक्यतः ॥ ६५
उत्तमं सुविचारं मां ज्ञानञ्च त्वं हि शिक्षय। ६६
यतो हेतोस्तवाज्ञासु विश्वासः क्रियते मया ॥
दुःखतः पूर्व्वमभ्राम्यम् अधुना त्वद्वचो भजे ॥ ६७
त्वं हितो हितकारी च स्वविधीन् मां नु शिक्षय ॥ ६८
मद्विरुद्धं मृषावाक्यं कल्पयन्त्यभिमानिनः। ६९
सर्व्वान्तःकरणेनाहं नियोगान् पालयामि ते ॥
हृत् तेषां मेदसा स्थूलं तव शास्त्रे त्वहं रमे ॥ ७०
दुःखभोगः शुभं मे ऽभूत् विधींस्ते ऽशिक्षयत् स मां ॥ ७१
त्वन्मुखान्निर्गतं शास्त्रं सुशुभं मन्यते मया। ७२
स्वर्णरूप्यीयमुद्राणां सहस्रेभ्यो ऽपि तच्छुभं ॥

י यूद्।

त्वत्कराभ्यामहं सृष्टस्ताभ्याञ्चाहं स्थिरीकृतः। ७३
यथा शिक्षे त्वदीयाज्ञा बोधय त्वं तथैव मां ॥
त्वद्भक्ता मानवाः सर्व्वे हर्षिष्यन्ति विलोक्य मां। ७४
यतो हेतोस्त्वदीयोक्तेः प्रतीक्षा क्रियते मया ॥
धर्म्या यद् राजनीतिस्ते तज्जानामि परेश्वर। ७५
फलं विश्वास्यतायाश्च दुःखं मय्यर्पितं त्वया ॥
स्वदासं प्रति ते वाक्यात् क्षमा मां सान्त्वयेत् तव ॥ ७६
वर्त्ततां मयि ते स्नेहस्तेन प्राप्स्यामि जीवनं। ७७

यस्मात् त्वदीयशास्त्रं यत् तन्ममानन्दकारकं ॥
७८ लज्जन्तां दर्पिणो यस्मात् ते मृषा पीडयन्ति मां।
तावकीननियोगानां ध्यानमेव करोम्यहं ॥
७९ त्वत्तो बिभ्यति ये लोकास्त्वत्प्रबोधांश्च ये विदुः।
सकलास्ते पुनर्वारं मम पक्षे भवन्तु हि ॥
८० यदहं व्रीडया युक्तो न भवेयं कथञ्चन।
तदर्थमस्तु मच्चित्तं संसिद्धं विधिभिस्तव ॥

११ कफ्।

८१ अवसीदन्ति मे प्राणास्त्वदीयत्राणकाङ्क्षया।
वाक्यस्य तावकीनस्य प्रतीक्षाञ्च करोम्यहं ॥
८२ क्षीयेते मम नेत्रे च त्वदीयवाक्यकाङ्क्षया।
वाचस्त्वेमामहं भाषे कदा मां सान्त्वयिष्यसि ॥
८३ धूमस्थिता कुतूर्यद्वत् तद्वदेव भवाम्यहं।
तथापि त्वद्विधीनां न परिगच्छामि विस्मृतिं ॥
८४ तावकीनस्य दासस्य कति सन्ति दिनानि वै।
ममाभिद्रोहिणां दण्डः कदा कारिष्यते त्वया ॥
८५ मां पातयितुमिच्छन्तो गर्त्तान् खनन्ति गर्व्विणः।
तेषामेतादृशं कार्य्यं नास्ति त्वच्छास्त्रसम्मतं ॥
८६ पूर्णां विश्वासमर्हन्ति विधयः सकलास्तव।
द्रुह्यन्तीमे मृषा मह्यं त्वमेवोपकुरुष्व मां ॥
८७ भूमौ प्रायेण तै र्ध्वंस्ये न त्यजामि तु ते विधीन् ॥
८८ स्वकारुण्यानुसारेण मां त्वमेव हि जीवय।
त्वन्मुखान्निर्गतं साक्ष्यं पालयिष्याम्यहं तदा ॥

१२ लामद्।

८९ हे परेश्वर नित्यत्वं स्थिरं स्वर्गे वचस्तव ॥
९० पुरुषानुक्रमं यावत् तव विश्वास्यता स्थिरा।
त्वया संस्थापिता चेयं वसुधापि वितिष्ठते ॥
९१ अद्यापि ते वितिष्ठेते त्वदीयराजनीतितः।
यतः सर्व्वाणि वस्तूनि किङ्कराणि तव सन्ति हि ॥
९२ त्वच्छास्त्रं नाभविष्यच्चेत् मदीयानन्दकारकं।
तस्मानंक्ष्यमहं तर्हि स्वदुःखेन न संशयः ॥

नैवाहं विस्मरिष्यामि त्वन्नियोगान् कदाचन। ९३
यतो हेतो र्नियोगैस्तै र्भवान् मां समजीवयत्॥
तवाहमस्मि मां रक्ष त्वन्नियोगानुवर्त्तिनं॥ ९४
दुर्जना मामपेक्षन्ते मां नाशयितुमिच्छवः। ९५
किन्त्वहं त्वत्प्रबोधेषु यत्नतो निदधे मनः॥
सर्व्वस्या एव संसिद्धेरन्तः सन्दृष्ट मया। ९६
किन्त्वतीव सुविस्तीर्णा भवत्याज्ञा त्वदीयिका॥

१३ मेम्॥

त्वच्छास्त्रं कीदृशं प्रीये तद् ध्यायाम्यखिलं दिनं। ९७
ज्ञानवन्तं रिपुभ्योऽपि त्वं स्वाज्ञाभिः करोषि मां। ९८
यतो हेतो र्मया सार्द्धं ता वर्त्तन्ते निरन्तरं॥
मम सर्व्वगुरुभ्योऽपि बुद्धिमांश्च भवाम्यहं। ९९
यस्मात् तव प्रबोधानां चिन्तनं क्रियते मया॥
प्राचीनेभ्योऽप्यहं विज्ञस्त्वन्नियोगानुपालनात्॥ १००
कुमार्गादपि सर्व्वस्मात् स्वपादौ वारयाम्यहं। १०१
यतस्त्वदीयवाक्यस्य पालनार्थमहं यते॥
नीतितस्तव न भ्रंशे यतस्त्वं मामशिक्षयः। १०२
मामकीनरसज्ञा च कीदृक् ते स्वदते वचः। १०३
जायते मम वक्त्रे हि मधुरं मधुतोऽपि तत्॥
तावकीननियोगेभ्यो मयालम्भि विवेचनं। १०४
तस्मात् सर्व्वम्मृषामार्गं गर्हणं जायते मम॥

१४ नून।

दीपो मदीयपादस्य मार्गे ज्योतिश्च ते वचः॥ १०५
धर्म्म्या या राजनीतिस्ते मया सा पालयिष्यते। १०६
शपथोऽयं मयाकारि सफलश्च करिष्यते॥
अतीव दुःखितं मां त्वं स्ववाक्याज्जीवय प्रभो॥ १०७
मद्वक्त्रस्य स्ववास्तुभ्यं रोचन्तां हे परेश्वर। १०८
स्वकीयराजनीतिश्च शिक्षय स्वयमेव मां॥
सर्व्वदा प्राणहस्तो ऽहं त्वच्छास्त्रं विस्मरामि न॥ १०९
मन्निमित्तं दुरात्मान उन्माथं योजयन्ति हि। ११०
तथापि त्वन्नियोगेभ्यो विपथे न व्रजाम्यहं॥

१११ तव प्रबोधवाक्यानि मन्ये पैतृकदायवत् ।
यतस्तान्येव मच्चित्तम् कुर्व्वन्त्यानन्दसंयुतं ॥
११२ शेषं यावदहं नित्यं पालयिष्यामि ते विधीन् ।
एतस्मिन्नेव चित्तस्य निवेशः क्रियते मया ॥

D सामख् ।

११३ गर्हे द्विमनसो लोकान् प्रीये त्वच्छास्त्र एव च ॥
११४ त्वं मदीयरहःस्थानं त्वञ्च मत्फलकस्तथा ।
तावकीनस्य वाक्यस्य प्रतीक्षा क्रियते मया ॥
११५ हे मनुष्या दुराचारा दूरं मत्तः प्रगच्छत ।
मामकीनेश्वरस्याज्ञाः पालयिष्याम्यहं ध्रुवं ॥
११६ धारय स्वीयवाक्यान्मां सञ्जीविष्याम्यहं तदा ।
मामकीनप्रतीक्षायां नहि मां लज्जितं कुरु ॥
११७ कुरु मां सुस्थिरं तस्मान्मया त्राणमवाप्स्यते ।
तावकीनविधीनाञ्चापेक्षा कारिष्यते सदा ॥
११८ त्वद्विधिभ्यश्च्युवन्ते ये तान् सर्व्वांस्त्वं विलोप्स्यसि ।
यस्मात् प्रवञ्चना तेषां जायते फलवर्ज्जिता ॥
११९ क्षितिस्थान् दुर्ज्जनान् सर्व्वान् मलवत् त्वमपास्यसि ।
तस्मात् तव प्रबोधेषु मनः सम्प्रीयते मम ॥
१२० रोमाञ्चो जायते देहे त्वत्तो वित्रस्यतो मम ।
तावकीनविचाराज्ञाः शङ्काञ्चोत्पादयन्ति मे ॥

y अयिन् ।

१२१ न्यायं धर्म्मञ्च कुर्व्वेऽहं मार्पयेः पीडकेषु मां ॥
१२२ हितार्थं स्वीयदासस्य प्रतिभूस्त्वं भव स्वयं ।
अभिमानिमनुष्याश्च मैव मां पीडयन्तु हि ॥
१२३ त्वत्त्राणं धर्म्मवाक्यञ्चाकांक्ष्य दृक् क्षीयते मम ॥
१२४ स्वकारुण्यानुसारात् त्वं स्वीयदासे समाचर ।
तावकीनविधींश्चापि शिक्षय स्वयमेव मां ॥
१२५ अहं त्वदीयदासोऽस्मि बुद्धिं मह्यं प्रयच्छ हि ।
तस्मादहं भविष्यामि तावकीनप्रबोधवित् ॥
१२६ कर्म्म कर्त्तुं परेशस्य समयः समुपस्थितः ।
यतो हेतो नरैः सर्व्वैस्तव शास्त्रं विलङ्घ्यते ॥

सम्प्रीयेऽहं तवाज्ञासु सर्व्वाच्छ्रेष्ठाच काञ्चनात्॥ ११७
नियोगांस्तव सर्व्वत्र सर्व्वान् मन्ये समञ्जसान्। ११८
सकलञ्च मृषामार्गं मन्ये गर्हणभाजनं॥

१७ फे।

आश्चर्य्या यत् प्रबोधास्ते तत् तान् रक्षति मे मनः॥ ११९
त्वद्वाक्यानां विकाशो यः स हि दीप्तिं प्रयच्छति। १२०
अल्पबुद्धिमनुष्यांश्च सुबुद्धीन् विदधाति सः॥
श्वसिमि व्यात्तवक्त्रोऽहं त्वदाज्ञानां प्रकाङ्क्षया॥ १२१
मयि दृष्टिं विधाय त्वं कुरु मां प्रत्यनुग्रहं। १२२
त्वन्नामप्रियलोकेषु यतस्तत् कर्त्तुमर्हसि॥
मदीयपादविक्षेपान् स्ववाक्येन कुरु स्थिरान्। १२३
प्रभुत्वं कश्चिदन्यायो न करोतु ममोपरि॥
विधेहि मम मुक्तिञ्च मनुष्याणामुपद्रवात्। १२४
ततोऽहं त्वन्नियोगानां प्रकरिष्यामि पालनं॥
स्वदासाय प्रसीद त्वं स्वविधीन् माञ्च शिक्षय॥ १२५
लोचनाभ्यां मदीयाभ्यां सरितौ स्रवतोऽम्भसां। १२६
यतो हेतो र्न कुर्व्वन्ति नरास्त्वच्छास्त्रपालनं॥

१८ त्सादे।

धार्म्मिकोऽसि परेश त्वं स्वविचारे च नीतिमान्॥ १२७
त्वयादिष्टाः प्रबोधाश्च धर्म्याः सत्याश्च सर्व्वथा॥ १२८
यस्मात् त्वदीयवाक्यानि विस्मर्य्यन्ते ममारिभिः। १२९
ततो हेतो र्मनस्तापः स्वकीयः सङ्क्षिणोति मां॥
त्वद्वाक्यं सर्व्वथा शुद्धं दासस्ते तत्र प्रीयते॥ १४०
क्षुद्रोऽहमवमान्यश्च विस्मरामि न ते विधीन्॥ १४१
त्वद्धर्म्मो नित्यधर्म्मोऽस्ति त्वच्छास्त्रं सत्यमेव च॥ १४२
आक्रान्तं दुःखकष्टाभ्यां तवाज्ञा हर्षयन्ति मां॥ १४३
तावकीनप्रबोधानां धर्म्मः स्थास्यति शाश्वतः। १४४
बुद्धिं मह्यं प्रयच्छ त्वं सञ्जीविष्याम्यहं तदा॥

१९ कूफ्।

सर्व्वान्तःकरणेनाहम् उच्चैराह्वयामि हि। १४५
प्रभो यच्छोत्तरं मह्यं पालयिष्यामि ते विधीन्॥

१४६ अहं समाकर्ण्य त्वान्तु परित्राणं विधेहि मे।
तेनाहं त्वत्प्रबोधानाम् आचरिष्यामि पालनं॥
१४७ प्रार्थयेऽहं प्रभातात् प्राक् तव वाक्यस्य कांक्षया॥
१४८ मन्नेत्रं त्वद्वचो ध्यातुं यामान्तं न प्रतीक्षते॥
१४९ हे परेश स्वकारुण्यात् मामकीनरवं शृणु।
राजनीत्यनुसाराच्च त्वं सञ्जीवय मां स्वयं॥
१५० पापानुवर्त्तिनोऽभ्यर्णास्त्वच्छास्त्राद् दूरवर्त्तिनः॥
१५१ अभ्यर्णोऽसि परेश त्वं सत्याज्ञा सकला तव॥
१५२ प्रागजानां प्रबोधैस्ते यत् तान् अस्थापयोऽक्षयं॥

२० रेश।

१५३ मम दुःखं निरीक्षस्व ममोद्धारं कुरुष्व च।
यस्मात् त्वदीयशास्त्रस्य विस्मृतिं न व्रजाम्यहं॥
१५४ विवादे वद मत्पक्ष उत्तरं माञ्च मोचय।
स्वीयवाक्यानुसारेण माञ्च त्वं जीवय स्वयं॥
१५५ दूरं त्राणमधर्म्मिभ्यो यत्ते नेच्छन्ति ते विधीन्॥
१५६ तावकीनानुकम्पास्ति महती हे परेश्वर।
राजनीत्यनुसारेण त्वं मां सञ्जीवय स्वयं॥
१५७ मामनेकेऽनुधावन्ति बहवश्च द्विषन्ति मां।
तथापि त्वत्प्रबोधेभ्यो न भवामि पराङ्मुखः॥
१५८ वञ्चकान् वीक्ष्य गर्हेऽहं त्वद्विधीन् नाचरन्ति ते॥
१५९ वीक्षस्व त्वन्नियोगेषु प्रेमाणं प्रकरोम्यहं।
स्वीयानुग्रहबाहुल्यान्मां परेश्वर जीवय॥
१६० भारत्यास्तावकीनायाः साकल्यं सत्यता भवेत्।
धर्म्म्या या राजनीतिस्ते सा च स्थास्यति सर्व्वदा॥

२१ सिन्।

१६१ हिंसितुं मुख्यलोका माम् अनुधावन्त्यकारणं।
किन्तु त्वदीयवाक्येभ्यः प्रबिभेति मनो मम॥
१६२ तव वाक्येऽहमाह्लादे लब्धभूरिधनो यथा॥
१६३ अनृतं द्वेष्मि गर्हे च तव शास्त्रं मम प्रियं॥
१६४ राजनीत्यास्त्वदीयाया धर्म्ममय्या निदानतः।
सप्तकृत्वो दिवामध्ये धन्यवादं करोमि ते॥

त्वच्छास्त्रे प्रीयमाणेषु वर्त्तते परमं शुभं। १६५
नहि कश्चन तेषाञ्च विद्यते प्रतिबन्धकः॥
प्रभो त्राणं प्रतीक्षे ते त्वदाज्ञा आचरामि च॥ १६६
मन्मनस्त्वत्प्रबोधानाम् विधत्ते परिपालनं। १६७
आत्यन्तिकञ्च तत्रैव प्रेमाणं विदधाति हि॥
नियोगांश्च प्रबोधांश्च त्वदीयान् आचराम्यहं। १६८
यस्मान्मे सकला मार्गा विद्यन्ते तव सम्मुखे॥

ꣳ तौ।

हे परेश्वर याज्ञा मे त्वत्साक्षादुपतिष्ठतु। १६९
स्वीयवाक्यानुसारात् त्वं मह्यं बुद्धिं प्रयच्छ च॥
तव प्रत्यक्षमायातु मामकीननिवेदनं। १७०
स्वप्रतिज्ञानुसारात् त्वं ममोद्धारं विधेहि च॥
मामकीनाधराभ्यां हि क्षरिष्यन्ति तव स्तवाः। १७१
यतो हेतोः स्वयं त्वं मां स्वविधीन् शिक्षयिष्यसि॥
योग्यं त्वद्वचसो वाक्यं मज्जिह्वा प्रतिवक्ष्यति। १७२
यतो हेतोस्त्वदीयाज्ञाः सकलाः सन्ति धर्म्मजाः॥
त्वत्करो मत्सहायोऽस्तु त्वन्नियोगान् वृणे यतः॥ १७३
तावकीनपरित्राणम् आकाङ्क्षामि परेश्वर। १७४
तावकीनञ्च यच्छास्त्रं तन्ममानन्दकारकं॥
मन्मनो जीवनं प्राप्य त्वत्प्रशंसां करोतु हि। १७५
त्वदीयराजनीतिश्च भूयान्ममोपकारिणी॥
नष्टमेषमिव भ्रान्तं स्वदासं मां गवेषय। १७६
यतो हेतोस्त्वदीयाज्ञा विस्मर्य्यन्ते मया नहि॥

---

## १२० विंशतिशततमं गीतं।

निन्दाप्राप्तिकाले मनश्चिन्ता।

यात्रागीतं।

परमेश्वरमुद्दिश्य विपत्तेः समये मया। १
प्रार्थनाकारि तेनापि प्रदत्तं मह्यमुत्तरं॥
मृषावाद्योष्ठयुग्मं यत् या च जिह्वा प्रतारिका। २

ताभ्यां च परमेश त्वं मम प्राणान् समुद्धर॥
३ हे प्रतारकजिह्वे किं त्वयि तेनार्पयिष्यते।
त्वया सार्द्धञ्च किं वस्तु तेन संयोजयिष्यते॥
४ तीक्ष्णवाणाश्च वीरस्य तप्ताङ्गाराश्च कोलिजाः॥
५ हा हा मेशकवंशस्य मध्येऽत्र प्रवसाम्यहं।
केदरीयमनुष्याणां शिविरेऽस्मि कृतालयः॥
६ सन्धिद्वेषिनरैः सार्द्धं वस्तुं क्लाम्यति मे मनः॥
७ सन्धिप्रियोऽहमित्युक्ते ते भवन्ति रणोद्यताः॥

---

## १२१ एकविंशतिशततमं गीतं।

आश्रितलोकानां परमेश्वरेण रक्षणं।

याचागीतं।

१ पर्व्वतान् वीक्षमाणोऽहं चिन्तयाम्यूर्द्ध्वलोचनः।
मामकोनोपकारो हि कुतः स्थानादुदेष्यति॥
२ परेशात् स्वर्भुवोः स्रष्टुरुपकार उदेति मे॥
३ नैव त्वदीयपादस्य स्खलनं स सहिष्यते।
तावकीनश्च रक्षी यः स तन्द्रां नहि यास्यति॥
४ पश्यातन्द्रोऽस्त्यनिद्रश्च इस्रायेलः स रक्षिता॥
५ रक्षिता तावकीनस्तु स्वयमस्ति परेश्वरः।
तव दक्षिणपार्श्वस्था छाया चास्ति परेश्वरः॥
६ दिवा सूर्य्यो विधू रात्रौ नहि त्वामाहनिष्यतः॥
७ त्वां रक्षिष्यति सर्व्वस्माद् अशुभात् परमेश्वरः।
मनसस्तावकीनस्य रक्षा तेन करिष्यते॥
८ निर्गमस्तावकीनश्च तथा प्रत्यागमस्तव।
रक्षिष्येत परेशेन ह्यद्यारभ्य हि सर्व्वदा॥

---

## १२२ द्वाविंशतिशततमं गीतं।

परमेश्वरस्य मन्दिरं गन्तुमाह्लादः।

दायूदा कृतं याचागीतं।

आयात परमेशस्य यास्यामो मन्दिरं वयं। १
इति वाक्ये जनैरुक्त आनन्दो जायते मम॥
अस्मत्पादा यिरूशालम् तव द्वारेषु संस्थिताः॥ २
सुनिर्म्मितं यिरूशालम् सुसंयुक्तं पुरं यथा॥ ३
तत्र यान्ति प्रजावर्गाः प्रजावर्गाः परेशितुः। ४
नाम स्तोतुं परेशस्येस्रायेलीयविधानतः॥
यस्मात् तत्रैव विद्यन्ते न्यायाध्यक्षासनान्यपि। ५
दायूदीयस्य वंशस्य सन्ति तान्यासनानि हि॥
युष्माभिः प्रार्थ्यतां सर्व्वैः कल्याणं यिरूशालमः। ६
ये नरास्त्वयि प्रीयन्ते शान्तिमेवाप्नुवन्ति ते॥
कल्याणं तव प्राचीरे वसेत् शान्तिश्च वेश्मसु॥ ७
भ्रातृणां मामकीनानां मित्राणाञ्चानुरोधतः। ८
मयेदं वक्ष्यते वाक्यं कल्याणं वसतु त्वयि॥
अस्मत्प्रभोः परेशस्य मन्दिरस्यानुरोधतः। ९
त्वदीयमङ्गलस्यैव चेष्टा कारिष्यते मया॥

---

## १२३ त्रयोविंशतिशततमं गीतं।

परमेश्वराश्रयणं।

याचागीतं।

स्वर्गवासिन्नहं विद्ये त्वां प्रत्युन्नतलोचनः॥ १
लोचने पश्य दासानां यथा स्वीयप्रभोः करे॥ २
यथा वा तिष्ठतो दास्या नेत्रे स्वस्वामिनीकरे।
तथा तिष्ठति नो दृष्टिरस्मत्प्रभौ परेश्वरे।
तेन जीवनलाभस्य प्रतीक्षां कुर्म्महे यतः॥
त्वमस्माननुकम्पस्वानुकम्पस्व परेश्वर। ३
यस्मादात्यन्तिकी दृप्तिर्जातास्माकमवज्ञया॥
प्राप्नोदात्यन्तिकीं दृप्तिमस्मदीयमनः किल। ४
सुखिनामुपहासेन दर्पिणामप्यवज्ञया॥

---

# १२४ चतुर्विंशतिशततमं गीतं।

रक्षार्थं परमेश्वरप्रशंसनं।

दायूदा कृतं यात्रागीतं।

१ इस्रायेलधुना वाक्यम् एतदर्हति भाषितुं।
अस्मदीयसहायश्चेन्नाभविष्यत् परेश्वरः॥
२ अस्माकं प्रातिकूल्येन मनुष्या उत्थिता यदा।
तदास्माकं सहायश्चेन्नाभविष्यत् परेश्वरः॥
३ तर्ह्यस्मद्वैपरीत्येन तेषां कोपस्य तापतः।
सकलान् जीवतोऽस्मांस्ते न्यगलिष्यन् न संशयः॥
४ वयं तोयसमूहेनाप्लावयिष्यामहि ध्रुवं।
अस्मत्प्राणत ऊर्द्ध्वं च प्राक्रमिष्यत् तरङ्गिणी॥
५ अस्मत्प्राणत ऊर्द्ध्वं ह्याक्रमिष्यद् गर्व्वितं जलं॥
६ भूयात् परेश्वरो धन्यस्तेषां दन्तेषु भक्ष्यवत्।
अस्माकमर्पणं यस्मात् सोऽभ्यनुज्ञातवान् नहि॥
७ व्याधपाशाद् यथा पक्षी निस्तीर्णो नो मनस्तथा।
स पाशः पश्य सञ्छिन्नो निस्तारञ्च गता वयं॥
८ अस्मद्गतिः प्रभो र्नाम्नि निर्म्मातुः स्वर्गमर्त्त्ययोः॥

---

# १२५ पञ्चविंशतिशततमं गीतं।

परमेश्वरं शरणागतानां लोकानां मङ्गलं।

यात्रागीतं।

१ निश्चलश्चिरसंस्थश्च यः सीयोनाख्यपर्व्वतः।
तस्य तुल्या भविष्यन्ति परमेशाश्रिता नराः॥
२ यथा शैलै र्यिरूशालम् अद्यारभ्य सदावृतं।
स्वप्रजाः परमेशेन चतुर्द्दिक्ष्वावृतास्तथा॥
३ राजदण्डस्तु पापस्य न स्थायी धर्म्मिणां भुवि।
दौर्जन्ये धर्म्मिभि र्यस्मान्न कर्त्तव्यं करार्पणं॥
४ हितं कुरु परेश त्वं हितानां सरलात्मनां॥

वक्रमार्गेषु ये भ्रान्तास्ते तु दुष्कर्म्मभिः सह। ५
प्रभुना दवयिष्यन्ते इस्रायेलेऽस्तु मङ्गलं॥

## १२६ षड्विंशतिशततमं गीतं।

वाविलो निस्तारार्थं परमेश्वरस्य प्रशंसनं।

यात्रागीतं।

परमेशेन सीयोनो दासत्वे परिवारिते। १
दृष्टस्वप्नमनुष्याणाम् अभवाम वयं समाः॥
तदा हास्येन नो वक्त्रं जिह्वा गीतैरपूर्य्यत। २
भिन्नदेशीयलोकेषु प्राचरद् वागियं तदा।
कृते ऽमीषां महाकर्म्म कृतवान् परमेश्वरः॥
अस्मत्कृते महाकर्म्म कृतवान् परमेश्वरः। ३
एतेन वयमानन्दं परमन्त्वलभामहि॥
हे परेश त्वमस्माकं दासत्वं परिवारय। ४
दक्षिणीयमरुस्थाने स्रोतसां शुष्कतामिव॥
अश्रुपातेन बीजानां वपनं ये प्रकुर्व्वते। ५
उल्लासेनैव शस्यानां कर्त्तनं तैः करिष्यते॥
प्रवहन् बीजभारं यः क्रन्दन् क्षेत्रं प्रगच्छति। ६
प्रवहन् शस्यभारं स उल्लसन् गेहमेष्यति।

## १२७ सप्तविंशतिशततमं गीतं।

ईश्वरानुग्रहात् सर्व्वोन्नतिमङ्गले।

सुलेमना कृतं यात्रागीतं।

सदनं परमेशेन विनिर्म्मीयेत चेन्नहि। १
निष्फलो जायते तर्हि श्रमो निर्म्माणकारिणां॥
नगरं परमेशेन परिरक्ष्येत चेन्नहि।
निष्फला जायते तर्हि रक्षिणो जागरूकता॥
प्रगे युष्माकमुत्थानं शयने च विलम्बनं। २

भोजनव्याधिसंयुक्तं सकलं जायते वृथा।
स्वप्रियाय तु निद्रायां स ददाति समं फलं॥
३ परेशात् प्राप्यविक्तानि पुत्रविक्तानि पश्य हि।
फलं गर्भस्य तेनैव दीयते पारितोषिकं॥
४ यथा वीरकरे वाणा युवजाताः सुतास्तथा॥
५ तैः शरै र्यस्य तूणीरः पूर्णो धन्यः स मानवः।
तेऽरिभिर्विवदिष्यन्ते लज्जामप्राप्य गोपुरे॥

---

## १२८ अष्टविंशतिशततमं गीतं।

परमेश्वराश्रितानां लोकानां सुखस्य वर्णनं।

यात्रागीतं।

१ परमेश्वरतो भीत्वा गमनं तस्य वर्त्मसु।
समाचरति यः कश्चित् धन्य एव स मानवः॥
२ त्वं कृतस्य स्वहस्ताभ्यां कर्म्मणो भोच्यसे फलं।
भविष्यसि च धन्यस्त्वं भविता तव मङ्गलं॥
३ त्वत्पत्नी गेहमध्यस्था सफला गोस्तनीलता।
त्वत्सुता जितशाखाश्च भोजनासनवेष्टकाः॥
४ नरः परेश्वराद् भीतः पश्याप्नोतीत्थमाशिषं॥
५ प्रदास्यत्याशिषं तुभ्यं सियोनस्थः परेश्वरः।
त्वं यावज्जीवनं क्षेमं वीक्ष्यसे यिरूशालमः॥
६ वीक्ष्यसे स्वीयपौत्रांश्चेस्रायेलि वर्त्ततां शुभं॥

---

## १२९ ऊनत्रिंशच्छततमं गीतं।

उपद्राविलोकानां विरुद्धं विलपनं प्रार्थनञ्च।

यात्रागीतं।

१ लोका आयौवनादेव बहुशो मामपीडयन्।
इस्रायेलधुना वाक्यम् एतदर्हति भाषितुं॥
२ लोका आयौवनादेव बहुशो मामपीडयन्।

तथापि मां पराजेतुं ते न शेकुः कदाचन ॥
लाङ्गलं चालयन्तश्च मत्पृष्ठे लाङ्गलग्रहाः। ३
सुदीर्घा व्यदधुस्तत्र स्वीयलाङ्गलपद्धतीः ॥
धार्म्मिकः परमेशोऽस्ति रज्जूः सोऽच्छिनत्त पापिनां ॥ ४
सीयोनो द्वेषिणः सर्व्वे पश्चाद् यास्यन्ति लज्जिताः ॥ ५
यत् तृणं गेहपृष्ठस्थं शुष्यत्युत्पाटनात् पुरा। ६
सकलास्ते भविष्यन्ति तुल्यास्तेन तृणेन हि ॥
शस्यच्छेत्ता न पाणौ तत् न क्रोडे वाहकोऽर्पयेत् ॥ ७
आशीर्व्वादः परेशस्य युष्माभिः सह वर्त्ततां। ८
वयं नाम्ना परेशस्य युष्मभ्यं दद्म आशिषं।
इति वाक्यञ्च तद् दृष्ट्वा पथिकै र्नैहि गद्यते ॥

---

## १३० त्रिंशच्छततमं गीतं।

परमेश्वरे प्रत्याशा।

यात्रागीतं।

अहं गम्भीरतोये त्वाम् आह्वयामि परेश्वर ॥ १
हे प्रभो मम रावं त्वम् आकर्णयितुमर्हसि। २
मदीयकातरोक्तौ हि त्वया श्रोत्रं निधीयतां ॥
प्रभो त्वं चेत् स्मरे दोषान् तर्हि कः स्थास्यति प्रभो ॥ ३
नरा यद् बिभ्यति त्वत्तस्तत् क्षमा विद्यते त्वयि ॥ ४
परमेशं प्रतीक्षेऽहं मन्मनस्तं प्रतीक्षते। ५
वचने गदिते तेन विश्वासञ्च करोम्यहं ॥
आकाङ्क्षन्ति प्रभातं ये प्रभाताकाङ्क्षिरक्षकाः। ६
समाकाङ्क्षति तेभ्योऽपि मामकीनमनः प्रभुं ॥
इस्रायेलीयवंशस्तु परमेशं प्रतीक्षतां। ७
यस्मात् परेश्वरे संस्था कृपा पूर्णा च निष्कृतिः ॥
निष्कृतिं सर्व्वदोषात् स इस्रायेलो विधास्यति ॥ ८

---

## १३१ एकत्रिंशच्छततमं गीतं।

नम्रताया वर्णनं।

दायूदा कृतं यात्रागीतं।

१ प्रभो न गर्व्वि चित्तं मे नाहमुन्नतलोचनः।
नैवाहं व्याप्रिये कार्य्ये गुरौ मत्तो महाद्भुते॥
२ पश्य शान्तिक्षमायुक्तं मयाकारि निजं मनः।
स्वीयमातुर्वशीभूतः व्यक्तस्तन्यः शिशुर्यथा।
मन्मनो मद्वशीभूतं व्यक्तस्तन्यः शिशुर्यथा॥
३ इस्रायेल् प्रभुमाकाङ्क्षेद् अद्यैवारभ्य सर्व्वदा॥

---

## १३२ द्वात्रिंशच्छततमं गीतं।

१ परमेश्वरस्य सेवायां दायूद उद्योगः प्रार्थना च ११ तं प्रतीश्वरस्य प्रतिज्ञा च।

यात्रागीतं।

१ परेश स्मर दायूदं सर्व्वं तस्य च सङ्कटं॥
२ परमेश्वरमुद्दिश्य शपथं सोऽकरोदिमं।
वचः प्रत्यशृणोच्चेदं याकूबो बलदायिने॥
३ वासस्थानं परेशाय यावन्नासाद्यते मया।
यावन्न लभ्यते वेश्म याकूबो बलदायिने॥
४ मया तावत् स्वगेहस्य वासो नैव प्रवेक्ष्यते।
शयनार्थं स्वखट्टापि न समारोक्ष्यते मया॥
५ न चानुमंस्यते निद्रा स्वीयलोचनयोर्मया।
न नेत्रच्छदयुग्मस्य स्वप्नार्थं वा निमीलनं॥
६ इफ्राथायां वयं पश्य प्राप्तास्तस्या जनश्रुतिं।
उद्देशं लब्धवन्तस्तु यियारीमीयप्रान्तरे॥
७ आगच्छत वयं तस्य प्रविशाम निवेशनं।
तदीयपादपीठे च प्रणामं करवामहै॥
८ हे परेश समुत्थाय स्वविश्रामस्थलं व्रज।
स्वीयमञ्जूषया सार्द्धं महाशक्तिविशिष्टया॥
९ त्वदीययाजकैर्धर्म्मो वासोवत् परिधीयतां।

पुण्यवन्तश्च लोकास्ते कुर्व्वन्तूच्चै र्जयध्वनिं॥
स्तीयदासस्य दायूदोऽनुरोधादवधीयतां। १०
त्वयं स्वेनाभिषिक्तं त्वं न कुरुष्व पराङ्मुखं॥
परमेशोऽन्यथा यस्य न करिष्यति कर्हिचित्। ११
तादृशं शपथं सत्यं कृत्वा दायूदमब्रवीत्।
तनुजं ते करिष्यामि त्वत्सिंहासनसंस्थितं॥
मम यो नियमो ये च प्रबोधा ज्ञापिता मया। १२
तेषाञ्चेत् पालनं कुर्य्युस्तावकीनतनूद्भवाः।
तेषामप्यात्मजास्तर्हि भाविकाले निरन्तरं।
भविष्यन्ति सुखासीना राजसिंहासने तव॥
यतो हेतोः सियोनद्रिं वृतवान् परमेश्वरः। १३
तमेव स्वीयवासार्थं सोऽभिकाङ्क्षितवान् स्वयं॥
तेनोक्तम् एतदेवास्ति मद्विश्रामस्थलं सदा। १४
अत्र स्थाने निवत्स्यामीदं मह्यं रोचते यतः॥
एतत्स्थानीयभक्ष्याय प्रदास्याम्यहमाशिषं। १५
तर्पयिष्यामि चान्नेन तत्रत्यान् दुर्गतान् नरान्॥
परित्राणेन तत्रत्यान् भूषयिष्यामि याजकान्। १६
तत्रत्याः पुण्यवन्तश्च करिष्यन्ति जयध्वनिं॥
तत्र शृङ्गश्च दायूदो मया संवर्धयिष्यते। १७
नराय स्वाभिषिक्ताय दीपश्चासादयिष्यते॥
लज्जया द्वेषिणस्तस्य वेष्टयिष्यामि वस्त्रवत्। १८
तस्य मूर्द्ध्नि किरीटस्य शोभा राजिष्यते ध्रुवं॥

---

## १३३ त्रित्रिंशच्छततमं गीतं।

ऐक्यस्य श्रेष्ठत्वं।

दायूदा कृतं यात्रागीतं।

भ्रातृणां पश्य किं भद्रः किं रम्यो वास ऐक्यतः॥ १
तुल्यो मन्ये स संवासस्तेन तैलेन साधुना। २
हारोणस्य वराङ्गाद् यत् श्मश्रु यावद् अवातरत्।
श्मश्रुतो यच्च वस्त्राणां प्रान्तं यावदवातरत्॥

३ सदृशो वा स संवासो हर्म्योद्यानस्थखवारिणा।
सियोनाख्यगिरिस्थेव पतनं यस्य जायते।
तत्र यस्मान्नियुक्ताशीः प्रभुनानन्तजीवनं॥

---

## १३४ चतुस्त्रिंशच्छततमं गीतं।

परमेश्वरस्य प्रशंसार्थम् आश्वासः।

यात्रागीतं।

१ ह परेशस्य प्रासादे रात्रौ रात्रावुपस्थिताः।
दासाः परेशितुः सर्व्वे धन्यं ब्रूत परेश्वरं॥
२ धर्म्मधाम्न्यूर्द्ध्वहस्ताश्च धन्यं ब्रूत परेश्वरं॥
३ धन्यवादञ्च युष्माकं हे प्रजाः स करिष्यति।
परमेशः सियोनस्थो निर्म्माता स्वर्गमर्त्त्ययोः॥

---

## १३५ पञ्चत्रिंशच्छततमं गीतं।

अनुग्रहार्थं परमेश्वरस्य प्रशंसनं प्रतिमानाम् असारत्वञ्च।

१ प्रशंसा परमेशस्य युष्माभिः सम्यक्कीर्त्त्यतां।
स्तुत नाम परेशस्य स्तुत दासाः परेशितुः॥
२ उपतिष्ठथ ये यूयं परमेशस्य मन्दिरे।
अस्मदीयेश्वरस्यैव प्रासादस्याङ्गनेषु च॥
३ यूयं परेश्वरं स्तुध्वं परेशो यत उत्तमः।
यूयं गायत तन्नाम यस्मात् तद्धि मनोहरं॥
४ परेशेन वृतो याकूब् इस्रायेल् च स्वरत्नवत्॥
५ यस्मादहमिदं जाने महानस्मत्परेश्वरः।
अस्माकञ्च प्रभुः श्रेष्ठः कृत्स्नदेवगणादपि॥
६ स्वर्गमर्त्त्यसमुद्रेष्वगाधेष्वप्यखिलेषु च।
यत् किञ्चिद् रोचते तस्मै तत् करोति परेश्वरः॥
७ तेनैवोत्पाद्यते मह्याः प्रान्ततो वाष्पसङ्ग्रहः।
तथा सौदामिनी तेन क्रियते वृष्टिदायिनी।

वायुं निःसार्य्यते तेन स्वभाण्डागारमध्यतः॥
मिसर्द्देशे ऽग्रजान् नृणां पशूनाञ्च जघान सः॥ ८
मध्ये तव मिसर्द्देश चिह्नानि चाद्भुताः क्रियाः। ९
फिरौणं प्रापयामास सर्व्वांस्तत्सेवकांश्च सः॥
बहुसङ्ख्यकजातीश्च पराजिग्ये रणेन सः। १०
मारयामास राज्ञश्च महाशक्तिसमन्वितान्॥
इमोरीयमनुष्याणां सीहोनाख्यं नराधिपं। ११
ओगनामर्व्विशिष्टञ्च वाशनस्य महीपतिं।
सर्व्वान् किनानदेशस्य पार्थिवान् स व्यनाशयत्॥
स तेषां सर्व्वभूमिञ्च विततारधिकारवत्। १२
स्वीयप्रजागणायैवेस्रायेले स्वाधिकारवत्॥
सर्व्वकाले भवेत् स्थायि तव नाम परेश्वर। १३
स्थिरा शेषयुगं यावत् परमेश तव स्मृतिः॥
यतो विचारयिष्यन्ते परेशेन निजाः प्रजाः। १४
प्रदर्शयिष्यते तेन दया स्वसेवकान् प्रति॥
भिन्नजातीयलोकानां यावन्तो देवविग्रहाः। १५
रौप्यस्वर्णमयास्ते हि मर्त्त्यहस्तै र्विनिर्म्मिताः॥
सवक्त्रास्ते न भाषन्ते न पश्यन्ति सलोचनाः॥ १६
सकर्णाश्च न शृण्वन्ति नास्ति तेषां मुखे ऽनिलः॥ १७
तत्समाः कारवस्तेषां सर्व्वे तांश्चाश्रिता जनाः॥ १८
इस्रायेलन्वया यूयं धन्यं ब्रूत परेश्वरं। १९
हे हारोणान्वया यूयं धन्यं ब्रूत परेश्वरं॥
हे लेविवंशजा यूयं धन्यं ब्रूत परेश्वरं। २०
हे परेशार्च्चका यूयं धन्यं ब्रूत परेश्वरं॥
परेशं स्तुत सीयोनि यिरूशालमवासिनं। २१
प्रशंसा परमेशस्य युष्माभिः सम्प्रकीर्त्त्यतां॥

---

## १३६ षट्त्रिंशच्छततमं गीतं।

नित्यकारुण्यहेतोः परमेश्वरस्य प्रशंसा।

यूयं परेश्वरं स्तुध्वं यतो हेतोः स उत्तमः। १

यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
२ यूयं तमेव विष्टुध्वम् ईश्वराणामधीश्वरं।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
३ यूयं तमेव विष्टुध्वं प्रभूनां परमं प्रभुं।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
४ यूयं स्तुताद्वितीयं तम् आश्चर्य्यकर्म्मकारिणं।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
५ सुविवेचनया तेन निर्म्ममे व्योममण्डलं।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
६ तेन विस्तारयाञ्चक्रे तोयानामुपरि क्षितिः।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
७ निर्म्ममाते च तेनैव द्वे महाज्योतिषी दिवि।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
८ दिवसस्याधिकारित्वे नियुक्तोऽसौ दिवाकरः।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
९ निशाराज्ये नियुक्तश्च सनक्षत्रो निशापतिः।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
१० मिसर्देशीयलोकानाम् अग्रजास्तेन जघ्निरे।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
११ इस्रायेलन्वयं तेषां मध्यतश्चोद्दधार सः।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
१२ बलयुक्तेन हस्तेन विस्तृतेन च बाहुना।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
१३ तथा सूफार्णवस्तेन द्विखण्डीकृत्य चिच्छिदे।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
१४ तस्य मध्येन चेस्रायेल् तदानीं तेन तारितः।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
१५ सूफाम्भोधौ तु निक्षिप्तः फिरौन् तस्य बलानि च।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥
१६ मरुस्थानस्य मध्येन स निनाय निजाः प्रजाः।
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा ॥

सुमहैश्वर्य्ययुक्तांश्च भूपतीन् स्माजघान सः। १७
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा॥
मारयामास राज्ञश्च महाविक्रमसंयुतान्। १८
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा॥
इमोरीयमनुष्याणां सीहोनाख्यं नराधिपं। १९
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा॥
चोगनामविशिष्टञ्च वाशनस्य महीपतिं। २०
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा॥
स तेषां सर्व्वभूमिञ्च वितताराधिकारवत्। २१
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा॥
स्वीयदासगणस्यैवेस्रायेलः स्वाधिकारवत्। २२
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा॥
अस्माकं पतितावस्थां दृष्ट्वा तेन स्मृता वयं। २३
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा॥
अस्मदीयविपक्षेभ्यो वयं तेन समुद्धृताः। २४
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा॥
यावन्तः प्राणिनः सन्ति सर्व्वेभ्योऽन्नं ददाति सः। २५
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा॥
स्वर्गवासिन ईशस्य युष्माभिः क्रियतां स्तवः। २६
यस्मादनन्तकालेषु करुणा तस्य सुस्थिरा॥

---

## १३७ सप्तत्रिंशच्छततमं गीतं।

१ वाबिलदेशे यिहूदीयानां दुःखानि ७ इदोमो बाबिलस्य दण्ड भविष्यद्वाक्यं।

वाबिलीयस्रवन्तीनां तीरेषूपाविशाम हि। १
अकुर्म्म क्रन्दनञ्चापि सीयोनः स्मरणाद् वयं॥
तत्र चाडवक्षेषूदलम्बाम स्ववल्लकीः॥ २
धर्त्तारो नो यतस्तत्र गानमस्मान् ययाचिरे। ३
ये चास्मान् वन्दिनोऽकार्षुस्ते ऽस्मान् हर्षं ययाचिरे।
यूयं गायत सीयोनो गीतं किञ्चन नः कृते॥
विदेशे तु कथं गीतं प्रगास्यामः परेशितुः॥ ४

५ यिरूशालम् अहं चेत् त्वां विस्मरेयं कदाचन।
स्वदाक्ष्यं विस्मरेत् तर्हि मामको दक्षिणः करः॥
६ अहं चेन्न स्मरेयं त्वां परमानन्दतश्च मे।
चेत् त्वय्येव यिरूशालम् न प्रीयेयाधिकं सदा।
मदीया रसना तर्हि सज्जतां मम तालुनि॥
७ इदोमीयमनुष्याणां दण्डार्थं हे परेश्वर।
त्वं यिरूशालमः शोच्यम् अन्तिमं दिवसं स्मर।
उच्छिन्तामूलमुच्छिन्तेमां वाचं ते ऽवदंस्तदा॥
८ हे नियुक्ते विनाशाय वाविलाख्ये नृपात्मजे।
अस्मान् प्रति त्वयाचारो यादृशो ऽकारि तादृशं।
फलं दास्यति यस्तुभ्यं स हि धन्यो भविष्यति॥
९ यस्य हस्तेन सङ्गृह्य स्तन्यपायिशिशूंस्तव।
बलात् क्षेप्स्यति पाषाणे सोऽपि धन्यो भविष्यति॥

---

## १३८ अष्टत्रिंशच्छततमं गीतं।

दयासत्यतयोः कृते परमेश्वरस्य प्रशंसनं।

दायूदो गीतं।

१ सर्व्वान्तःकरणेनाहं प्रकरिष्ये तव स्तवं।
देवतानां समक्षञ्च प्रगास्यामि गुणांस्तव॥
२ प्रणामञ्च करिष्येऽहं पूतं ते मन्दिरं प्रति।
दयासत्यतयो र्हेतोः संस्तोष्ये तव नाम च।
यस्मात् स्वीयमहानाम्नः श्रेष्ठाकारि स्ववाक् त्वया॥
३ ममाह्वानदिने मह्यम् उत्तरं त्वं प्रदत्तवान्।
कृतवान् बलवन्तञ्च बलेनान्तरिकेण मां॥
४ निर्गतानि त्वदीयास्यात् वचनानि निशम्य तु।
पृथिवीस्था नृपाः सर्व्वे त्वां स्तोष्यन्ति परेश्वर॥
५ प्रगास्यन्ति च गीतानि परमेशस्य वर्त्मसु।
यतो हेतोः परेशस्य विद्यते गौरवं महत्॥
६ उन्नतः परमेशः स नम्रम् आलोकते नरं।

दूरस्थश्च विजानाति मानवं गर्व्वसंयुतं ॥
क्लेशमध्येऽपि गच्छन्तं मां त्वं सञ्जीवयिष्यसि। ७
कोपं विस्तीर्णहस्तश्च मेऽरीणां वारयिष्यसि।
स्वीयदक्षिणहस्तेन माञ्च निस्तारयिष्यसि ॥
मदीयकर्म्मणः सिद्धिं परमेशः करिष्यति। ८
करुणा तव नित्यास्ति स्वपाण्योः कर्म्म मा त्यज ॥

---

## १३९ ऊनचत्वारिंशच्छततमं गीतं।

१ परमेश्वरस्य सर्व्वज्ञता १३ स्रष्टेराश्चर्य्यकर्म्मणां वर्णनं १९ पापिनः प्रति घृणा च।

वाद्यनियन्त्रे दातव्यं दायूदो धर्म्मगीतं।

त्वं परीक्षानुसन्धाय मां परिज्ञातवानसि ॥ १
त्वं मदीयोपवेशञ्च मदुत्थानञ्च वेत्सि हि। २
मम मानससङ्कल्पं बुध्यसे च सुदूरतः ॥
वेत्सि मार्गशय्ये मे वेत्थ सर्व्वाञ्च मे गतिं ॥ ३
सर्व्वथा ज्ञायते यन्न त्वया हे परमेश्वर। ४
जिह्वायां मम यच्चैकं तादृग् वाक्यं न विद्यते ॥
अग्रे पश्चाच्च मां रुद्ध्वा हस्तं धत्से ममोपरि ॥ ५
इदं मत्तोऽद्भुतं ज्ञानं ममागम्यं समुच्छ्रयात् ॥ ६
आत्मना तव न प्राप्यं किं स्थानं यास्यते मया। ७
तव प्रत्यक्षतो वा क्व करिष्येऽहं पलायनं ॥
समारोक्ष्यामि किं स्वर्गं त्वन्तु तत्रैव विद्यसे। ८
पाताले किं शयिष्ये वा त्वं तत्रापि प्रकाशसे ॥
धृत्वारुणस्य पक्षौ वा किं वत्स्याम्यब्धिसीमनि ॥ ९
तत्र स्थानेऽपि मन्नेता तव हस्तो भविष्यति। १०
तव दक्षिणपाणिश्च मां तत्रापि धरिष्यति ॥
आच्छादयतु मां ध्वान्तमिति किं वक्ष्यते मया। ११
यामिनी मच्चतुर्द्दिक्षु दीप्तियुक्ता भविष्यति ॥
अन्धकारोऽपि ते साक्षाद् अन्धकारायते नहि। १२
दिनवद् रजनी भाति समे चास्तां तमोद्युती ॥
मामकीनशरीरान्तस्तव हस्तगतं किल। १३

मातृगर्भस्य मध्ये ऽपि त्वयैवाहं समावृतः॥
१४ भीमाश्चर्य्या च मूर्त्तिर्मे त्वां विश्वोस्याम्यहं ततः।
त्वाश्चर्य्यं सर्व्वकार्य्यं ते सम्यक् तद् वेत्ति मे मनः॥
१५ सृज्यमानस्य गुप्तश्चोयमानस्य क्षितेरधः।
सारांशो मम नैवासीत् प्रच्छन्नो दृष्टितस्तव॥
१६ नयनाभ्यां त्वदीयाभ्यां पिण्डाकारो ऽहमीक्षितः।
अवृत्थानि त्वया पश्चात् सकलानि दिनानि मे।
त्वद्ग्रन्थे लिखितान्यासन् नैकस्मिन्नप्युपस्थिते॥
१७ सङ्कल्पास्तव हे ईश मम कीदृक्‌ प्रसाधनं।
कृते तद्गणने कीदृग् बह्वी सङ्ख्याभिजायते॥
१८ कथं तान् गणयिष्यामि सिकताभ्योऽपि तेऽधिकाः।
निद्रातोऽपि प्रबुद्धोऽहम् अवस्थास्ये त्वया सह॥
१९ हे ईश त्वं दुरात्मानं नरं किं न हनिष्यसि।
हे रक्तपातिनो यूयं दूरं मत्तोऽपगच्छत॥
२० दुष्टभावेन ते लोकास्त्वन्नामोच्चारयन्ति हि।
विपक्षास्तव भूत्वा च प्रयुञ्जन्त्यनृताय तत्॥
२१ त्वदीयद्वेषिणोऽहं किं न प्रद्वेष्मि परेश्वर।
तावकीनविपक्षान् किं न मन्ये दुःसहानहं॥
२२ पूर्णद्वेषेण तान् द्वेष्मि तांश्च मन्ये स्ववैरिणः॥
२३ ईश मामनुसन्धाय परिजानीहि मे मनः।
कृत्वा मम परीक्षाञ्च सङ्कल्पान् मम निश्चिनु॥
२४ मयि क्रोधगतिः काचित् अस्तीति त्वं विलोकय।
अमरत्वस्य मार्गे च गमय स्वयमेव मां॥

---

## १४० चत्वारिंशच्छततमं गीतं।

रिपुभ्यो रक्षणाय प्रार्थना।

वाद्यनियन्त्रे दातव्यं दायूदो धर्म्मगीतं।

१ त्वं दुर्वृत्तनरेभ्यो मां हे परेश समुद्धर।
दौरात्म्याचारिलोकेभ्यः स्वयं मां परिरक्ष च॥
२ ते मनुष्याः स्वचित्तेषु चिन्तयन्ति कुकल्पनाः।

प्रत्यहं समरं कर्त्तुम् एकस्थाने मिलन्ति च॥
सुतीक्ष्णां निजजिह्वाञ्च द्विजिह्वा इव कुर्व्वते। ३
तेषामोष्ठाधरयो र्मध्ये फणिनो विद्यते विषं॥ सेला॥
दुर्जनानां करेभ्यस्त्वं हे परेश्वर मामव। ४
दौरात्म्याचारिलोकेभ्यः स्वयं मां परिरक्ष च।
मदीयपादविक्षेपं बाधितुं चिन्तयन्ति ते॥
गर्व्विणो ऽस्थापयन् गुप्तं पाशं रज्जूश्च मत्कृते। ५
व्यस्तृण्वन् पथि जालञ्चोन्माथञ्चायोजयन् मम॥ सेला॥
परमेशं त्वहं वच्मि त्वमेवासि मदीश्वरः। ६
मन्निवेदनरावं त्वं हे परेश्वर संशृणु॥
हे प्रभो परमेश त्वं मम त्राणकरं बलं। ७
समरस्य दिने त्वञ्च मस्तकाच्छादको मम॥
दुर्जनस्येप्सितं तस्मै न प्रदेहि परेश्वर। ८
नैव साधय तस्याशां न चेत् स गर्व्वमेष्यति॥ सेला॥
ये मां रुन्धन्ति तेषान्तु न्टणां वाङ्मयकण्टकाः। ९
सर्व्वे राशीकरिष्यन्ते तेषां स्वीयेषु मूर्द्धसु॥
तेषामुपरि चाङ्गाराः समाचेष्यन्त उज्ज्वलाः। १०
सकला वह्निमध्ये च क्षेप्स्यन्ते ते नरास्त्वया।
तोयेषु पातयिष्यन्ते ऽगाधेषूत्थातुमक्षमाः॥
दुर्मुखो मानवो मह्यां न भविष्यति सुस्थिरः। ११
दौरात्म्याचारिणं क्लेशस्ताडयन् द्रावयिष्यति॥
अहं जाने विपन्नानां लोकानां धर्म्मनिश्चयः। १२
दरिद्राणां विचारश्च परेशेन करिष्यते॥
अवश्यं धार्म्मिकैः सर्व्वं र्नाम विख्योष्यते तव। १३
त्वत्साक्षाच्च निवत्स्यन्ति मानवा ऋजुचेतसः॥

---

## १४१ एकचत्वारिंशच्छततमं गीतं।

रिपुभ्यो रक्षार्थं प्रार्थना।

दायूदो धर्म्मगीतं।

हे परेशाह्वयामि त्वां त्वं त्वरस्व कृते मम। १
समाकर्णय रावञ्च त्वामेवाह्वयतो मम॥

२ क्रमतां तव साक्षाद्धि धूपवत् प्रार्थना मम।
सान्ध्यनैवेद्यतुल्यश्च मामकीनकृताञ्जलिः॥
३ त्वं परेश मदीयास्ये द्वारपालं नियोजय।
मदीयाधररूपौ च कपाटौ परिरक्षय॥
४ दुष्कर्म्माचारिभिः सार्द्धं दुष्टत्वाचरितुं विधीन्।
नानुजानीष्व दौर्जन्ये मच्चित्तस्य प्रवृत्ततां।
न वा सुस्वादुभक्ष्याणां भोजनं मम तैः सह॥
५ मां दण्डयतु धर्म्मिष्ठः मंस्ये कारुण्यमेव तत्।
मां भर्त्सयतु मंस्ये तत् तैलं मस्तकशोभकं।
मामकीनशिरस्तस्माद् असुखं न समाप्स्यति।
अमीषान्त्वपकारेभ्यः करिष्ये प्रार्थनामहं॥
६ दृष्ट्वा स्वशासकानान्तु शैलस्थाने निपातनं।
ते मद्वाचो ग्रहीष्यन्ति यतस्ताः सन्ति सुप्रियाः॥
७ कर्षणेन विदीर्णायां भूमौ वीजानि यादृशं।
तादृशेव विकीर्य्यन्ते गर्त्तास्ये कीकसानि नः॥
८ हे प्रभो परमेश त्वां पश्यतो लोचने मम।
त्वामेव श्रद्दधानोऽस्मि मत्प्राणान् न निपातय॥
९ मन्निमित्तं मनुष्यैस्तैर्य उन्माथो नियोजितः।
मां तस्मादेव संरक्ष पाशेभ्यश्च कुकर्म्मणां॥
१० युगपत् स्वीयजालेषु निपतिष्यन्ति दुर्ज्जनाः।
उत्तीर्णो ऽहं गमिष्यामि स्वमार्गेण निरापदं॥

---

## १४२ द्वाचत्वारिंशच्छततमं गीतं।

विपत्तिकाले दायूदः प्रार्थना।

गह्वरमध्ये प्रार्थनाकारिणो दायूद उपदेशगीतं।

१ परमेश्वरमुद्दिश्याह्वानं कुर्व्वे ऽहमुच्चकैः।
परमेश्वरमुद्दिश्य प्रोच्चैः कुर्व्वे निवेदनं॥
२ तस्य साक्षात् स्वचित्तस्य चिन्तास्वोदीरयाम्यहं।
तस्य साक्षात् स्वकीयञ्च सङ्कटं वर्णयाम्यहं॥
३ क्षोभते मामकीनात्मा त्वन्तु वेत्सि ममायनं।

मम गन्तव्यमार्गे ते गुप्तं पाशमयोजयन्॥
पश्य मद्दक्षिणे कोऽपि मदभिज्ञो न विद्यते। ४
अहं नष्टाश्रयः कोऽपि मत्प्राणार्थं न चेष्टते॥
त्वां परेश समुद्दिश्य यदन्नित्यमहं ब्रुवे। ५
मामकीनाश्रयोऽसि त्वं मद्धनं जीवतां भुवि॥
गृहाण कातरोक्तिं मे यतोऽहं सुखघूर्णितः। ६
बाधकेभ्यश्च मां रक्ष मत्तो यत् ते महाबलाः॥
रोधान्मोचय मत्प्राणान् त्वन्नाम स्तोष्यते ततः। ७
वेष्टिष्ये धार्म्मिकैश्चाहं मम क्षेमे त्वया कृते॥

---

## १४३ त्रिचत्वारिंशच्छततमं गीतं।

रक्षार्थं परमेश्वरे प्रार्थना।

दायूदो धर्म्मगीतं।

हे प्रभो शृणु मे याञ्चां गृहाण प्रार्थनां मम। १
स्वीयसत्यत्वधर्म्माभ्यां देहि त्वं मह्यमुत्तरं॥
स्वीयदासेन सार्द्धं त्वं मा विचारसभां व्रज। २
यस्माद् यस्त्वत्पुरो धर्म्मी स कुत्रापि न जीवति॥
मत्प्राणान् बाधते द्वेषी भूमौ मे चूर्णयत्यसून्। ३
माञ्च वासयति ध्वान्ते प्राक्कालीयमृतानिव॥
क्षोभते मामकीनात्मा चित्तञ्चोद्विज्यतेऽन्तरे॥ ४
अनुस्मरामि प्राक्कालं सर्व्वा ध्यायामि ते क्रियाः। ५
साधितं तव हस्ताभ्यां कर्म्मानुचिन्तयामि च॥
त्वामेवाहं समुद्दिश्य विस्तृणोमि करौ मम। ६
त्वामाकाङ्क्षन्ति मत्प्राणाः सलिलाकाङ्क्षिभूमिवत्॥ सेला॥
हे परेश त्वया तूर्णं दीयतां मह्यमुत्तरं। ७
क्षीयते मामकीनात्मा मत्तो माच्छादयाननं।
तस्मिन्नाच्छादिते तुल्यो भविष्याम्यवटङ्गतैः॥
प्रात र्मां बोधय प्रीतिं यस्माद् विश्वसिमि त्वयि। ८
मार्गमादिश गन्तव्यं त्वां प्रत्यूर्द्ध्वमना अहं॥
द्वेषिभ्यो मम मां रक्ष त्वां परेशाहमाश्रये॥ ९

१० शाधि मां त्वदशाचारं त्वं यतोऽसि मदीश्वर।
सद्भावो यस्त्वदीयात्मा स भुवं मां नयेत् समं॥
११ स्वीयनामनिमित्तं मां त्वं परेश्वर जीवय।
स्वीयधर्म्मानुसारेण क्लेशादुद्धर मे मनः॥
१२ स्वीयकारुण्यहेतोश्च मद्विपक्षान् विनाशय।
छिन्धि मत्प्राणविद्वेष्टॄन् यतोऽहं तव किङ्करः॥

---

## १४४ चतुश्चत्वारिंशच्छततमं गीतं।

रक्षार्थे जयाय च परमेश्वरप्रशंसनं।

दायूदो गीतं।

१ परमेशो भवेद् धन्यः स मदीयशिलोच्चयः।
मत्पाणेः शिक्षको युद्धे मेऽङ्गुलीनाञ्च विग्रहे॥
२ मम श्रीर्मम दुर्गञ्च प्रासादो रक्षकश्च मे।
चर्म्म विश्वासपात्रं मे मद्वशे च प्रजादमः॥
३ हे परेश मनुष्यः को यत् सोऽभिज्ञायते त्वया।
को वा मानवसन्तानो यत् त्वया स विगण्यते।
४ वाष्पतुल्यस्य मर्त्त्यस्य घस्राश्छायेव चञ्चलाः॥
५ हे परेश भवान् व्योम नमयित्वावरोहतु।
भूधरा भवता स्पृष्टा धूममूर्द्धं क्षिपन्तु च॥
६ वज्रैर्विकिर मच्छत्रून् स्वशरैस्तान् विलुम्प च॥
७ हस्तावूर्द्धात् प्रसार्य्य त्वं ममोद्धारं विधेहि हि।
संरक्षागाधतोयान्मां करेभ्यश्च विदेशिनां।
८ मिथ्यावादि मुखं येषां दक्षहस्तश्च वञ्चकः॥
९ ईश्वर त्वां समुद्दिश्य गीतं गास्यामि नूतनं॥
नेवला दशतारेण तुभ्यं गास्याम्यहं किल॥
१० राज्ञां त्राणविधाता त्वं त्वन्तु खड्गाद् विनाशकात्।
स्वीयदासस्य दायूद उद्धारं प्राकरोः स्वयं।
११ त्वं मामुद्धर तेषाञ्च रक्ष हस्ताद् विदेशिनां।
मिथ्यावादि मुखं येषां दक्षहस्तश्च वञ्चकः॥
१२ वृक्षवद् यौवनेऽस्माकं पुत्राः सन्तु सतेजसः।

कन्याः प्रासादकोणस्थैस्तच्छितप्रस्तरैः समाः॥
नानाविधधनैः पूर्णा अस्मत्कोषा भवन्तु च। १३
सन्तु रथ्यासु नो मेषाः सहस्राण्ययुतानि च।
धुर्वहाः सन्तु नो गावो भङ्गोऽपायश्च मा भवेत्। १४
अस्माकं सन्निवेशेषु विलापः श्रूयतां नहि।
धन्यास्ते मानवा येषाम् अवस्था तादृशी भवेत्। १५
धन्यास्ताश्च प्रजा यासाम् ईश्वरोऽस्ति परेश्वरः॥

---

## १४५ पञ्चचत्वारिंशच्छततमं गीतं।

इस्रीयभाषया ककारादिगीतं तच्च शरणागतलोकेष्वीश्वरानुग्रहस्य वर्णनं।

दायूदा कृतं प्रशंसनं।

त्वामेवाहं नविष्यामि हे राजन् हे मदीश्वर। १
धन्यवानन्तकालेषु प्रवदिष्यामि नाम ते॥
त्वदीयधन्यवादञ्च करिष्यामि दिने दिने। २
त्वदीयनामधेयञ्च प्रशंसिष्यामि सर्व्वदा॥
महान् अति प्रशंस्यश्च विद्यते परमेश्वरः। ३
महिमा तस्य केनापि सन्धातुं नहि शक्यते॥
स्तोष्यन्ते त्वत्क्रिया लोकैरापौरुषपरम्परं। ४
तावकीनप्रभुत्वस्य वर्णना च करिष्यते॥
महातेजोविशिष्टस्य त्वत्प्रतापस्य गौरवं। ५
तवाश्चर्य्यक्रियाश्चाधि ध्यानं कारिष्यते मया॥
त्वदीयभीमकार्य्याणां वक्ष्यन्ति विक्रमं जनाः। ६
तावकीनमहिमञ्च करिष्ये वर्णनामहं॥
सौजन्यं बहुरूपं ते स्मृत्वा व्याख्यास्यते जनैः। ७
त्वदीयधर्म्महेतोश्च तैरुल्लासः करिष्यते॥
दयावान् अनुकम्पी च विद्यते परमेश्वरः। ८
क्रोधे विलम्बकारी स वरिष्ठोऽनुग्रहे तथा॥
सज्जनः सकलेष्वेव स्मृतः स परमेश्वरः। ९
वर्त्तते करुणा तस्य तत्सृष्टे सर्व्ववस्तुनि॥
तव सर्व्वाणि कर्म्माणि त्वां स्तुवन्ति परेश्वर। १०

साधवस्तव लोकाश्च धन्यं त्वां प्रवदन्ति हि ॥
११ तावकीनस्य राज्यस्य गौरवं कीर्त्तयन्ति ते।
तावकीनप्रभुत्वस्य वर्णनाञ्च प्रकुर्व्वते ॥
१२ ज्ञापयन्तो नृसन्तानान् तावकीनपराक्रमं।
महातेजोविशिष्टञ्च त्वद्राजत्वस्य गौरवं ॥
१३ तावकीनन्तु यद्राज्यं राज्यं तत् सर्व्वकालिकं।
स्थिरन्ते चाधिकारित्वम् आपौरुषपरम्परं ॥
१४ पतनोन्मुखलोकानाम् आलम्बो परमेश्वरः।
नतानामपि सर्व्वेषां नृणामुत्थापकश्च सः ॥
१५ सर्व्वेषां प्राणिनां दृष्टिस्त्वामालोक्य प्रतीक्षते।
उपयुक्ते च काले त्वं तेभ्यो भक्ष्यं प्रयच्छसि ॥
१६ त्वया मुक्तकरेणाशा पूर्य्यते सर्व्वजीविनां ॥
१७ स्वीयमार्गेषु सर्व्वेषु धार्म्मिकोऽस्ति परेश्वरः।
स्वीयकर्म्मसु सर्व्वेषु साधुशीलश्च स स्मृतः ॥
१८ परमेशार्थिनां नृणां समीपस्थः परेश्वरः।
सकलानां तदासन्ने सत्यप्रार्थनकारिणां ॥
१९ तस्माद् बिभ्यति ये तेषाम् अभीष्टं तेन साध्यते।
श्रुत्वा कातरशब्दञ्च तेषां त्राणं विधीयते ॥
२० परेशं प्रीयमाणानां रक्षकः परमेश्वरः।
दुर्जनानाञ्च सर्व्वेषां विनाशं विदधाति सः ॥
२१ प्रशंसां परमेशस्य मम भाषिष्यते मुखं।
सर्व्वप्राणी सदा तस्य पूतं नाम च वन्दतां ॥

---

## १४६ षट्चत्वारिंशच्छततमं गीतं।

परमेश्वरस्य गुणकारणात् तस्य प्रशंसनं।

१ प्रशंसा परमेशस्य युष्माभिः सम्प्रकीर्त्त्यतां।
प्रशंसां परमेशस्य कुरु त्वं हे मनो मम ॥
२ यावज्जीवं करिष्यामि प्रशंसां परमेशितुः।
प्राणधारणपर्य्यन्तं प्रणंस्यामि मदीश्वरं ॥
३ विश्वासो नैव युष्माभि र्नरेन्द्रेषु विधीयतां।

न कस्मिंश्चिन्नृसन्ताने स यस्मात् त्रातुमक्षमः ॥
गते तत्प्राणवायौ स याति मृण्मयतां पुनः । ४
तस्मिन्नेव दिने तस्य विप्रणश्यन्ति कल्पनाः ॥
स धन्यो यस्य साहाय्यं कुर्य्याद् याकूब ईश्वरः । ५
प्रत्याशा स्थापिता येन स्वप्रभौ परमेश्वरे ॥
स्वर्गमर्त्त्यसमुद्राणां तन्मध्ये यद्यदस्ति च । ६
तस्य सर्व्वस्य स स्रष्टा सर्व्वदा सत्यसेवकः ॥
क्लिष्टानां धर्म्मनिर्णेता क्षुधितेभ्योऽन्नदायकः । ७
कारावद्धमनुष्याणां मोचकोऽस्ति परेश्वरः ॥
दर्शनेन्द्रियहीनेभ्यो नेत्रदाता परेश्वरः । ८
लोकानाम् आनतानाञ्चोत्थापकः परमेश्वरः ।
धार्म्मिकेषु मनुष्येषु प्रेमकारी परेश्वरः ॥
प्रवासकारिलोकानां रक्षकोऽस्ति परेश्वरः । ९
विधवास्तातहीनांश्च बालान् उपकरोति सः ।
किन्तु दुर्वृत्तलोकानां गतिं स क्षोभयिष्यति ॥
सर्व्वकालेषु राजत्वं परमेशः करिष्यति । १०
ईश्वरस्तव हे सीयोन् आपौरुषपरम्परं ॥
प्रशंसा परमेशस्य युष्माभिः सम्प्रकीर्त्त्यतां ॥

---

## १४७ सप्तचत्वारिंशच्छततमं गीतं ।

परमेश्वरस्य कर्म्मकारणात् तस्य प्रशंसनं ।

प्रशंसा परमेशस्य युष्माभिः सम्प्रकीर्त्त्यतां । १
अस्मदीयेश्वरोद्देश्यं प्रगानं यत उत्तमं ।
यतो हेतोः सुरम्यं तत् प्रशंसा च मनोहरा ॥
क्रियते परमेशेन निर्म्मितिर् यिरूशालमः । २
इस्रायेलो विकीर्णांश्च स सङ्गृह्णाति मानवान् ॥
भग्नान्तःकरणानाञ्च लोकानां स चिकित्सकः । ३
स्वयं तेषां क्षतानाञ्च बन्धनं विदधाति सः ॥
ताराणामपि या सङ्ख्या सा तेनैव निरूपिता । ४
नामान्यादाय तासां स एकैकामाह्वयत्यपि ॥

५ महान् स प्रभुरस्माकं महाशक्तिसमन्वितः।
परिमाणातिरिक्तास्ति तदीया सुविवेचना॥
६ परमेश्वर एवास्ति नम्राणामुपकारकः।
किन्तु दुर्वृत्तलोकानां भूमिं यावन्निपातकः॥
७ परमेश्वरमुद्दिश्य यूयं स्तोत्रेण गायत।
अस्मदीश्वरमुद्दिश्य गीतं गायत वीणया॥
८ मेघैराकाशमाच्छाद्य भुवे तोयं ददाति सः।
गिरीनाज्ञाप्य तैरेव तृणान्युत्पादयत्यपि॥
९ पशुभ्यः स्वकलेभ्यो हि भक्ष्यं तेन प्रदीयते।
काकानां शावकेभ्योऽपि विक्रोशद्भ्यो जिघत्सया॥
१० वाजिनो विक्रमे तस्य सन्तोषो जायते नहि।
चरणावपि वीरस्य स हि नैवानुरुध्यते॥
११ तस्माद् बिभ्यति ये लोकास्तान् परेशोऽनुरुध्यते।
तद्दयां ये प्रतीक्षन्ते स तेष्वेव प्रतुष्यति॥
१२ यिरूशालम् कुरुष्व त्वं परेशस्य प्रशंसनं।
हे सियोन्नगरि त्वञ्च धन्यं ब्रूहि निजेश्वरं॥
१३ सुदृढार्गलयुक्तानि त्वद्द्वाराणि करोति सः।
त्वदन्तर्वासिपुत्रेभ्य आशिषञ्च ददाति सः॥
१४ तावकीनञ्च सीमानं शान्तियुक्तं करोति सः।
गोधूमैरुत्तमैश्च त्वां सन्तर्पयति स स्वयं॥
१५ स्वकीया भारती तेन धरां प्रति प्रहीयते।
अतीव द्रुतया गत्या तस्य वाणी प्रधावति॥
१६ ऊर्णायुलोमवत् तेन हिमानी च प्रदीयते।
तुषारीयकणास्तेन विकीर्य्यन्ते च भस्मवत्॥
१७ प्रक्षिप्यन्ते तथा तेन हिमखण्डानि पिण्डवत्।
स्थातुं तदीयशीतस्य सम्मुखे केन शक्यते॥
१८ तेन स्वीयवचः प्रेष्य सकलं क्रियते द्रवं।
स्ववायौ चालिते तेन सर्व्वं क्षरति तोयवत्॥
१९ याकूबं निजवाक्यं स इस्रायेलं निजान् विधीन्।
स्वकीयां राजनीतिञ्च परिज्ञापितवान् स्वयं॥
२० कांश्चन भिन्नजातीयान् प्रतीत्थं नाचचार सः।

तदीयां राजनीतिञ्च नैव जानन्ति ते जनाः॥
प्रशंसा परमेशस्य युष्माभिः सम्प्रकीर्त्त्यतां॥

## १४८ अष्टचत्वारिंशच्छततमं गीतं।

परमेश्वरस्य प्रशंसनाय स्थावरजङ्गमेषु विनीतिः।

प्रशंसा परमेशस्य युष्माभिः सम्प्रकीर्त्त्यतां। १
स्तुध्वं परेश्वरं स्वर्गे स्तुध्वमुच्चस्थले तु तं॥
स्तुध्वं हे तस्य दूताः स्तुध्वं हे तद्बलानि तं॥ २
स्तवाथां सूर्य्यचन्द्रौ तं स्तुध्वं दीप्राण्युडूनि तं॥ ३
स्तुध्वं तं हे दिवः प्रोच्चा द्योरूर्द्धस्थाम्बु तं स्तुहि॥ ४
स्तूयतां सकलैरेतै र्नामधेयं परेशितुः। ५
यस्मादुच्चार्य्य तेनाज्ञां स्टष्टिस्तेषां समापिता॥
तेनैवानन्तकालार्थं तेषां संस्थापनं कृतं। ६
प्रदत्तश्च विधिस्तेभ्यो नातिगम्यः कथञ्चन॥
स्तुध्वं परेश्वरं मर्त्ये तिमयोऽगाधसागराः॥ ७
वह्निः शिला हिमं धूमो झञ्झा तद्वाक्यसाधिका। ८
गिरयः क्षुद्रशैलाश्च फलदा एरसद्रुमाः। ९
जन्तवः पशवः सर्व्वे कीटाः पतत्त्रिणः खगाः। १०
महीपालाः प्रजावर्गा अध्यक्षा देशशासकाः। ११
युवानश्च युवत्यश्च प्राचीना बालकास्तथा। १२
स्तूयतां सकलैरेतै र्नामधेयं परेशितुः। १३
यद्धेतोः केवलं तस्य नामधेयं समुन्नतं।
स्वर्गमर्त्त्यौ च शोभेते महता तस्य तेजसा॥
स्वप्रजानां कृते तेन सहजे शृङ्गमुन्नतं॥ १४
निजसाधुमनुष्याणां सर्व्वेषां स्तुतिभाजनं।
निजासन्नप्रजानामिस्रायेलीयवंश्यानां कृते॥
प्रशंसा परमेशस्य युष्माभिः सम्प्रकीर्त्त्यतां॥

## १४९ ऊनपञ्चाशच्छततमं गीतं।

जयकारणात् परमेश्वरस्य प्रशंसा।

१ प्रशंसा परमेशस्य युष्माभिः सम्यकीर्त्त्यतां।
परमेश्वरमुद्दिश्य गीतं गायत नूतनं।
साधूनाञ्च सभामध्ये कुरुध्वं तत्प्रशंसनं॥
२ इस्रायेल् कुरुतां हर्षं स्वकीये सृष्टिकर्त्तरि।
सीयोनश्चात्मजाः सर्व्वे उल्लसन्तु स्वराजनि॥
३ तदीयनामधेयञ्च नर्त्तनेन स्तुवन्तु ते।
गानं मृदङ्गवीणाभ्यां तमुद्दिश्य च कुर्व्वतां॥
४ यतो हेतो निजान् लोकान् परमेशोऽनुरुध्यते।
विदधाति च नम्राणां परित्राणेन शोभनं॥
५ कुर्व्वतां साधवो लोका उल्लासं गौरवान्विताः।
स्वखट्वासु शयानाश्च हर्षनादं प्रकुर्व्वतां॥
६ धृत्वेशस्य स्तवान् कण्ठे द्विधारांश्च करैरसीन्।
७ प्रतीकारो ऽन्यजातीनां दण्डनञ्च विदेशिनां।
८ तदीयभूपतीनाञ्च शृङ्खलैरेव बन्धनं।
मुख्यानां लौहपाशैश्च रोधनं तैः करिष्यते॥
९ लिखिता च विचाराज्ञा तेष्वेत्थं साधयिष्यते।
प्रताप एष सर्व्वेषु तस्य साधुषु वर्त्तते॥
प्रशंसा परमेशस्य युष्माभिः सम्यकीर्त्त्यतां॥

---

## १५० पञ्चाशच्छततमं गीतं।

नानाप्रकारेण परमेश्वरस्य प्रशंसनाय विनीतिः।

१ प्रशंसा परमेशस्य युष्माभिः सम्यकीर्त्त्यतां।
ईश्वरस्य प्रशंसैव क्रियतां धर्म्मधामनि।
प्रशंसा क्रियतां तस्य व्योम्नि तच्छक्तिसूचके॥
२ प्रशंसा क्रियतां तस्य स्वमहाकर्म्मणां कृते।

प्रशंसा क्रियतां तस्य स्वमहैश्वर्य्यकारणात्॥
प्रशंसा क्रियतां तस्य तूरीणां ध्वनिभिः सह। ३
प्रशंसा क्रियतां तस्य स्वनै र्नेवलवीणयोः॥
प्रशंसा क्रियतां तस्य मृदङ्गै र्नर्त्तनेन च। ४
प्रशंसा क्रियतां तस्य सुषिरेण ततेन च॥
प्रशंसा क्रियतां तस्य घनैः सुशब्दनादितैः। ५
प्रशंसा क्रियतां तस्य घनैरुत्सवसूचकैः॥
प्रशंसा परमेशस्य क्रियतां सर्व्वजीविभिः। ६
प्रशंसा परमेशस्य युष्माभिः सम्प्रकीर्त्त्यतां॥

---

# सुलेमनो हितोपदेशः।

---

## १ अध्यायः।

१ आभाषः ७ तत्त्वज्ञानस्य कथनं १० पापिलोकेभ्योऽवश्यं पृथग् भवितव्यता। २० प्रज्ञायाः कथनं २४ प्रज्ञाया भर्त्सनकथनञ्च।

१ इस्रायेलीयवंशस्य यो दायूदाख्यभूपतिः।
कृतो हितोपदेशोऽयं तत्सुतेन सुलेमना।
२ प्रज्ञां यच्छति शिक्षाञ्च बुद्धिवाचाञ्च बोधनं॥
३ ददाति ज्ञानदां शिक्षां धर्म्मं नीतिं यथार्थतां।
४ विद्यां यच्छति चाज्ञेभ्यो युवभ्यो ज्ञानपाटवे॥
५ एनं श्रुत्वा नरो ज्ञानी पाण्डित्यं वर्द्धयिष्यति।
बुद्धिमांश्च मनुष्योऽपि लप्स्यतेऽत्र सुमन्त्रणाः॥
६ श्लोको वाणी च गूढार्था नराणाञ्च मनस्विनां।
वाचः सूत्राणि चैतेषां सर्व्वेषां बोधमाप्स्यति॥
७ परमेशाद्धि या भीतिः स प्रज्ञाया उपक्रमः।
प्रज्ञां सदुपदेशञ्च तुच्छीकुर्व्वन्त्यबुद्धयः॥
८ हे मत्पुत्र स्वतातस्य सूपदेशं निशामय।
स्वकीयमातुरादेशो न परित्यज्यतां त्वया॥
९ यस्माच्चार्व्वी शिरोमाला कण्ठभूषा च ते तव॥
१० पापिषु लोभयत्सु त्वां मैवाङ्गीकुरु मत्सुत॥
११ त्वां वदिष्यन्ति ते लोका अस्माभिः सार्द्धमेहि हि।
नराणां रक्तपाताय स्थास्यामो निभृते वयं।
विचेष्टिष्यामहे धर्त्तुं निष्कलङ्कान् अकारणं॥
१२ पातालवद् ग्रसिष्यामो वयं जीवत एव तान्।
अखण्डांस्तान् ग्रसिष्यामो गर्त्तावरोहिणो यथा॥
१३ अत्युत्कृष्टानि वित्तानि परिलप्स्यामहे ततः।
स्वगेहान् पूरयिष्यामो वस्तुभि र्लोठितै र्वयं॥
१४ अस्माभिः सार्द्धमेव त्वं समानांशी भविष्यसि।

अस्माकं सकलानाञ्च कोष एको भविष्यति ॥
मत्पुत्र त्वं न तैः सार्द्धं याहि तेन कुवर्त्मना। १५
त्वं तेषां मार्गतः स्वीयौ चरणौ च निवारय॥
यतो हेतोरनिष्टाय तेषां पादा द्रवन्ति हि। १६
ते च शोणितपाताय भवन्ति द्रुतगामिनः॥
परन्तु पक्षिणां साक्षाज्जालं विस्तार्य्यते वृथा॥ १७
स्वीयशोणितपाताय गुप्तास्तिष्ठन्ति ते नराः। १८
स्वीयप्राणविनाशाय चेष्टन्ते व्याधवच्च ते॥
अन्यायात् कृतलाभस्य धनिनस्तादृशी गतिः। १९
स्वीयस्वामिन एवासौ लाभः प्राणापहारकः॥
वहिः प्रक्रोशति प्रज्ञा रथ्यासूच्चैश्च भाषते॥ २०
जनताकीर्णहट्टेषु सा करोति महाध्वनिं। २१
पुरद्वारस्य मार्गे च गदति स्वीयभारतीं॥
बालिशत्वे कियत्कालं यूयं तोक्ष्यथ बालिशाः। २२
निन्दायाञ्च कियत्कालं तुष्टिं यास्यथ निन्दकाः।
हे निर्बोधाः कियत्कालं ज्ञानद्वेषं करिष्यथ॥
यूयं मदीयवाग्दण्डं प्रति वर्त्तितुमर्हथ। २३
पश्चाद्धं व्याहरिष्यामि युष्मान् प्रति मतिं मम।
युष्मान् संज्ञापयिष्यामि मामकीनवचांसि च॥
मयाह्वाने कृते यूयं यद् आयातुमनिच्छवः। २४
मम विस्तृतहस्तस्य वाक्यं श्रोतुञ्च नैच्छत॥
अवाज्ञासिष्ट साद्यन्तां सकलां मम मन्त्रणां। २५
मामकीनञ्च वाग्दण्डं ग्रहीतुं न समैच्छत॥
तस्मान्मयापि युष्माकं दुर्दशायां हसिष्यते। २६
आशङ्कायाञ्च युष्माकं घटितायां कथिष्यते॥
यदायास्यति युष्माकम् आशङ्का चक्रवातवत्। २७
झञ्झावच्च यदा युष्मान् उपस्थास्यति दुर्दशा।
आयासः परितापश्च यदा युष्मान् उपैष्यतः॥
तदा तैरहमाहूतः प्रदास्याम्युत्तरं नहि। २८
तैश्च मां यत्नतोऽन्विष्य्‌ममोद्देशो न लप्स्यते॥
यतो ज्ञानमवज्ञाय निराकृत्य प्रभोर्भयं। २९

३० मन्त्रणा मम तैस्त्यक्ता वाग्दण्डश्च विगर्हितः ॥
३१ स्वाचारस्य फलं तस्मात् तै र्लोकैरुपभोक्ष्यते।
स्वकीयमन्त्रणाभिश्च तृप्तिस्तैः परिलप्स्यते ॥
३२ यस्माद् बालिशलोकानां भ्रंशस्तान् निहनिष्यति।
विनङ्क्ष्यन्ति च निर्बोधाः स्वनिश्चिन्ततया किल ॥
३३ यस्तु शृणोति मद्वाक्यं स निर्विघ्नं निवत्स्यति।
स चानिष्टभयान्मुक्तः स्वस्थचित्तो भविष्यति ॥

---

# २ द्वितीयोऽध्यायः।

१ प्रज्ञाद्वारा रक्षणं १० पापिभ्यो निस्तरणं २० सत्पथेन गमनञ्च।

१ हे मदीयात्मज त्वं चेद् गृह्णीया वचनानि मे।
मामकीननिदेशांश्चेद् गोपये र्निजमानसे ॥
२ प्रज्ञायां निदधीथाश्च स्वकीयश्रवणेन्द्रियं ॥
३ त्वं चेद् विवेचनायाञ्च निजचित्तं प्रवर्त्तयेः।
समाह्वयेश्च चेद् बुद्धिम् उच्चकैश्च विवेचनां ॥
४ तांश्च रौप्यवद् अन्विष्ये र्मार्गये र्गुप्तरत्नवत् ॥
५ परमेश्वरभक्तिं र्या त्वया सा तर्हि भोत्स्यते।
तदानीमीश्वरस्यैव ज्ञानञ्चावाप्स्यते त्वया ॥
६ प्रज्ञादाता यतो हेतोः स्वयमस्ति परेश्वरः।
तस्यैव वक्त्रतो ज्ञानं सुबुद्धिश्च प्रवर्त्तते ॥
७ लोकानामृजुचित्तानां कुशलं सञ्चिनोति सः।
सिद्धाचारमनुष्याणां फलकोऽस्ति स एव च ॥
८ तेनैव न्यायमार्गाणां क्रियते परिपालनं।
स्वीयसाधुमनुष्याणां गतिस्तेन च रक्ष्यते ॥
९ ततो हेतोस्त्वया तर्हि धर्म्मो न्यायश्च भोत्स्यते।
ज्ञास्यते च त्वया सर्व्वं सारल्यादि शुभायनं ॥
१० तवान्तःकरणं प्रज्ञा यस्मिन् काले प्रवेक्ष्यति।
मनसे तावकीनाय ज्ञानं रोचिष्यते यदा ॥
११ परिणामप्रदर्शित्वं तदा त्वां पालयिष्यति।
सुविवेचनया सम्यक् त्वञ्च रक्षिष्यसे तदा ॥

उद्धृतः पापिनो मार्गाद् वक्रभाषिनरादपि ॥ १२
गन्तुं तामसरथ्यासु त्यक्तसारल्यमार्गतः ॥ १३
असत्कर्म्मणि सन्तुष्टात् कुकल्पेषु प्रफुल्लतः ॥ १४
वक्रताल्पमार्गाच जिह्मवर्त्मनिगामिनः ॥ १५
उद्धृतः परदारेभ्यः स्निग्धवाचः परस्त्रियः ॥ १६
या सन्त्यक्तवती स्वीयं मित्रं यौवनकालिकं। १७
स्वकीयेश्वरसम्बन्धिनियमं या च विस्मृता ॥
यतो हेतो गृहं तस्या नमति प्रलयं प्रति। १८
तस्याः सर्व्वाणि वर्त्मानि प्रेतलोकं प्रयान्ति च ॥
गत्वा तस्याः समीपन्तु नैव कोऽपि निवर्त्तते। १९
नैव जीवनवर्त्मानि वाप्नोति कदाचन ॥
तस्माद् भद्रमनुष्याणां पदव्यां त्वं व्रजिष्यसि ॥ २०
धार्म्मिकाणाञ्च लोकानां पन्थानं पालयिष्यसि ॥
मानवाः सरलात्मानः सन्निवत्स्यन्ति मेदिनीं। २१
सिद्धाचारमनुष्याश्च तत्र स्थास्यन्ति सुस्थिराः ॥
देशस्य मध्यतः सर्व्वे उच्छेत्स्यन्ते च दुर्जनाः। २२
सर्व्वे चोत्पाटयिष्यन्ते तस्य मध्यात् प्रवञ्चकाः ॥

---

## ३ तृतीयोऽध्यायः।

१ आज्ञां पालयितुं विनयः ५ परमेश्वरे विश्वसितुं विनयः ७ ईश्वरं [illegible]तुं विनयः ११ ईश्वरस्य शास्तिं स्वीकर्त्तुं विनयः १३ ज्ञानेन लाभः २१ [illegible]नस्य फलं २७ ज्ञानोपदेशश्च।

हे मत्पुत्र ममादेशं त्वं कदापि न विस्मरेः। १
तवान्तःकरणं सर्व्वान् मद्विधीन् परिरक्षतु ॥
यस्मात् तवायुषो दैर्घ्यं जीवनस्य च वत्सरान्। २
शान्तिञ्च वर्द्धयित्वा ते तुभ्यं दास्यन्ति निश्चितं ॥
करुणासत्यते यत् त्वां न जहीतां कदाचन। ३
तद् बधान स्वकण्ठे ते चित्तपत्रे च ते लिख ॥
तत् कृत्वा परमेशस्य मनुष्याणाञ्च सम्मुखे। ४
त्वयानुग्रह उत्कृष्टं कुशलञ्चोपलप्स्यसे ॥

५ सर्व्वान्तःकरणेनैव त्वं श्रद्धत्स्व परेश्वरं।
मा कुर्व्वीथा निजां बुद्धिं तावकीनावलम्बनं॥
६ तव सर्व्वगतिष्वेव स प्रतिस्मर्य्यतां त्वया।
तदा स तव वर्त्मानि सरलाणि करिष्यति॥
७ मा भवे ज्ञानसम्पन्नः स्वीयदृष्टिविचारतः।
परमेश्वरतो भीतो भवेः पापात् पराङ्मुखः॥
८ भविता वपुषः स्वास्थ्यम् आर्द्रतास्थ्नाञ्च तत् तव॥
९ त्वं स्ववित्तस्य दानेन सम्मन्यस्व परेश्वरं।
आदिजातेन सर्व्वस्य तवायस्य फलेन च॥
१० वसुभिः पूरयिष्यन्ते कोषागाराणि ते तदा।
गोस्तनीरसभाण्डानि भविष्यन्त्याप्लुतानि च॥
११ हे मत्पुत्त्र परेशस्य शास्तिं त्वं न निराकुरु।
तेन सम्भर्त्सितस्यापि न परिक्लाम्य कर्हिचित्॥
१२ यस्माद् यः परमेशस्य प्रियः स तेन भर्त्स्यते।
जनकेन यथा पुत्त्रो मनःसन्तोषकारकः॥
१३ धन्यं ब्रवीमि तं मर्त्त्यं प्रज्ञा येनाधिगम्यते।
धन्यमेव मनुष्यं तं बुद्धिर्येनोपलभ्यते॥
१४ यस्माद् रजतवाणिज्यात् तस्या वाणिज्यमुत्तमं।
शातकुम्भस्य लाभाच्च तस्या लाभोऽतिरिच्यते॥
१५ मूल्यमस्ति महत् तस्या मुक्तानामपि मूल्यतः।
तव हर्षदवस्तूनि तत्तुल्यानि न सन्ति हि।
१६ दीर्घायु र्विद्यते यस्य तस्याः सव्येतरे करे।
ऐश्वर्य्यं गौरवञ्चापि तस्या वामकरे स्थितं॥
१७ तस्या यावन्ति वर्त्मानि रम्यवर्त्मानि तानि हि।
पन्थानः सकलास्तस्या भवन्ति शान्तिदायकाः॥
१८ ये तां धरन्ति तेषां सा भवत्यमृतपादपः।
यस्तामालम्बते सोऽपि नरो धन्यो भविष्यति॥
१९ प्रज्ञया स्थापयामास धरामूलं परेश्वरः।
सुविवेचनया तेन निर्म्मितं व्योममण्डलं॥
२० तस्य ज्ञानेन गम्भीराश्छिद्ररे च जलाशयाः।
आकाशमण्डलाच्चापि निशाजलं प्रवर्ष्यते॥

हे मनुष्य स्वचक्षुर्भ्यां नानुज्ञायापसर्पणं। ११
परिणामप्रदर्शित्वं कुशलत्वाभिरक्ष हि॥
मनसे तावकीनाय जीवनं ते प्रदास्यतः। १२
त्वदीयकण्ठदेशस्य भूषणं च भविष्यतः॥
तदानीं निजमार्गेण त्वं व्रजिष्यसि निर्भयं। १३
नैव त्वत्पादयो बाधा गमने च भविष्यति॥
शयानस्य तव त्रासो न भविष्यति कश्चन। १४
त्वं प्रस्वप्स्यसि निद्रा च सुखदा ते भविष्यति॥
नैव प्राप्स्यसि शङ्कां त्वं भये ऽकस्मादुपस्थिते। १५
न वा दुष्टमनुष्याणां सर्व्वनाशे समागते॥
परमेशो यतो हेतोराश्रयस्ते भविष्यति। १६
उन्माथात् तव पादञ्च स संरक्षिष्यति स्वयं॥
हिताधिकारिलोकात् त्वं नोपसंहर तद्धितं। १७
यत् कर्त्तुं तावकीनेन पाणियुग्मेन शक्यते॥
याहि त्वं पुनरायाहि श्वो दास्यामीति वागपि। १८
त्वया हस्तगतार्थेन स्वमित्राय न कथ्यतां॥
एकस्थाने त्वया सार्द्धं येन निर्भयमुष्यते। १९
अहितं तस्य मित्रस्य त्वं कदापि न चिन्तय॥
अहितं तव यो लोको न करोति कथञ्चन। ३०
विवादं तेन सार्द्धं त्वं मा कुर्व्वीथा अकारणं॥
दौरात्म्याचारिलोकाय त्वं मैवेर्ष्य कदाचन। ३१
मैव मन्यस्व गन्तव्यं तस्य किञ्चन वर्त्म वा॥
वक्रभावं नरं यस्माद् गर्हते परमेश्वरः। ३२
सरलाचारलोकैस्तु सार्द्धं तस्यास्ति मित्रता॥
अभिशापः परेशस्य वर्त्तते पापिनो गृहे। ३३
आशिषं धार्म्मिकाणाञ्च वासाय प्रददाति सः॥
उपहासकलोकानाम् उपहासक एव सः। ३४
किन्तु तेनैव नम्रेभ्यः प्रसादाद् दीयते वरः॥
सम्भ्रमो ज्ञानिनां दायो मूढानाञ्चोन्नतिस्त्रपा॥ ३५

# ४ चतुर्थोऽध्यायः।

१ सुलेमनो विनयवाक्यं १० तद्वाक्यस्य फलं १४ पापिभ्यः पृथग् भवितुं विनयः २० सावधानो भवितुं विनयश्च।

१ हे वत्साः पितुरादेशो युष्माभि र्विनिशम्यतां।
आबोद्धुं सुविचारञ्च स्वीयश्रोत्रं निधीयतां॥
२ यतोऽहमुत्तमां शिक्षां युष्मभ्यं दातुमुद्यतः।
युष्माभिस्तोपदेशो मे न त्यक्तव्यः कदाचन॥
३ अहमप्यभवं यस्मात् निजतातस्य नन्दनः।
सुकुमारो ऽद्वितीयश्च स्वमातु र्दृष्टिगोचरे॥
४ स तु मां शिक्षयन्नाह मद्वाचो मनसा धर।
परिपालय चाज्ञा मे जीवनं लप्स्यसे तदा॥
५ परिक्रीणीष्व विद्वत्तां परिक्रीणीष्व शेमुषीं।
मैव विस्मर मद्वाचो मा भूस्ताभ्यः पराङ्मुखः॥
६ त्वया मा त्यज्यतां प्रज्ञा तदा सा त्वामविष्यति।
प्रेमाणां कुरु तस्याश्च त्वां रक्षिष्यति सा तदा॥
७ श्रेयसी सर्व्वतः प्रज्ञा तस्मात् प्रज्ञामुपार्जय।
त्वदीयसर्व्वसम्पत्त्या क्रीणीहि सुविवेचनां॥
८ तां शिरोवर्त्तिनीं कुर्य्याः सा त्वामुन्नमयिष्यति।
तां समालिङ्ग सा तर्हि त्वां सम्मान्यं करिष्यति॥
९ सा तुभ्यं रमणीयञ्च शिरोवेष्टं प्रदास्यति।
शोभाल्पकिरीटेन त्वाञ्च संवेष्टयिष्यति॥
१० हे मत्पुत्र त्वया श्रुत्वा गृह्यन्तां वचनानि मे।
बहुवर्षान्वितं तर्हि त्वदीयायु र्भविष्यति॥
११ प्रज्ञाया एव पन्थानमहं त्वां दर्शयामि हि।
ऋजुताया महावर्त्म त्वामहं गमयामि च॥
१२ गमने पादपातस्ते तस्मान्नो सङ्कुचिष्यति।
धावने स्खलनञ्चापि तव नो सम्भविष्यति॥
१३ दृढमेव धरेः शिक्षां स्रस्तहस्तो भवे नहि।
मद्यायत्नेन तां रक्ष यस्मात् सा तव जीवनं॥
१४ अधर्म्माचारिलोकानां वर्त्म त्वं प्रविशे नहि।

दुश्चरित्रमनुष्याणाम् पदव्यामपि मा व्रजेः॥
ततो दूरं परिक्राम्य नैव गच्छेस्तदन्तिकं। १५
ततः पराङ्मुखो भूत्वा स्वमार्गेऽग्रसरो भवेः॥
यस्माद् अकृतपापानां तेषां निद्रा न जायते। १६
अकृते च परभ्रंशे स्वप्नस्तेषां विलुप्यते॥
ते समश्नन्त्यधर्म्मान्नं द्रोहमद्यं पिबन्ति च॥ १७
धार्म्मिकाणान्तु यः पन्थाः स भानु र्दीप्तिमानिव। १८
सिद्धिं माध्याह्निकां प्राप्य तेजसा वर्द्धते सदा॥
दुर्जनानाञ्च यो मार्गः सद्घनतिमिरेण सः। १९
केन ते प्रस्खलिष्यन्ति तत् तै र्ज्ञातुं न शक्यते॥
हे मत्पुत्र मदीयोक्त्यां त्वया चित्तं निवेश्यतां। २०
मामकीनेषु वाक्येषु त्वया श्रोत्रं निधीयतां॥
त्वं स्वीयदृष्टितस्तेषां नानुजानीहि निर्गमं। २१
निजान्तःकरणस्यैव मध्ये तानि सुगोपय॥
तान्यवाप्नोति यः कश्चित् जीवनं तस्य तानि हि। २२
तदीयसकलाङ्गानां रोगनाशकराणि च॥
सर्व्वयत्नान्महायत्नं कृत्वा रक्ष निजान्तरं। २३
तस्मादेव यतो हेतो र्जीवनस्योद्गमो भवेत्॥
स्वसान्निध्याच्च वक्त्रस्य वक्रतामपसारय। २४
ओष्ठयोरपि कौटिल्यं स्वतो दूरीकुरुष्व च॥
ऋजुदृष्टिं प्रकुर्व्वातां तावकीने तु लोचने। २५
त्वत्प्रत्यक्षमवक्रौ च वीक्षेतां नयनच्छदौ॥
स्मृतिः स्वकीयपादस्य त्वया सम्यग् विविच्यतां। २६
भविष्यन्ति स्थिरास्तर्हि सकला गतयस्तव॥
सव्यां प्रत्यपसव्यां वा दिशं न भ्राम्य कर्हिचित्। २७
चरणं तावकीनञ्च कुमार्गादपसारय॥

---

## ५ पञ्चमोऽध्यायः।

१ सुलेमनो विनयकथनं ३ वेश्याया विरुद्धकथनं १५ विवाहप्रशंसनञ्च।

प्रज्ञायां मम हे पुत्र त्वं स्वचित्तं निवेशय। १

मदीयसुविचारे त्वं स्वीयश्रोत्रे निधत्स्व च॥
२ धारयिष्यसि तर्हि त्वं परिणामप्रदर्शितां।
तावकीनाधराभ्याञ्च ज्ञानं रक्षिष्यते तदा॥
३ ओष्ठौ वाराङ्गनायास्तु परिस्रावयतो मधु।
तैलतोऽपि स्त्रियास्तस्याः काकुदं मेदुरं भवेत्॥
४ फलं पारत्रिकं तस्यास्तिक्तं किराततिक्तवत्।
कण्टकैरतितीक्ष्णञ्च द्विधारचन्द्रहासवत्॥
५ तस्याश्चरणयुग्मञ्च मृत्युं प्रत्यवरोहति।
स्वीयगत्या च पाताले सा करोति पदार्पणं॥
६ जीवनस्य महामार्गस्तया नैव विविच्यते।
वर्त्माधः कम्पते तस्याः किन्तु सा तन्न बुध्यते॥
७ अतो हे बालका यूयं मद्वाक्यं श्रोतुमर्हथ।
निर्गतेभ्यो मदीयास्याद् वाक्येभ्यो मापगच्छत॥
८ अतिदूरं स्त्रियास्तस्यास्त्वं वियुङ्धि निजायनं।
तद्गेहद्वारसान्निध्यं त्वं न गच्छ कदाचन॥
९ गत्वान्येभ्यः स्वसम्मानं सम्प्रदायिष्यते त्वया।
दयाहीनरिपो हस्ते निजायुश्चार्पयिष्यते॥
१० तृप्तिं त्वदीयसम्पत्त्या परे यास्यन्ति मानवाः।
भविष्यति परं सद्म पूर्णं त्वच्छ्रमजैः फलैः॥
११ मांसे देहे च ते क्षीणे शेषे त्वं निश्वनिष्यसि॥
१२ वक्ष्यसि चेदमाः शिक्षां कुतो गर्हितवानहं।
ममान्तःकरणञ्चैव व्यनिन्दद् भर्त्सनां कुतः॥
१३ कुतोऽहं स्वगुरूणाञ्च भारतीं श्रुतवान् नहि।
ममोपदेशकानाञ्च वाण्यां न न्यदधे मनः॥
१४ प्रायः सर्व्वाहिते ऽमज्जं जनतासभयोः पुरः॥
१५ पिब त्वं स्वप्रहेस्तोयं स्वकूपादुद्धृतं जलं॥
१६ कुतस्त्वदुत्सजं नीरं वहिर्विस्तारयिष्यते।
नगर्य्या राजमार्गेषु तोयानां सरितो यथा॥
१७ तवैकस्यास्तु तत् तोयं न चान्येषां त्वया सह॥
१८ तावकीनप्रहि भूयाद् आशीर्व्वादसमन्वितः।
निजयौवनकालस्य कान्तायां त्वं प्रहृष्य च॥

तां मन्यस्व मृगीं चार्वीं हरिणीं वा मनोहरां। १९
स्तनमदुग्ध तस्यास्त्वां प्रमोदयतु सर्व्वदा।
प्रीतिभावेन तस्यास्त्वं रमस्व निरन्तरं॥
हे मत्पुत्र कुतो हेतोस्त्वं वेश्यायां निरंस्यसे। २०
परस्या वक्षसि त्वं वा कुतः सक्तो भविष्यसि॥
प्रत्यक्षाः परमेशस्य सन्ति मार्गा नरस्य वै। २१
सम्यक् तेन मनुष्यस्य सर्व्ववर्त्म परीक्ष्यते॥
स्वीयदुष्कृतपाशै र्हि दुष्टो लोको धरिष्यते। २२
दृढं तञ्च निभन्त्स्यन्ति स्वीयकिल्बिषरज्जवः॥
उपदेशविहीनत्वात् स विनाशं गमिष्यति। २३
मूढतायाः महत्त्वाच्च प्रपतिष्यति मत्तवत्॥

---

## ६ षष्ठोऽध्यायः।

१ प्रतिभूत्वनिषेधः ६ आलस्यविरुद्धकथनं १२ दुष्टलोकविरुद्धकथनं १६ मन्त्र घृणास्पदानि २० आज्ञापालनफलं २५ परदारगमनात् चतिश्च।

हे मदीयात्मज त्वञ्चेत् स्वबन्धो र्लग्नको भवेः। १
परार्थं धृतहस्तो वा कुर्य्याः सत्यापनं यदि॥
स्वमुखान्निर्गतै र्वाक्यैस्तर्हि त्वं सन्धृतोऽभवः। २
यथा पाशैस्तथा बद्धः स्ववक्त्रोदीरितोक्तिभिः॥
अत्रैतत् कुरु मत्पुत्र त्वं स्वबन्धोः करङ्गतः। ३
स्वं रक्ष बन्धुमभ्येत्य प्रणिपत्य प्रसादय॥
स्वीयलोचनयो र्निद्रा त्वयानुज्ञायतां नहि। ४
न नेत्रच्छदयुग्मस्य वा स्वप्नार्थं निमीलनं॥
उद्धर स्वं मृगो यद्वत् पक्षी वा व्याधहस्ततः॥ ५
हे तुन्दपरिमार्ज त्वं पिपीलिकान्तिकं व्रज। ६
तस्या आचारमालोक्य ज्ञानलाभं कुरुष्व च॥
नास्ति कोऽप्यधिपस्तस्या न शास्ता न च नायकः॥ ७
तथापि ग्रीष्मकाले सा सङ्गृह्णाति स्वजेमनं। ८
शस्यकर्त्तनकालेऽपि स्वभक्ष्यं सञ्चिनोति च॥
स्वप्स्यते कतिकालं हि हे आलस्यमते त्वया। ९

कदा स्वकीयनिद्रातस्त्वयोत्थानं करिष्यते ॥
१० अल्पनिद्राल्पतन्द्रा स्यात् स्वप्ने स्वल्पकरस्थिता ॥
११ तया त्वदीयदारिद्र्यम् उपस्थास्यति दस्युवत् ।
तव निष्किञ्चनत्वञ्च समायास्यति चर्म्मिवत् ॥
१२ पापात्मातीव धूर्त्तोऽस्ति वाक्कौटिल्यञ्च सेवते ।
१३ कुरुते नेत्रसङ्केतं पादाभ्यां बोधयत्यपि ।
स्वकीयकरशाखाभिरुपदेशं करोति च ॥
१४ चित्तं तस्य छलैः पूर्णं स कुसङ्कल्पकृत् सदा ।
विवादस्य च वीजानि तेनोप्यन्ते निरन्तरं ॥
१५ ततो हेतो हठात् तस्य विपत्तिः प्रभविष्यति ।
स च ध्वंसिष्यतेऽकस्मात् प्रतीकारेण वर्ज्जितः ॥
१६ परमेश्वर एतानि षड्वस्तूनि विगर्हते ।
तद्युक्तं सप्तमञ्चापि मनसा स ऋतीयते ॥
१७ ऊर्द्धदृष्ट्यक्षियुग्मञ्च जिह्वा चानृतवादिनी ।
निर्द्दोषाणामसृक्पाते प्रवृत्तञ्च करद्वयं ॥
१८ चित्तं कुमन्त्रणानाञ्च कल्पनेन सुतत्परं ।
दुष्कर्म्मसाधनार्थञ्च द्रुतगामि पदद्वयं ॥
१९ अनृती कूटसाक्षी च भ्रातृणाञ्चैक्यभेदकः ॥
२० हे मत्पुत्र स्वतातस्याज्ञा त्वया परिपाल्यतां ।
स्वीयमातुः सुशिक्षा च न परित्यज्यतां त्वया ॥
२१ तां बधान सदा चित्ते कण्ठदेशे निधेहि च ॥
२२ सा त्वां नेष्यति गच्छन्तं स्वपन्तं त्वामविष्यति ।
उन्निद्रेण त्वया सार्द्धं संलापञ्च करिष्यति ॥
२३ यद्धेतो दीपिकास्याज्ञा सुशिक्षा दीप्तिरस्ति च ।
उपदेशस्य वाग्दण्डाः सन्ति जीवनवर्त्म च ॥
२४ इत्थं पापिष्ठनारीतस्तव रक्षा भविष्यति ।
स्निग्धजिह्वपरस्त्रीतस्त्वञ्चोद्धारमवाप्स्यसि ॥
२५ त्वदीयचेतसे तस्याः सौन्दर्य्यं मैव रोचतां ।
स्वीयनेत्रच्छदाभ्यां सा त्वां जालेनेव मा धरेत् ॥
२६ वेश्याया अनुरोधस्तु शेषभक्ष्यापहारकः ।
परस्त्री किन्त्वमूल्यानां प्राणानां ग्राहिका भवेत् ॥

वह्निं वक्षसि यो दध्यात् तदङ्गं किं न धक्ष्यते॥ १७
तप्ताङ्गारेषु यो गच्छेत् तत्पादौ किं न तप्स्यतः॥ १८
समीपवासिनो भार्य्यां यो गच्छेत् स तथा भवेत्। १९
यः कश्चित् तां स्पृशेत् सोऽपि निर्द्दोषो न भविष्यति॥
चौर्य्यक्रियापि चौरस्य नैव लोकैरुपेक्ष्यते। २०
स्वकीयप्राणरक्षाय क्षुधार्त्तेन चोरिते॥
धृतेन तेन कर्त्तव्यं सप्तधा परिशोधनं। २१
त्यक्तव्यं सकलञ्चैव स्वीयगेहे स्थितं वसु॥
परदारांस्तु यो गच्छेत् स नरो बुद्धिवर्ज्जितः। २२
स्वीयप्राणापहर्त्ता स स्वयमेव स्वनाशकृत्॥
दण्डश्चाप्नोत्यवज्ञाश्च लज्जा तस्य न लुप्यते॥ २३
स्वामिनो जारशङ्का या सा नरस्यातिचण्डता। २४
प्रतीकारदिने तेन क्षमा नैव करिष्यते॥
न पारितोषिकं किञ्चित् तस्मै रोचिष्यते तदा। २५
उत्कोचे बहुमूल्येऽपि स तुष्टिं न गमिष्यति॥

---

## ७ सप्तमोऽध्यायः।

१ सुलेमनो विनयकथनं ६ वेश्याया व्यवहारवर्णनं २४ तस्याः स्वातन्त्र्यस्यावश्यकता च।

मद्वाचो रक्ष हे पुत्र मदाज्ञा हृदि गोपय॥ १
तथा जीवनलाभार्थं मदाज्ञा परिपालय। २
मम शिक्षाश्च संरक्ष चक्षुःकनीनिकामिव॥
ता बधानाङ्गुलिष्वेव स्वहृत्पत्रे च ता लिख॥ ३
भगिन्येव ममासि त्वमिति प्रज्ञा त्वयोच्यतां। ४
मम ज्ञातिरियञ्चेति कीर्त्यतां सुविवेचना॥
इत्थमेव परस्त्रीतस्तव रक्षा भविष्यति। ५
स्निग्धवाक्परभार्य्यातस्त्वञ्चोद्धारमवाप्स्यसि॥
स्वगृहस्य गवाक्षस्य जालेनाहं व्यलोकयं॥ ६
तदानीं मन्दबुद्धीनां केषाञ्चित् प्राप्य दर्शनं। ७
यूनां मध्ये मयादर्शि युवैको ज्ञानवर्ज्जितः॥
स तस्या गेहकोणस्य सम्मुखेनात्रवर्त्तत। ८

तस्या निकेतनस्यैव वर्त्मना च समक्रमीत् ॥
९ तदा गोधूलिरेवासीत् सन्ध्याकालेऽपराह्णिके ।
यामिनीजान्धकारश्च समवाप्नोदुपक्रमं ॥
१० एका स्त्री तु तमभ्यायात् वेश्यावेशा सुधूर्त्तधीः ॥
११ कोलाहलप्रियाबाध्या तत्पादौ न स्थिरौ गृहे ॥
१२ जातु भ्राम्यति मार्गे सा जातु याति चतुष्पथं ।
जातु वा सर्व्वकोणेषु व्याधवत् सा प्रतीक्षते ॥
१३ सा तं धृत्वा तदाचुम्बीत् धृष्टास्या चेदमब्रवीत् ॥
१४ मङ्गलार्थं बलीन् दत्त्वा मयाद्य पूरितं व्रतं ॥
१५ अतस्त्वां प्राप्तुमागच्छं मयान्विष्य त्वमीक्ष्यसे ॥
१६ मत्खट्वास्तरणैः स्तीर्णा मिस्रीयैश्चित्रवादरैः ॥
१७ अगुरुवोलसुत्वगिभ मम शय्या सुवासिता ॥
१८ एह्यावामरुणं यावत् प्रेमभोगे रमावहै ।
पूर्णकामविलासेन प्रमोदं करवावहै ॥
१९ गृहस्वामी गृहे नास्ति दीर्घयात्रां करोति सः ॥
२० स मुद्राग्रन्थिहस्तो ऽगात् पूर्णेन्दौ गेहमेष्यति ॥
२१ इत्थं तं निजशिक्षाया बाहुल्येनाचकर्ष सा ।
ओष्ठयो मैंदुरत्वेन पथभ्रष्टं चकार च ॥
२२ तदानीं स नरस्तस्याः पश्चादेवागमद्धठात्।
स तु पीनगवा तुल्यो घातस्थानं प्रगच्छता ।
अबुद्धे दण्डनं प्राप्तुं याति नूपुरधारिवत् ॥
२३ शेषे शीघ्रगवाणेन यकृत् तस्य विभेत्स्यते ।
पक्षीत्थं प्रविशेत् पाशम् अज्ञात्वा प्राणसंशयं ॥
२४ अतो हे बालका यूयं ममोक्तिं श्रोतुमर्हथ ।
ममास्यान्निर्गतं वाक्यं युष्माभि र्विनिशम्यतां ॥
२५ मा भवेत् त्वन्मनो भ्रष्टं तस्या मार्गे ऽवलम्बितुं ।
नैव वा क्रियतां तस्या वर्त्मसु भ्रमणं त्वया ॥
२६ बहुलोकास्तया यस्मात् क्षतीकृत्य निपातिताः ।
तया व्यापादिताः सर्व्वे वाहिनी समहाबला ॥
२७ नरकाध्वा गृहं तस्याः कालान्तःपुरगामि तत् ॥

# ८ अष्टमोऽध्यायः।

१ प्रज्ञायाः सुख्यातिः श्रेष्ठता च ११ प्रज्ञया पराक्रमो धनञ्च २२ प्रज्ञाया अनादित्वं ३२ प्रज्ञया सुखवर्णनञ्च।

किं न घोषयति प्रज्ञा बुद्धिरुच्चैश्च भाषते॥ १
मार्गस्योपरि तिष्ठन्ती सूच्चं शृङ्गाटकालये॥ २
गोपुराणां समीपे वा नगरस्य मुखे स्थिता। ३
कपाटानां प्रवेशे सा प्रोच्चैरित्थं प्रभाषते॥
आह्वयामि नरा युष्मान् मनुजान् अभिवच्म्यहं॥ ४
हे मन्दबुद्धयो यूयं प्रगृह्णीत सतर्कतां। ५
हे मूढाः सकला यूयं शिक्षध्वं सुविवेचनां॥
युष्माभिः श्रूयतां यस्माद् उत्कृष्टानि वदाम्यहं। ६
मामकीनाधरद्वारात् न्याय्या निर्यान्ति चोक्तयः॥
तास्तु मे सत्यभाष्यन्ति पापं द्विष्टो ममाधरौ॥ ७
सकला मम वक्त्रस्य वाचो धर्म्मसमन्विताः। ८
वक्रोक्ता विपरीता वा मध्ये तासां न विद्यते॥
नृणां बुद्धिमतां दृष्टावृजवः सकलाश्च ताः। ९
ज्ञानप्राप्तमनुष्याणां विचारात् सरलाश्च ताः॥
रौप्याद् गृह्णीत शिक्षां मे ज्ञानञ्चोत्तमहेमतः॥ १०
यतो हेतोः प्रवालेभ्यः प्रज्ञा श्रेष्ठा न संशयः। ११
सर्व्वाणि प्रियवस्तूनि तत्समानि न सन्ति हि॥
अहं प्रज्ञेति विख्याता मम वेश्म सतर्कता। १२
लभ्यते च मया ज्ञानं परिणामप्रदर्शकं॥
परमेशात्तु या भीतिः सा घृणा पातकं प्रति। १३
तस्माद् दर्पो ऽभिमानश्च दुष्टताल्पवर्त्म च।
विपरीतञ्च दौर्मुख्यं घृणान्येतानि सन्ति मे॥
मन्त्रणाकुशले स्तो मे प्रज्ञाहं विक्रमान्विता॥ १४
मया शासति राजानो भूपा धर्म्मं वदन्ति च॥ १५
मया जयन्ति शास्तारः शिष्टाश्च क्षितिनायकाः॥ १६
ये कुर्व्वन्ति मयि प्रेम तेषु प्रेम करोम्यहं। १७
यत्नान्मां मृगयन्ते ये मामवाप्स्यन्ति ते जनाः॥

१८ ममैवास्ति धनं तेजः स्थाणु वित्तं पवित्रता ॥
१९ श्रेष्ठं मम फलं स्वर्णात् हिरण्यादपि निर्म्मलात्।
श्रेष्ठो मदीयलभ्यांश उत्तमाद् रजतादपि ॥
२० नयन्ती धर्म्ममार्गेण मध्येन न्यायवर्त्मनां।
२१ ममानुरागिणो लोकान् कुर्व्वे सम्पत्तिभागिनः।
कोषागाराणि तेषाञ्च द्रव्यैः सम्पूरयाम्यहं ॥
२२ प्राप्ताहं परमेशेन स्वीयगत्या उपक्रमे।
स्वकीयकर्म्मणामग्रे काले ऽतीव पुरातने ॥
२३ आदावेवाभिषिक्ताहं प्राक् क्षितेरुद्भवात् पुरा ॥
२४ मदीयोत्पत्तिकाले च नाविद्यन्त महार्णवाः।
भारिणस्तोयभारेण नाविद्यन्त च निर्झराः।
२५ गिरीणां रोपणस्याग्रे ऽहं जाताद्रिगणात् पुरा ॥
२६ तेनास्पृष्टेषु देशेषु निर्जनेषु स्थलेषु च।
नरलोकस्थमृद्रेणो मस्तके ऽपि न निर्म्मितः ॥
२७ यदा सोऽस्थापयद् व्योम तदैवासमुपस्थिता।
यदा सोऽपान्निधेः पृष्ठे व्यलिखत् परिमण्डलं।
२८ यदाबध्नाद् घनानूर्द्धे सैन्धवोत्साश्च प्राभवन् ॥
२९ यदा महासमुद्रस्य सीमानं स न्यरूपयत्।
निजाज्ञालङ्घनादेव सलिलानि निवारयन्।
वसुधायाश्च मूलानि स समस्थापयद् यदा ॥
३० तदानीं तस्य पार्श्वे ऽहम् अतिष्ठं कर्म्मकारिणी।
प्रत्यहं नन्दना तस्य तत्साक्षात् हर्षिणी सदा॥
३१ हृष्टा भूमण्डले तस्य नन्दन्ती नृसुतैः सह ॥
३२ हे वत्सा अधुना यूयं निशामयत मद्वचः।
सन्मार्गान् ये ऽवलम्बन्ते धन्या एव भवन्ति ते ॥
३३ उपदेशं गृहीत्वैव भवत ज्ञानसेवकाः।
अत्याचारश्च युष्माभिः कथञ्चित् क्रियतां नहि ॥
३४ धन्य एव मनुष्यः स यः संशृण्वन् वचो मम।
मामकीनकपाटेषु प्रजागर्त्ति दिने दिने।
मम द्वारशिलायाश्च द्वारिवदवतिष्ठते ॥
३५ यस्माद् यो मामवाप्नोति स एवाप्नोति जीवनं।

प्रसादश्च परेशस्य स नरः परिलप्स्यते॥
मम यश्चापराध्नोति निजप्राणान् छिनत्ति सः। ३६
मां द्विषन्ति च यावन्तस्ते मृतौ प्रेम कुर्व्वते॥

---

# ९ नवमोऽध्यायः।

१ प्रज्ञाया आह्वानं ७ उपदेशकथनं १३ अज्ञानतायाः कथनं फलञ्च।

स्वगेहं निर्म्ममे प्रज्ञा सप्त स्तम्भांस्ततच्च च। १
पशून् जघान मांसार्थं मद्यञ्चामिश्रयत् तथा। २
रचयामास भोज्याय स्वकीयान्यासनानि च॥
स्वदासीः प्रेष्य सा पुर्य्या घोषयत्युच्चभूमिषु। ३
आगच्छेन्मन्दधीरत्र निर्ब्बोधांश्च ब्रवीति सा। ४
आयाताश्नीत भक्ष्यं मे मद्यं पिबत मत्कृतं॥ ५
मन्दबुद्धीन् परित्यज्य जीवनं परिरक्षत। ६
मार्गे विवेचनायाश्च स्थिरपादैः प्रगच्छत॥
निन्दकः शिक्ष्यते येन तेनावज्ञैव लभ्यते। ७
दुर्ज्जनो भर्त्स्यते येन जायते स कलङ्कितः॥
निन्दकं भर्त्सयेथा न स त्वां द्वेक्ष्यति भर्त्सितः। ८
ज्ञानिनं भर्त्सयेथास्त्वं तस्मात् स प्रेष्यते त्वयि॥
शिक्षय ज्ञानिनं तस्मात् सोऽतिज्ञानी भविष्यति। ९
बोधय धार्म्मिकं तस्मात् सोऽतिविद्वान् भविष्यति॥
परमेशात्तु या भीतिः सा प्रज्ञाया उपक्रमः। १०
तथा धर्म्मस्य यज्ज्ञानं मन्ये तत् सुविवेचना॥
मत्तस्त्वदीयघस्राणां सङ्ख्या वृद्धिमवाप्स्यति। ११
सुदीर्घाश्च भविष्यन्ति वत्सरा आयुषस्तव॥
यदि त्वन्तु भवे ज्ञानी स्वार्थं ज्ञानी भविष्यसि। १२
निन्दाचारी भवे र्वा चेत् स्वार्थं दोषी भविष्यसि॥
मूढताख्या तु या योषित् सा महाशब्दकारिणी। १३
स्थूलबुद्धिस्वभावा सा न जानीते च किञ्चन॥
स्वगेहद्वार आसीना पुरस्योर्द्धस्थविष्टरे। १४

१५ समाकर्षयति सा पाश्वान् ऋजुमार्गैः प्रगच्छतः॥
१६ आगच्छेन्मन्दधीरत्र निर्बोधांश्च ब्रवीति सा॥
१७ चोरितं वारि सुखादु गुप्तमन्नञ्च सुप्रियं॥
१८ प्रेता वसन्ति यत् तत्र तन्न जानन्ति ते नराः।
तया निमन्त्रिताः सर्व्वे चाधोभुवनगामिनः॥

---

# १० दशमाऽध्यायः।

सुलेमनो नानाविधा हितोपदेशाः।

## सुलेमनो हितोपदेशाः।

१ ज्ञानी पुत्रः स्वतातस्य भवेदानन्दकारकः।
मूर्खः पुत्रश्च शोकार्त्तां कुरुते निजमातरं॥
२ दुष्टतायुक्तवित्तानि नोपकुर्व्वन्ति किञ्चन।
किन्तु मृत्युत उद्धारं धर्म्म एवानुतिष्ठति॥
३ परेशो नानुजानाति धार्म्मिकस्य क्षुधार्त्ततां।
किन्तु संरोत्स्यते तेन दुष्टानामेव लुब्धता॥
४ कार्य्यं शिथिलहस्तेन ये कुर्य्युस्ते दरिद्रति।
महोत्साहमनुष्याणां करः सम्पत्तिवर्द्धकः॥
५ ग्रीष्मे फलावचायी यः स पुत्र एव बुद्धिमान्।
निद्रितः शस्यकाले यः स लज्जाजनकः सुतः॥
६ धर्म्मशीलस्य लोकस्य मूर्द्ध्नाशीरधितिष्ठति।
वदनं दुर्जनानान्तु दौरात्म्येन समावृतं॥
७ आशिषे स्मर्य्यते धर्म्मी दुष्टानां नाम शीर्य्यते॥
८ गृह्णात्याज्ञाः सुधी लोको मूढोष्ठस्तु निपात्यते॥
९ ऋजुगाम्यभयं याति वक्रमार्गी धरिष्यते॥
१० सङ्केतादो व्यथाकारी मूढोष्ठश्च निपात्यते॥
११ धर्म्मिलोकस्य यद् वक्त्रं जीवनस्रोत एव तत्।
वदनं दुर्जनानान्तु दौरात्म्येन समावृतं॥
१२ विवादोत्पादको द्वेषः प्रेमा सर्व्वाघप्रच्छदः॥
१३ ओष्ठयो विज्ञलोकस्य प्राज्ञता वर्त्तते सदा।

बुद्धिवर्ज्जितलोकस्य पृष्ठे दण्डस्य युज्यते॥
ज्ञानवन्तो मनुष्या ये विद्याः गोपयन्ति ते। १४
किन्त्वज्ञानस्य यद् वक्त्रं तदासन्नतमः क्षयः॥
धनयुक्तस्य लोकस्य वित्तं गाढतमं पुरं। १५
दरिद्राणाञ्च दारिद्र्यं तेषां नाशस्य कारणं॥
धर्म्मिलोकस्य यत् कर्म्म तत्फलं जीवनावहं। १६
दुर्जनस्य च यो लाभस्तत्फलं पातकावहं॥
जीवनायनगामी स आदेशो येन पाल्यते। १७
किन्तु यः शासनत्यागी स हि भ्रान्तो भविष्यति॥
आच्छादयति यो द्वेषं तस्यौष्ठौ वदतोऽनृतं। १८
अपवादञ्च यः कुर्य्यात् सोऽपि मूढो न संशयः॥
वाग्बाहुल्ये ऽपराधानाम् अभावो नहि विद्यते। १९
स्वाधरौ यस्तु संयच्छेत् स नरो बुद्धिमान् भवेत्॥
धार्म्मिकस्यैव या जिह्वा सा परीक्षितरूप्यवत्। २०
दुर्ज्जनानाञ्च या बुद्धिस्तस्या मूल्यं भवेत् त्वणं॥
अधरौ धर्म्मिलोकस्य बहूनां परिपालकौ। २१
ज्ञानाभावाच्च निर्ब्बोधाः प्राणत्यागं प्रकुर्व्वते॥
आशिषा परमेशस्य धनवान् जायते नरः। २२
व्यसनञ्च तया सार्द्धं तेन संयुज्यते नहि॥
ह्लादते दुष्कृतौ मूर्खः प्रज्ञायाञ्च सुधी नरः॥ २३
दुर्जनः शङ्कते यस्मात् तं तदेवाक्रमिष्यति। २४
आकाङ्क्षा धार्म्मिकाणाञ्च सफलत्वं गमिष्यति॥
यथा झञ्झानिलोऽतीतः पाप्यन्तर्धास्यते तथा। २५
धार्म्मिकः कुड्यमूलस्य सर्व्वदा स्थायिनः समः॥
दन्तेष्वम्लरसो यद्वत् धूमो वा नेत्रयो र्यथा। २६
तद्वदेवालसो दूतः प्रेरकस्य मतौ भवेत्॥
परमेश्वरतो भीति र्भवत्यायुःप्रवर्द्धिका। २७
किन्तु न्यूनीकरिष्यन्ते वत्सराः पापिनां न्वणां॥
प्रत्याशा धार्म्मिकाणां या सा भवेत् हर्षदायिनी। २८
दुर्जनानां प्रतीक्षा या सा क्षयं परिगच्छति॥
परमेशस्य यन्मार्गो दुर्गं तत् सरलात्मनां। २९

किन्तु दुष्कर्म्मिलोकानां तदेवास्ति विनाशकं ॥
२० धार्म्मिकः सर्व्वदा स्थायी कदाचिन्न चलिष्यति ।
किन्तु ये दुराचारास्ते नैव वत्स्यन्ति मेदिनि ॥
२१ धार्म्मिकस्यैव यद् वक्त्रं तस्मिन् प्रज्ञा प्ररोहति ।
या च वक्रवदा जिह्वा सा समुच्छेत्स्यते किल ॥
२२ अधरौ धार्म्मिकस्यैव प्रीतिभावस्य सङ्गिनौ ।
दुर्ज्जनानाञ्च यद् वक्त्रं वक्रभावस्य सङ्गि तत् ॥

---

# ११ एकादशोऽध्यायः।

## नानोपदेशकथनं।

१ वञ्चका या तुलायष्टिः घृण्या सा परमेशितुः।
यथार्थं परिमाणं यत् तस्मिन्नेव स तुष्यति ॥
२ अभिमाने समायाते समायात्यवमानना ।
किन्तु नम्रस्वभावा ये प्रज्ञा तैः सह वर्त्तते ॥
३ शुद्धता सरलानां या सा तेषां पथिदर्शिका ।
वक्रता वञ्चकानां या सा तेषां नाशकारिणी ॥
४ कोपवक्रे दिने वित्तं किञ्चिन्नोपकरिष्यति ।
किन्तु मृत्युत उद्धारं धर्म्म एवानुतिष्ठति ॥
५ साधुलोकस्य धर्म्मेण सरलीक्रियते गतिः ।
किन्तु स्वकीयदौर्जन्याद् दुर्ज्जनो निपतिष्यति ॥
६ नृणां सरलचित्तानां धर्म्मस्तानुद्धरिष्यति ।
स्वकीयलोभपाशैस्तु धरिष्यन्ते प्रवञ्चकाः ॥
७ प्रत्याशा पापिलोकस्य मृत्युकाले विनश्यति ।
दुर्वृत्तानां प्रतीक्षा च तदा याति विलोपनं ॥
८ धार्म्मिको रक्ष्यते क्लेशात् पापो चाप्नोति तत्पदं ॥
९ कपटी स्वीयवक्त्रेण मित्रनाशं करोति हि ।
प्रज्ञया धार्म्मिकाणान्तु मित्ररक्षा विधीयते ॥
१० धार्म्मिकेषु समृद्धेषु पुर्य्यां हर्षः प्रजायते ।
दुर्जनेषु विनष्टेषु श्रूयते च जयध्वनिः ॥

आशीर्व्वादाद्दजूनां हि नगरस्योन्नति र्भवेत्। ११
दुष्टानां दुर्म्मुखत्वात्तूत्पाटनं तस्य जायते॥
स्वमित्रं योऽवजानाति स नरो बुद्धिवर्ज्जितः। १२
किन्तु बुद्धिविशिष्टः स स्वमुखं येन रुध्यते॥
यो भ्राम्यत्यपवादार्थी गुप्तवाक्यं व्यनक्ति सः। १३
यस्तु विश्वास्यभावः स कथामाच्छाद्य रक्षति॥
मन्त्रणाया अभावेन प्रजानां पतनं भवेत्। १४
बहुत्वे मन्त्रिणां किन्तु रक्षा तासां प्रजायते॥
लग्नकोऽज्ञातलोकस्य घोरां यास्यति दुर्द्दशां। १५
प्रतिभूत्वे घृणा यस्य निर्व्विघ्नं सोऽवतिष्ठते॥
या मनोहारिणी कान्ता सम्मानं धार्य्यते तया। १६
नरै र्विक्रमसंयुक्तैरैश्वर्य्यं धार्य्यते यथा॥
यो मनुष्यो दयाशीलः स करोत्यात्ममङ्गलं। १७
यश्च क्रूरस्वभावः स निजकायस्य पीडकः॥
दुरात्मा कुरुते कार्य्यं विपरीतफलप्रदं। १८
धर्म्मबीजस्य वप्ता यः स सत्यं लभते फलं॥
यो नरः सुस्थिरो धर्म्मे जीवनाय स चेष्टते। १९
योऽनुधावति पापं स चेष्टते स्वीयमृत्यवे॥
वक्रभावा मनुष्या ये गर्ह्यते तान् परेश्वरः। २०
किन्तु ये सरलाचाराः स तानेवानुरुध्यते॥
पुरुषानुक्रमं यावत् पापी दण्डान्न मोक्ष्यते। २१
धार्म्मिकाणान्तु यो वंशः स उद्धारमवाप्स्यति॥
नासिकायां वराहस्य सौवर्णं भूषणं यथा। २२
सुविचारविहीनायाः सौन्दर्य्यं योषितस्तथा॥
आकाङ्क्षा धर्म्मिलोकानां केवलं मङ्गलावहा। २३
दुर्ज्जनानां प्रतीक्षा या सा तु कोपानलावहा॥
स्वधनं विकिरन्तोऽपि वर्द्धन्ते केऽपि मानवाः। २४
न्याय्याद् दण्डं धरन्तश्च जायन्ते केऽपि निर्धनाः॥
यो मनुष्यो वदान्यः स्यात् स आप्यायिष्यते स्वयं। २५
अभिवर्षति यश्चान्यान् सोऽभिवर्षिष्यते स्वयं॥
येन संरुध्यते शस्यं शपन्ते तं नरं जनाः। २६

येन विक्रीयते शस्यम् आशीस्तन्मूर्ध्नि वर्त्तते ॥
२७ यो मनुष्यो हितान्वेषी सोऽनुगच्छत्यनुग्रहं।
आक्रमिष्यति चानिष्टम् अनिष्टान्वेषिणं जनं ॥
२८ स्वधने यस्य विश्वासः स मनुष्यः पतिष्यति।
पल्लवास्तु यथा तद्वत् फुल्लिष्यन्ति हि धार्म्मिकाः ॥
२९ क्लिश्नाति परिवारान् यः सम्पत्तिस्तस्य वायुवत्।
यस्व मूर्खः स विज्ञस्य दासेरत्वं करिष्यते ॥
३० प्राप्यं धार्म्मिकलोकेनामृतपादपजं फलं।
मनांस्याकृष्य यो रक्षेत् स स्वामी नात्र संशयः ॥
३१ धार्म्मिकः पश्य मेदिन्यां दोषाणां लभते फलं।
का नु दुर्वृत्तलोकस्य पापिनश्च दशा भवेत् ॥

---

## १२ द्वादशोऽध्यायः।

१ यः प्रतुष्यति शिक्षायां स विद्यायां प्रतुष्यति।
भर्त्सनां गर्हते यस्तु पशुतुल्यः स मानवः ॥
२ सज्जनः परमेशस्य समवाप्नोत्यनुग्रहं।
किन्तु धौर्त्त्यस्वभावो यस्तं करोति स दोषिणं ॥
३ नैव दुष्टतया कश्चित् कदाचित् क्रियते स्थिरः।
धार्म्मिकाणान्तु यन्मूलं निश्चलं तद् वितिष्ठते ॥
४ शिष्टा स्त्री स्वामिनो माला क्लेदश्चास्थ्नां कलङ्किनी ॥
५ सङ्कल्पा धर्म्मिणां न्याय्या दुष्टानां मन्त्रणं छलं ॥
६ हत्यायै निभृते स्थातुं भाषन्ते दुर्ज्जना मिथः।
धार्म्मिकाणान्तु जिह्वा तान् मरणात् परिरक्षति ॥
७ विनिपत्य दुरात्मानो नास्तित्वं प्राप्नुवन्ति हि।
धार्म्मिकाणान्तु यत् सद्म सुस्थिरं तद् वितिष्ठत ॥
८ स्वीयमेधाप्रभावेन सुख्यातिं लभते नरः।
किन्तु यो वक्रचित्तः स सकलैरवमन्यते ॥
९ वरं स्वकिङ्करः क्षुद्रो न च दर्प्यन्नवर्ज्जितः ॥
१० स्वपशोरपि प्राणेषु चिन्ताशीलोऽस्ति धार्म्मिकः।

दुर्ज्जनानान्तु यः स्नेहः सोऽपि क्रूरतमो भवेत्॥
स्वभूमिः कृष्यते येन स एवान्नेन तर्प्यति। ११
निर्गुणांस्त्वनुगच्छेद् यो स एव बुद्धिवर्ज्जितः॥
दुश्चरित्रैः कृतं लाभं लिप्सते दुर्ज्जनो नरः। १२
धार्म्मिकाणान्तु यन्मूलं तत् फलोत्पादकं भवेत्॥
स्वकीयाधरयो दौष उन्माथो दुर्ज्जनस्य हि। १३
किन्तु स्नेहत उद्धारं समवाप्नोति धार्म्मिकः॥
स्वमुखस्य फलान्मर्त्यो मङ्गलेन सुतर्प्यति। १४
कृतं यत् स्वीयहस्ताभ्यां तस्याप्नोति फलं नरः॥
पन्था अज्ञानलोकस्य सरलो निजदृष्टितः। १५
श्रूयते मन्त्रणा येन स एव ज्ञानवान् नरः॥
अज्ञानस्य मनस्तापस्तत्क्षणात् सम्प्रकाशते। १६
किन्तु स्वीयापमानं यश्छादयेत् स विचक्षणः॥
यो जनो भाषते सत्यं तेन धर्म्म उदीर्य्यते। १७
मृषावादी तु यः साक्षी स उदीरयति छलं॥
केषाञ्चिद् वावदूकानां खड्गाघातवदुक्तयः। १८
किन्तु ज्ञानवतां जिह्वा दुःखिनां रोगशान्तिदा॥
सत्योष्ठः सर्व्वदा स्थायी मृषाजिह्वा च नैमिषी॥ १९
कुसङ्कल्पकृतां चित्तं कापट्यस्याश्रयो भवेत्। २०
शान्त्यै तु मन्त्रणा येषाम् आनन्दस्तेषु वर्त्तते॥
मनुष्ये धार्म्मिके किञ्चिद् अनिष्टं नानुघंच्यति। २१
किन्तु पूर्णा भविष्यन्ति सन्तापेन हि दुर्जनाः॥
मृषावाद्यधरान् लोकान् गर्हते परमेश्वरः। २२
सत्याचारन्तु ये कुर्य्युः स तेष्वेव प्रतुष्यति॥
समाच्छादयति ज्ञानं मनुष्यः सुविचक्षणः। २३
मानसं किन्तु मूढानां घोषयत्यनभिज्ञतां॥
कर्म्मशीलमनुष्यस्य हस्तो राज्यं करिष्यति। २४
यः करः शिथिलोद्योगः करदः स भविष्यति॥
मनुष्यस्य मनस्तापाज्जायतेऽवनतं मनः। २५
किन्त्वानन्दमवाप्नोति हितवाक्येन तत् पुनः॥
धर्म्मशीलो मनुष्यो यः सुस्थः स स्वीयमित्रतः। २६

दुर्ज्जनानान्तु यो मार्गः स तेषां भ्रान्तिकारणं॥
१७ अलसेन मृगं धृत्वा तत्पाकः क्रियते नहि।
कर्म्मशीलमनुष्यस्तु नररत्नममूल्यकं॥
१८ जीवनं धर्म्ममार्गस्थं मृत्यु र्नास्ति च सत्पथे॥

---

# १३ त्रयोदशोऽध्यायः।

१ उपदेशं खतातस्य ज्ञानी पुत्त्रः शृणोति हि।
किन्तु यो निन्दकस्तेन भर्त्सना श्रूयते नहि॥
२ स्वमुखस्य गुणान्मर्त्यो सुफलं परिभोक्ष्यते।
वञ्चकानान्तु लोभस्य पीडितत्वं फलं भवेत्॥
३ निजं रक्षति यो वक्त्रं निजप्राणान् स रक्षति।
व्यात्तोष्ठस्य तु लोकस्य निपातः सम्भविष्यति॥
४ अलसो वाञ्छयाकाङ्क्षी न च प्राप्नोति किञ्चन।
प्राणा ये कर्म्मशीलानां ते भविष्यन्ति सुस्थिताः॥
५ धार्म्मिको यो मनुष्यः स मृषावाक्यं विगर्हते।
दुर्ज्जनः किन्तु दुर्गन्धी लज्जितश्च भविष्यति॥
६ यो नरः सरलाचारो धर्म्मस्तं परिरक्षति।
मनुष्यं पापिनं किन्तु दुष्टतैव निपातयेत्॥
७ केऽपि धनेश्वरायन्ते नास्ति तेषान्तु किञ्चन।
केऽप्यन्ये दुर्गतायन्ते तेषान्त्वस्ति महाधनं॥
८ नरस्य प्राणरक्षाया मूल्यं तस्य धनं भवेत्।
धनहीनो मनुष्यस्तु न शृणोति हि भर्त्सनां॥
९ धर्म्मिणां शोभते तेजो दीपः शाम्यति पापिनां॥
१० वर्द्धनं यद् विवादस्य तद् दर्पादेव जायते।
मन्त्रणां ये तु गृह्णन्ति प्रज्ञा तैः सह वर्त्तते॥
११ वित्तान्यवस्तुमूलानि क्षीणतामाप्नुवन्ति हि।
यस्तु सञ्चिनुयाद्धस्ते वर्द्धयिष्यति तानि सः॥
१२ आशाया दीर्घसूत्रत्वं चित्तरोगस्य कारणं।
सफलत्वञ्च वाञ्छाया अमृतोत्पादकस्तरुः॥
१३ आदेशं योऽवजानाति तस्य नाशो भविष्यति।

आज्ञामाद्रियते यस्तु सुफलं तेन लभ्यते॥
जीवोत्सो ज्ञानिनः शास्त्रं मृत्युपाशान्निवर्त्तकं॥ १४
शुभबुद्धेः फलं प्रीतिः कठिना छलिनां गतिः॥ १५
नरा विचक्षणाः सर्व्वं कार्य्यं ज्ञानेन कुर्व्वते। १६
ये तु मूर्खा मनुष्यास्ते विस्तृणवन्ति स्वमूर्खतां॥
दुष्टो दूतः पतेत् दुःखे सत्यसारस्तु रोगघ्ना॥ १७
यो नरो गर्हते शिक्षां दरिद्रोऽवमतश्च सः। १८
वाग्दण्डं सहते यस्तु स सम्मानमवाप्स्यति॥
सम्पूर्णा या मनोवाञ्छा स्वादीं तां मन्यते मनः। १९
पापान्निवर्त्तनं मूढै मन्यतेऽतीव कुत्सितं॥
ज्ञानिभिः सह यो गच्छेत् स हि ज्ञानी भविष्यति। २०
निर्ब्बोधानान्तु यो बन्धुः स विनाशं गमिष्यति॥
विपत्तिः पापिनां पश्चात् द्रुतगत्या प्रगच्छति। २१
किन्तु धार्म्मिकलोकेभ्यो मङ्गलं प्रतिदीयते॥
कुरुते पुत्रपौत्रांश्च साधु वित्ताधिकारिणः। २२
धार्म्मिकस्य निमित्तन्तु सञ्चितं पापिनो धनं॥
जायते शस्यबाहुल्यं दीनानां भूमिकर्षणात्। २३
विचाराभावतो जातु शस्याभावश्च जायते॥
दण्डं नहि प्रयुङ्क्ते यः स प्रद्वेष्टि निजात्मजं। २४
पुत्रे यः प्रीयते तस्य शासनाय स चेष्टते॥
मनसस्तृप्तिपर्य्यन्तम् अन्नं खादति धार्म्मिकः। २५
उदरं दुर्जनानान्तु नीरसं तिष्ठति क्षुधा॥

---

## १४ चतुर्द्दशोऽध्यायः।

गृहिणी सविवेका या निर्म्मिमीते स्ववेश्म सा। १
निर्ब्बोधा तु स्वहस्ताभ्यां कुरुते तस्य भञ्जनं॥
यो नरः सरलाचारी परमेशाद् बिभेति सः। २
किन्तु यः कुटिलाचारस्तस्यावज्ञां करोति सः॥
दण्डः स्वकीयदर्पस्य मुखे मूर्खस्य विद्यते। ३
किन्तु ज्ञानवतां रक्षां स्वकीयौ कुरुतेऽधरौ॥

४ गवामभावतो गोष्ठं तिष्ठत्येव परिष्कृतं।
धनं किन्तु बलादेव बलीवर्द्दस्य वर्द्धते॥
५ साक्षी विश्वासयोग्यो यः स मृषा भाषते नहि।
किन्तु प्रतारकः साक्षी मृषावाक्यानि भाषते॥
६ प्रज्ञां मृगयमाणोऽपि नैव प्राप्नोति निन्दकः।
किन्तु यो बुद्धिमांस्तस्य सुलभं ज्ञानमस्ति हि॥
७ अपगच्छ मनुष्यस्य निर्ब्बोधस्य समीपतः।
यं नरं ज्ञानहीनोऽहं जानीषे तं परित्यज॥
८ विचक्षणस्य का प्रज्ञा स्वमार्गे सावधानता।
मूढता का च मूढानां तेषामात्मप्रवञ्चना॥
९ निर्ब्बोधा मनुजाः पाप उपहासं प्रकुर्व्वते।
किन्तु धार्म्मिकलोकानां मध्ये तिष्ठत्यनुग्रहः॥
१० मनस्तापस्य तीव्रत्वं चित्तमेवावगच्छति।
न च व्याप्रियते तस्य हर्षे कश्चित् परो नरः॥
११ दुश्चरित्रमनुष्याणां सदनं विप्रनंक्ष्यति।
उटजं सरलानान्तु तेजोयुक्तं भविष्यति॥
१२ केचिन्मार्गा नृणां साक्षात् सरलाः प्रतिभान्ति हि।
भागस्तु पश्चिमस्तेषां जायते निधनायनं॥
१३ कदाचिद्धास्यमध्येऽपि चित्तं लोकस्य खिद्यते।
शोक एव च हर्षस्य शेषभागः प्रजायते॥
१४ विपथासक्तचित्तो यः स्वीयगत्या स तृप्यति।
किन्तु यः सज्जनस्तस्योत्पद्यते तृप्तिरात्मतः॥
१५ सर्व्ववाक्येषु विश्वासं मन्दबुद्धिः करोति हि।
किन्तु स्वपादविक्षेपं समाधत्ते विचक्षणः॥
१६ विज्ञो लोको भयं प्राप्य व्यसनादपगच्छति।
किन्तु मूर्खो ऽतिविश्वासम् अत्याचारं करोति च॥
१७ य आशुक्रोधशीलः स्यात् स एवाज्ञानकर्म्मकृत्।
कुसङ्कल्पप्रियश्चापि मनुष्यः सर्व्वगर्हितः॥
१८ आगतं मन्दबुद्धीनां धनं निर्ब्बोधता भवेत्।
किन्तु विचक्षणानां हि ज्ञानं मस्तकभूषणं॥
१९ नमन्ति सच्चरित्राणां समक्षं दुर्ज्जनाः किल।

धर्म्महीनमनुष्याश्च धार्म्मिकस्यैव गोपुरे॥
यो मनुष्यो दरिद्रः स स्वमित्रेणापि गर्ह्यते। १०
किन्तु धनाढ्यलोकस्य बहवः सन्ति बन्धवः॥
स्वमित्रं यो ऽवजानाति पापमेव करोति सः। ११
दुर्गतेषु दयालुर्यो धन्य एव स मानवः॥
ये कुर्व्वन्ति कुसङ्कल्पान् किं न भ्राम्यन्ति ते नराः। १२
सत्सङ्कल्पप्रिया ये ते दयां सत्यञ्च भुञ्जते॥
सर्व्वश्रमान्मनुष्यस्य वृद्धिरुत्पद्यते किल। १३
ओष्ठयो र्वावदूकत्वाद् दैन्यमेव प्रजायते॥
ज्ञानिनां मुकुटं वित्तं मूर्खाणां मूर्खताज्ञता॥ १४
यः साक्षी सत्यवादी स प्राणानां परिरक्षकः। १५
यस्तु प्रतारणाकारी मृषावाचः स भाषते॥
भयं यत् परमेशात् तद् विश्वासस्य दृढं स्थलं। १६
यावन्तस्तस्य सन्तानाः स तेषामाश्रयो भवेत्॥
भीति र्या परमेशात् सा जीवनामृतनिर्झरा। १७
उन्माथेभ्यः कृतान्तस्य तया रक्षा प्रसिध्यति॥
प्रजानां बहुसंख्यत्वात् प्रभावं प्राप्नुयान्नृपः। १८
किन्त्वभावान्मनुष्याणां राज्ञ उत्पद्यते क्षयः॥
धीरक्रोधी महाबुद्धिराशुक्रोध्यज्ञताध्वजः॥ १९
जीवदायकमङ्गेभ्यः सुशान्तं हृदयं भवेत्। ३०
किन्त्वीर्ष्या कीकसानां हि गलितत्वस्य कारणं॥
दीनपीडकलोकेन स्रष्टा तस्य विनिन्द्यते। ३१
किन्तु सम्मन्यते यस्तं दरिद्रान् सोऽनुकम्पते॥
स्वदौर्ज्जन्येन पापात्मा ताड्यमानोऽपसार्य्यते। ३२
प्रत्याशां म्रियमाणोऽपि कुरुते धार्म्मिको नरः॥
शान्ता विज्ञमनुष्यस्य चित्ते प्रज्ञावतिष्ठते। ३३
किन्तु मूर्खस्य चित्ते सा भवत्यात्मप्रकाशिका॥
धर्म्मेणोन्नम्यते राष्ट्रं पापन्तु नीव्हतोऽयशः॥ ३४
भूपस्यानुग्रहो भृत्यं प्रवीणं प्रति वर्त्तते। ३५
किन्त्वकीर्त्तिकरं दासं प्रति क्रोधं करोति सः॥

# १५ पञ्चदशोऽध्यायः।

१ मृदूक्तिः शमयेत् कोपं कटूक्तिः क्रोधवर्द्धिका ॥

२ विज्ञानां रसना ज्ञानं समलङ्कृत्य निर्द्दिशेत्।
मूर्खाणां किन्तु यद्‌ वक्त्रं तद्‌ बालिश्यमुदीरयेत् ॥

३ सर्व्वस्थानेषु वर्त्तेते परमेशस्य लोचने।
उत्तमानधमांश्चापि ते मनुष्यान् प्रपश्यतः ॥

४ जिह्वा हितैषिणी वृक्षो जीवामृतफलप्रदः।
वक्रत्वं किन्तु जिह्वाया मनोभङ्गस्य कारणं ॥

५ मूर्खः स्वकीयतातस्य सूपदेशं विगर्हते।
भर्त्सनं मन्यते येन स एव बुद्धिमान् नरः ॥

६ तिष्ठन्ति बहुवित्तानि धार्म्मिकस्य निकेतने।
किन्तु पापिमनुष्यस्य क्लेशयुक्तो धनागमः ॥

७ उप्यन्ते ज्ञानबीजानि ज्ञानिनामधरैर्नृणां।
निर्ब्बोधानान्तु लोकानां यच्चित्तं तन्न सुस्थिरं ॥

८ गर्ह्यते परमेशेन बलिदानमधर्म्मिणां।
तस्य तुष्टिकरा किन्तु प्रार्थना सरलात्मनां ॥

९ नरस्याधर्म्मिणः पन्थाः परमेशेन गर्ह्यते।
धर्म्मं ये त्वनुगच्छन्ति तेषु प्रेम करोति सः ॥

१० सत्पथत्यागिलोकस्य तीव्रशास्ति र्भविष्यति।
विरक्तो भर्त्सनायां यः स मनुष्यो मरिष्यति ॥

११ पश्य पातालसंहारौ प्रत्यक्षौ परमेशितुः।
किमु मानवसूनूनां सर्व्वान्तःकरणान्यपि ॥

१२ निन्दको भर्त्स्यते येन तस्मिन् नैव प्रतुष्यति।
तस्माद्‌ विज्ञमनुष्याणां समीपं नहि गच्छति ॥

१३ हृदयेन प्रफुल्लेन प्रसन्नीक्रियते मुखं।
व्यथया किन्तु चित्तस्य प्राप्नोत्यात्मावसन्नतां ॥

१४ मेधावतो मनुष्यस्य ज्ञानान्वेषि भवेन्मनः।
चरन्त्यज्ञानताद्यन्ने निर्ब्बोधानां मुखानि च ॥

१५ दुःखदं दुःखिलोकस्य जायते सकलं दिनं।
किन्तु प्रफुल्लचित्तस्य जीवनं नित्य उत्सवः ॥

वरं स्वल्पमपि द्रव्यम् ईश्वरश्रद्धया सह। १६
न च कोषो धनैः पूर्णः शान्तिहीनतया सह॥
वरं कुभोजनं शाकैः प्रणये सहभोजिनि। १७
न च पुष्टस्य गो मांसे विद्वेषे सहवर्त्तिनि॥
आसक्तो यो नरः क्रोधे स विरोधे प्रवर्त्तकः। १८
किन्तु कोपे सुधीरो यो विवादं शमयेत् स हि॥
अलसस्य गतिर्घोरा यथा कण्टकवारणी। १९
पदवी सरलाणान्तु सरला राजमार्गवत्॥
आत्मजो ज्ञानसंयुक्तस्तातस्यानन्ददायकः। २०
किन्तु निर्ब्बोधलोकेन निजमातावमन्यते॥
बुद्धिहीनमनुष्यस्य मूर्खत्वं हर्षकारणं। २१
किन्तु नरो विशेषज्ञ ऋजुमार्गेण गच्छति॥
मन्त्रणाया अभावेन भेदं गच्छति कल्पना। २२
मन्त्रिणां किन्तु बाहुल्यात् सुदृढा सावतिष्ठते॥
स्वमुखस्योत्तरैरेव प्रमोदं लभते नरः। २३
उक्ता समुचिते काले भारती कीदृगुत्तमा॥
ऊर्द्धं याति सुधीरस्य निमित्तं जीवनायनं। २४
तेनाधःस्थितपातालात् जायते स पराङ्मुखः॥
सदर्पाणां नृणां गेहं परेशेन निपात्यते। २५
विधवायास्तु सीमानं सुस्थिरं विदधाति सः॥
गर्ह्यन्ते परमेशेन दुष्टतायाः कुकल्पनाः। २६
मनोरम्याणि वाक्यानि स शुद्धानि च मन्यते॥
स्वकीयपरिवारान् हि क्लिश्नाति लोभिमानुषः। २७
यस्तु गर्हत उत्कोचं स एवाप्नोति जीवनं॥
चिन्तयत्युत्तरं देयं धर्म्मिलोकस्य मानसं। २८
किन्तु दुरात्मनां वक्त्राद् दुर्व्वाक्यानि स्रवन्ति हि॥
सुदूरे पापिलोकेभ्यः परमेशोऽवतिष्ठते। २९
किन्तु संश्रूयते तेन प्रार्थना धर्म्मिणां नृणां॥
नेत्रयो र्यत् प्रसन्नत्वं तेन चित्तं प्रहृष्यते। ३०
कीकसानि च पुष्यन्ति श्रुतया शुभवार्त्तया॥
श्रूयते येन कर्णेन भर्त्सनं जीवनप्रदं। ३१

विज्ञानामेव लोकानां मध्ये स सन्निवत्स्यति ॥
१२ शास्ति निराकृता येन स्वप्राणान् सोऽवमन्यते ।
भर्त्सना श्रूयते येन बुद्धिलाभं करोति सः ॥
१३ भीति र्या परमेशात् सा प्रज्ञाया उपदेशिका ।
जायते नम्रता लोके गौरवस्याग्रगामिनी ॥

---

## १६ षोडशोऽध्यायः ।

१ मर्त्यस्य चित्तसङ्कल्पाः परेशाद् रसनोत्तरं ॥
२ मनुष्यस्य निजाध्वानः सर्व्वे शुद्धाः स्वदृष्टितः ।
परमेश्वर एवास्ति मानसानां परीक्षकः ॥
३ स्वीयकार्य्यस्य भारं त्वं परमेशे समर्पय ।
ततस्त्वदीयसङ्कल्पाः प्रगमिष्यन्ति सिद्धतां ॥
४ कृतं यत् परमेशेन स्वाभिप्रेताय तत् कृतं ।
दृष्टस्तेन दुरात्मापि दुर्द्दशादिनदृष्टये ॥
५ यः कश्चिद् दर्पिचित्तस्तं गर्हते परमेश्वरः ।
पुरुषानुक्रमं यावत् स दण्डान्नहि मोच्यते ॥
६ करुणासत्यताभ्यां हि क्षमा दोषस्य जायते ।
परमेशाच्च या भीतिः सा पापत्यागकारिका ॥
७ यस्य लोकस्य मार्गेषु परमेशः प्रतुष्यति ।
प्रति तं शान्तवैरान् स कुरुते तद्रिपूनपि ॥
८ वरं धर्म्मेण संयुक्तं स्वल्पमेव भवेद् वसु ।
न चान्यायेन संयुक्तः प्रचुरोऽपि धनागमः ॥
९ निजमार्गो मनुष्यस्य मनसा परिचिन्त्यते ।
परन्तु परमेशेन गतिस्तस्य निरूप्यते ॥
१० दैववाणी नरेन्द्रस्याधरयोरवतिष्ठतां ।
विचारे वदनं तस्य वक्रतां न समाचरेत् ॥
११ न्याय्यौ मानतुलादण्डौ परेशेन निरूपितौ ।
प्रस्तराः सम्पुटस्थाश्च सर्व्वे तेनैव निर्म्मिताः ॥
१२ गर्हणीयो महीपालैः पापाचारो हि सर्व्वथा ।
धर्म्मेणैव यतो हेतो र्भवेत् सिंहासनं स्थिरं ॥

रोचेते क्षितिपालेभ्य ओष्ठौ धर्म्मसमन्वितौ। १३
मनुजो न्यायवादी च नरेन्द्रस्य प्रियो भवेत्॥
सदृशो यमदूतेन भवेत् क्रोधो महीभुजः। १४
ज्ञानिना तु मनुष्येण शान्तिस्तस्य विधीयते॥
राज्ञो मुखप्रसन्नत्वात् प्रजानां जीवनं भवेत्। १५
ग्रीष्मकालिकमेघेन तदीयानुग्रहः समः॥
प्रज्ञालाभो भवेत् कीदृग् उत्तमो हेमलाभतः। १६
बुद्धिलाभस्तथा कीदृग् उत्कृष्टो रूप्यलाभतः॥
ऋजूनां राजमार्गः को दुराचारादपक्रमः। १७
स्वगतौ सावधानो यः स्वीयप्राणान् स रक्षति॥
याति नाशात् पुरो दर्पः पतनाच्चोद्धतं मनः॥ १८
वरं नम्रमनस्कस्य विनतैः सह वर्त्तनं। १९
न चाहङ्कारिभिः सार्द्धं लोप्त्राणां भागनिर्णयः॥
कर्त्तव्ये पाटवं यस्य लभ्यते तेन मङ्गलं। २०
श्रद्धयाच परेशं यो स एव धन्य मानवः॥
सुधीरं मानसं यस्य स नरः ख्यायते बुधः। २१
ओष्ठयो मधुरत्वञ्च पाण्डित्यं परिवर्द्धयेत्॥
प्रवीणस्य प्रवीणत्वम् अमृतोत्ससमं भवेत्। २२
किन्तु शासनमज्ञानाम् अज्ञत्वं नात्र संशयः॥
ज्ञानिलोकस्य चित्तेन वदनं क्रियते पटु। २३
ओष्ठयोश्च स्थितं तस्य पाण्डित्यं परिवर्द्धते॥
मनोहराणि वाक्यानि मधुवासोपमानि हि। २४
सुस्वादूनि रसज्ञाने ह्यस्थ्नां रोगहराणि च॥
कश्चित् पन्था मनुष्यस्य दृष्टौ भाति समञ्जसः। २५
तथापि जायते तस्य पर्य्यन्तं नरकायनं॥
श्रमिणो या बुभुक्षा सा तत्सहाया कृतश्रमा। २६
यस्मात् तस्य निजस्तुण्डस्ताडकः कार्य्यशासकः॥
सचेष्टोऽस्त्यपकाराय पापी गर्त्तं खनन्निव। २७
तदीयाधरयुग्मे च वह्नि र्ज्वलति दाहकः॥
यो नरो वक्रभावः स विवादोत्पादको भवेत्। २८
परिवादी च यो लोकः स सुहृद्भेदको भवेत्॥

१९ मित्रं प्रलभ्य दुर्वृत्तो गमयत्यशुभायनं॥
२० स निमीलितनेत्रः सन् चिन्तयित्वा कुकल्पनां।
वक्रीकृत्याधरौ पश्चात् साधयत्यधमां क्रियां॥
२१ खक् श्वेता मूर्द्धजाः शुक्लाः प्राप्तव्या धर्म्मवर्त्मनि॥
२२ क्रोधे यो मानवो धीरो वीरतो ऽपि स उत्तमः।
यश्च स्वचित्तसंयन्ता स श्रेष्ठः पुरजेतृतः॥
२३ वस्त्रगर्भे मनुष्येण गुटिका विनिपात्यते।
केवलः परमेशस्तु तन्निरूपणकारकः॥

---

## १७ सप्तदशोऽध्यायः।

१ वरं शुष्को भवेद् ग्रास एकः शान्तिसहायकः।
न च वाक्कलहैः सार्द्धं मांसपूर्णं निकेतनं॥
२ पुत्रं लज्जाकरं भृत्यो दक्षो वशीकरिष्यति।
लप्स्यते चाधिकारांशं स एव भ्रातृभिः सह॥
३ रूप्यं परीक्ष्यते मूषा हसन्ती कनकं तथा।
किन्तु मानवचित्तानां परमेशः परीक्षकः॥
४ ईरितं धर्म्मह्रीनोष्ठैः शृणोति दुर्जनो वचः।
समनो दुष्टजिह्वायां धीयते ऽनृतवादिना॥
५ दुर्गतो हस्यते येन तत्स्रष्टा तेन निन्द्यते।
परस्यापदि यो हृष्टः स दण्डान्न विमुच्यते॥
६ वृद्धस्य मुकुटं पौत्रा बालानां भूषणं पिता॥
७ पाण्डित्यसूचकं वाक्यं मूर्खवक्त्रे न युज्यते।
किमु माहात्म्ययुक्तस्य वदने ऽनृतभाषणं॥
८ उत्कोचदायिनो दृष्टावुत्कोचो मोहिरत्नवत्।
तद् रत्नं यत्र वर्त्तेत साफल्यं तत्र जायते॥
९ आवृणोत्यपराधं यः प्रेमार्थं स विचेष्टते।
यस्तु वाचं श्रुतां वक्ति सुहृद्भेदं करोति सः॥
१० नरं विचक्षणं यादृग् एकाविशति भर्त्सना।
प्रहाराणां शतं मूर्खं नैवाविशति तादृशं॥
११ केवलं शासनत्यागं समन्विच्छति दुर्ज्जनः।

तस्मात् सुनिष्ठुरो दूतस्तद्दिगहं प्रचेष्यते ॥
भल्लस्य हतवत्सस्य साचात्कारो भवेद् वरं। १२
मूर्खताविष्टमूर्खस्य साचात्कारो वरं नहि ॥
उपकारं हि सम्प्राप्य यो ऽपकारं समाचरेत्। १३
न कदाचन तद्देहाद् अपकारः सरिष्यति ॥
विवादस्य य आरम्भः स जलाधारभेदवत्। १४
अतश्चित्तविकारस्य पूर्व्वं द्वन्द्वं परित्यज ॥
दुष्टं यो वक्ति निर्दोषं धार्म्मिकं यश्च दोषिणं। १५
घृणीयावेव मन्येते परमेशेन तावुभौ ॥
अमुत्र मूर्खलोकस्य हस्ते पण्यं किमर्थकं। १६
तत् किं प्रज्ञाक्रयार्थं स्यात् चिच्छक्तिस्तस्य नास्ति हि ॥
प्रेमाणं सर्व्वकालेषु बन्धु र्बन्धौ करोति हि। १७
विपत्तावुपकारार्थं जायते च सहोदरः ॥
यो नरो बुद्धिहीनः स स्वकरेण स्पृशेत् करं। १८
अमित्रस्य समक्षञ्च परस्य लग्नको भवेत् ॥
अपराधप्रियान्नान्यः कोऽपि स्यात् कलहप्रियः। १९
स्वद्वारं यः करोत्युच्चं स विनाशाय चेष्टते ॥
वक्रचित्तमनुष्येण मङ्गलं प्राप्यते नहि। २०
यश्च कुटिलजिह्वः स विपत्तौ निपतिष्यति ॥
सुतं यो जनयेन्मूर्खं स्वक्लेशस्तेन साध्यते। २१
मूढस्याज्ञस्य यस्तातः सोऽपि नैवाभिनन्दति ॥
सुपथ्यं हृदयं हृष्टं रोगघ्नं भेषजं यथा। २२
मनसः क्षुण्णता किन्तु कीकसान्यपि शोषयेत् ॥
वस्त्रगर्भत उत्कोचं वहिष्करोति दुर्ज्जनः। २३
मार्गान् न्यायविचारस्य वक्रीकर्त्तुं समुद्यतः ॥
बुद्धियुक्तस्य लोकस्य प्रज्ञा सम्मुखवर्त्तिनी। २४
लोचने किन्तु मूर्खस्य धरणीप्रान्तगामिनी ॥
मूर्खः पुत्रः स्वतातस्य क्लेशो मातुश्च कण्टकः ॥ २५
धार्म्मिकस्यार्थदण्डेन दण्डनं न समञ्जसं। २६
किमु शिष्टमनुष्याणां प्रहारो न्यायहेतुकः ॥
वाग्धनाल्पव्ययी यः स्यात् स एव ज्ञानवान् नरः। २७

यो मनुष्यश्च धीरात्मा स एव बुद्धिमान् नरः॥
१८ यावत् समाचरेन्मौनं तावन् मूर्खोऽपि पण्डितः।
कुरुते यश्च वाग्रोधं बुद्धियुक्तः स मन्यते॥

---

# १८ अष्टादशोऽध्यायः।

१ यो मनुष्यः पृथक् तिष्ठेत् स्वाभीष्टं सोऽनुगच्छति।
सर्व्वप्रकारकौशल्ये तीक्ष्णकर्म्मा च जायते॥
२ नैव बालिशलोकाय रोचते सुविवेचना।
किन्तु स्वीयमतेरेव व्यक्तेन स प्रतुष्यति॥
३ यत्र दुर्ज्जन आयाति तत्रायात्यवमानिता।
अपकृष्टतया सार्द्धं निन्द्यता चोपतिष्ठति॥
४ नरवक्त्रे स्थिता वाचो गम्भीरतोयराशिवत्।
प्रज्ञायास्तु य उत्सः स स्यन्दिना स्रोतसा समः॥
५ विचारे धर्म्मिलोकस्य यया पराजयो भवेत्।
उचिता नहि सा क्वापि पापिनः पक्षपातता॥
६ अधरद्वयमज्ञस्य विवादेषु प्रवर्त्तते।
प्रहारांश्च समाह्वातुं मुखं तस्य महास्वनं॥
७ ज्ञानहीनमनुष्यस्य निजवक्त्रं विनाशकं।
तथा तस्य स्वकीयोष्ठावुन्माथौ प्राणहारिणौ॥
८ कर्णेजपस्य वाक्यानि मन्ये सुस्वादुभक्ष्यवत्।
तान्यन्तःकरणस्यैव प्रविशन्त्युपरोधनं॥
९ शिथिलो निजकार्य्ये यः सोदरः सोऽर्थनाशिनः॥
१० नाम यत् परमेशस्य सुदृढं दुर्गमेव तत्।
धार्म्मिकस्तत्र धावित्वा समवाप्नोति रक्षणं॥
११ ऐश्वर्य्यं धनिलोकस्य सुदृढं नगरं भवेत्।
प्रोच्चप्राचीरवत् तस्य मतये प्रतिभाति तत्॥
१२ विनाशात् प्राक् मनुष्यस्य गर्व्वितं जायते मनः।
नम्रता विद्यते किन्तु सम्मानस्याग्रगामिनी॥
१३ येनाग्रे वाक्यमश्रुत्वा दीयते सहसोत्तरं।
तस्य तन्मूर्खताचिह्नं कलङ्कश्च विगण्यते॥

नरस्य मरयोग्येन मनसा धार्य्यते यथा । १४
भूमिं किन्तु मनः केन विषोढुं शक्यते कथं ॥
नरस्य सुधियश्चित्तं ज्ञानलाभं करोति हि । १५
विज्ञलोकस्य कर्णश्च कुरुते ज्ञानमार्गणं ॥
सुविस्तीर्णं मनुष्यस्य मार्गं करोत्युपायनं । १६
समक्षं मुख्यलोकानां करोति तमुपस्थितं ॥
विवादे प्रथमो वादी प्रतिभाति हि धार्म्मिकः । १७
पश्चात् प्रत्यर्थिनागत्य क्रियते तत्परीक्षणं ॥
विनिवृत्ति र्विवादानां गुटिकापाततो भवेत् । १८
मध्ये बलवतां नृणां निश्चयस्तेन जायते ॥
दुर्जयः कुपितो भ्राता सुदृढान्नगरादपि । १९
सोदराणां विवादश्च दुर्गस्यार्गलसन्निभः ॥
स्ववक्त्रस्य फलेनैव नरकोष्ठः प्रपूर्य्यते । २०
स्वाधराभ्यां यदुत्पन्नं तेन तृप्तिं स गच्छति ॥
जीवनं मरणञ्चापि जिह्वाधीने हि तिष्ठतः । २१
तस्यां ये केचिदासक्तास्ते तस्या भुञ्जते फलं ॥
भार्य्यां यो नर आप्नोति प्राप्नोति क्षेममेव सः । २२
परमेश्वरतश्चैव प्रसादस्तेन लभ्यते ॥
दरिद्रो विनयं वक्ति प्रविवक्ति धनी कटु ॥ २३
बहवो बान्धवो यस्य स नरः स्यादुपद्रुतः । २४
भ्रातृतो ऽप्यनुरक्तो यस्तादृक् स्नेही तु विद्यते ॥

---

## १९ ऊनविंशोऽध्यायः ।

वरं सारल्यवान् दीनो न मूर्खः कुटिलाधरः ॥ १
नैव ज्ञानं विना भद्रा भवति व्यग्रता क्वचित् । २
पदाभ्यां द्रुतगामी यः स नरः पातकी भवेत् ॥
स्वीयमौर्ख्यान्मनुष्यस्य विषमं जायते ऽयनं । ३
तत्पश्चात् परमेशाय तस्य क्रुध्यति मानसं ॥
संयुनक्ति बहून् बन्धून् मनुष्येण समं वसु । ४
नरो यस्तु दरिद्रः स मित्रतो ऽपि वियुज्यते ॥

५ नैव साक्षी मृषावादी निर्द्दोषो गणयिष्यते।
नरस्थानृतभाषी यः स न स्यात्त्यदण्डितः॥
६ अभिप्रसादयन्त्येव नरेन्द्रं बहवो नराः।
सुवदान्यमनुष्यस्य बान्धवाः सर्व्वमानवाः॥
७ दुर्गतन्तु नरं सर्व्वे गर्हन्ते तस्य सोदराः।
यान्ति तस्मात् सुदूरञ्च सकलास्तस्य बन्धवः।
सो ऽनुगच्छति तान् वाक्यैः किन्त्वेको ऽपि न विद्यते॥
८ कुरुते ज्ञानलाभं यः स स्वप्राणेषु प्रीयते।
यश्च रक्षति बुद्धिं स क्षेमं प्राप्स्यति तत्फलं॥
९ नैव साक्षी मृषावादी निर्द्दोषो गणयिष्यते।
नरश्चानृतभाषी यः स विनाशं गमिष्यति॥
१० न सौख्यं युज्यते मूर्खे किमु दासे नृपेन्द्रता॥
११ मनुष्यस्य प्रवीणत्वं मन्दक्रोधं करोति तं।
अपराधे क्षमा श्रेष्ठं जायते तस्य भूषणं॥
१२ राज्ञः कोपो मृगेन्द्रस्य गर्जनेन समो भवेत्।
किन्तु प्रसन्नता तस्य तुल्या खवारिणा तृणे॥
१३ मूर्खः पुत्रः स्वतातस्य जायते दुःखकारकः।
अश्रान्तविन्दुपातस्य सदृशः कलहः स्त्रियाः॥
१४ गृहा अर्थाश्च लभ्यन्ते जनकेभ्यः क्रमागताः।
प्रवीणा किन्तु या भार्य्या सा प्राप्या परेश्वरात्॥
१५ आलस्यं घोरनिद्रायां निमज्जयति मानवं।
यः प्राणी शिथिलोद्योगः स क्षुधार्त्तो भविष्यति॥
१६ आज्ञां रक्षति यो मर्त्त्यो निजप्राणान् स रक्षति।
स्वमार्गान् यो ऽवजानाति स नरो मारयिष्यते॥
१७ दरिद्रे यो दयाशीलः परेशे स ऋणप्रदः।
अवश्यं परमेशेन तत्प्राप्यं परिशोत्स्यते॥
१८ यावत् तिष्ठति प्रत्याशा तावत् शाधि त्वमात्मजं।
तन्तु मारयितुं नैव स्वं प्रवर्त्तय मानसं॥
१९ तीव्रक्रोधस्वभावो यो दण्डं स प्रतिलप्स्यते।
उद्धारं तस्य किं कुर्य्या भूयो भूयः करिष्यसि॥
२० मन्त्रणां शृणु कर्णाभ्याम् उपदेशं गृहाण च।

परिणामे ततः प्रज्ञा सम्यक्प्राप्स्यते तव ॥
सङ्कल्पा बहवश्चित्ते मनुष्यस्योदयन्ति हि । ११
किन्तु या परमेशस्य सैव स्थास्यति मन्त्रणा ॥
नरस्य भक्तता शोभा श्रेष्ठस्त्वन्टतिनोऽधनः ॥ १२
भयं यत् परमेशात् तत् फलं फलति जीवनं । १३
दृप्तस्तेन नरः सुस्थो नैवाक्राम्यति तं विपत् ॥
हस्तं भोजनपात्रस्य मध्ये गूढालसो नरः । १४
मुखे पुनः समानेतुम् उद्यमं कुरुते नहि ॥
निन्दकं ताडयेत्तेन मन्दधी र्बुद्धिमाप्स्यति । १५
भर्त्सये र्बुद्धिमन्तञ्च स ज्ञानं लप्स्यते ततः ॥
पितृविनाशहारी च मातृविद्रावकश्च यः । १६
पुत्रो लज्जाकरः स स्यात् पित्रोश्चापयशस्करः ॥
भ्रमणं ज्ञानवाक्येभ्यः शिक्षया जायते यया । १७
शिक्षायाः श्रवणात् तस्या निवर्त्तस्व ममात्मज ॥
साक्षिणा दुश्चरित्रेण विचारः परिहस्यते । १८
दुर्जनस्य च यद् वक्त्रं ग्रसते तदधर्म्मतां ॥
निन्दकानां निमित्तं हि दण्डाः सन्ति निरूपिताः । १९
प्रहारा मूर्खपृष्ठस्य निमित्तञ्च व्यवस्थिताः ॥

---

## २० विंशतितमोऽध्यायः ।

मदोऽवहासकार्य्यस्ति मदिराक्रोशकारिणी । १
ताभ्यां चलति यः कश्चित् न स विज्ञः कथञ्चन ॥
राज्ञो भयङ्करत्वं यत् सिंहगर्जोपमं हि तत् । २
यस्तस्योत्पादयेत् कोपं स प्राणान्तकपापकृत् ॥
विवादाद् या निवृत्तिः सा पुरुषस्य यशस्करा । ३
एकैकः किन्तु निर्बाधः प्रचण्डत्वं प्रगच्छति ॥
शीताद् भीतोऽलसो नैव करोति क्षेत्रकर्षणं । ४
शस्यकाले तु भिक्षित्वा तेन किञ्चिन्न लप्स्यते ॥
चित्ते गुप्ता मनुष्यस्य मन्त्रणागाधतोयवत् । ५
तान्तु तोलयितुं शक्तो मनुष्यः सुविवेचकः ॥

६ द्योतयन्ति स्वसौजन्यं भूयिष्ठा मानवाः किल ।
नरो विश्वासयोग्यस्तु सम्यातुं केन शक्यते ॥
७ धार्म्मिकः स्वीयसारल्ये स्थिरपादः प्रगच्छति ।
तत्पश्चादपि सन्तानास्तस्य धन्या भवन्ति हि ॥
८ महीपालः समासीनः सद्विचारार्थमासने ।
सकलं स्वीयनेत्राभ्याम् अधर्म्मं विकिरेत् स्वयं ॥
९ को वदेत् पूतचित्तो ऽस्मि स्वाघं शोधितवानहं ॥
१० उन्माने द्विविधास्मानो द्विविधा भाजनानि च ।
सर्व्वाण्येतानि गर्ह्यन्ते परेशेन न संशयः ॥
११ शुद्धः सरलकर्म्मा च कीदृग् वा स भवेदिति ।
कार्य्येभ्यो बालकस्यापि सुज्ञेयो जायते गुणः ॥
१२ समर्थौ श्रवणे कर्णौ स्तोमे नेत्रे च दर्शने ।
एतयोरुभयोः स्रष्टा परमेशो न चेतरः ॥
१३ त्वं न प्रीयस्व निद्रायां न चेद् दीनो भविष्यसि ।
स्वीयलोचन उन्मील तदा भक्ष्येण तर्प्स्यसि ॥
१४ अपद्रव्यमपद्रव्यम् इति क्रेता प्रभाषते ।
पश्चात् स्थानान्तरं गच्छन् स्वं धन्यं वक्ति तत्क्रयात् ॥
१५ विद्यते जातरूपञ्च मुक्तानाञ्च महाधनं ।
अमूल्यं भूषणन्तु स्यात् ज्ञानवाद्यधरद्वयं ॥
१६ प्रतिभूर्यः परस्य स्यात् अपहार्य्यं तदम्बरं ।
लग्नकस्तु विदेशिन्याः सर्व्वस्वमेव दण्ड्यतां ॥
१७ अन्नं प्रवञ्चनायुक्तं नरेण स्वादु मन्यते ।
पश्चात् किन्तु मुखं तस्य शर्कराभिः प्रपूर्य्यते ॥
१८ स्थिरा मन्त्रणया चिन्तास्तस्माद् युध्यस्व मन्त्रतः ॥
१९ परीवादाय यो भ्राम्येत् मन्त्रभेदं करोति सः ।
तस्मादनावृतोष्ठेन सह मा कुरु मित्रतां ॥
२० स्वपिता स्वीयमाता वा येन पुत्रेण शप्यते ।
घोरे निर्व्वास्यति ध्वान्ते तस्य दीपो न संशयः ॥
२१ आदौ यत् सहसा लब्धं शेषे तन्न हितं धनं ॥
२२ अनिष्टस्य प्रतीकारं करिष्यामीति मा गद ।
परमेशं प्रतीक्षस्व स त्वामुपकरिष्यति ॥

आत्मनो द्विविधोऽमाने गर्ह्यते परमेश्वरः। १३
तथा प्रवञ्चनायुक्तं तुलादण्डं स गर्ह्यते॥
नरस्य पादविक्षेपाः परेशेन निरूपिताः। १४
स्वगतिस्तु मनुष्यस्य बोधगम्या भवेत् कथं॥
द्रव्याण्यधि पवित्राणि सहसा वागुदीरणं। १५
व्रतानाञ्च परं चिन्ता नरस्योन्माथवद् भवेत्॥
यो राजा ज्ञानवांस्तेन विकीर्य्यन्ते हि दुर्ज्जनाः। १६
तेषामुपरि चक्रञ्च मर्द्दकं परिवर्त्यते॥
मनुष्यस्य य आत्मा स पारमेश्वरदीपकः। १७
स चित्तस्यापि सर्व्वाणि गुप्तस्थानानि दीपयेत्॥
सौजन्यं सत्यता चैते राजानं परिरक्षतः। १८
सौजन्येनैव सुस्थास्नु तस्य सिंहासनं भवेत्॥
स्वबलं भूषणं यूनां वृद्धानां पलितं यशः॥ १९
चिह्नानि क्षतजातानि पावकानि दुरात्मनां। २०
तथा सन्ति कशाघाता अन्तर्भावस्य भेषजं॥

---

## २१ एकविंशतितमोऽध्यायः।

राज्ञश्चित्तं परेशस्य हस्ते तोयप्रवाहवत्। १
यत्र कुत्रापि तस्येच्छा तत्र तेन प्रवर्त्यते॥
नृणां सर्व्वपथो भद्रः प्रतिभाति स्वदृष्टये। २
परमेशस्तु चित्तानाम् अद्वितीयः परीक्षकः॥
यज्ञतोऽपि परेशाय रोचते न्यायधर्म्मकृत्॥ ३
दृष्टे दर्पो हृदो गर्व्वः पापिनां श्रीश्च पापकृत्॥ ४
श्रमशीलस्य सङ्कल्पाः केवलं धनवर्द्धकाः। ५
यस्तु साहसिकस्तेन केवलं दैन्यमाप्यते॥
जिह्वयानृतवादिन्या सम्प्राप्ता या धनाढ्यता। ६
सा मृत्युन्वेषिभि र्दृष्टा मृगतृष्णा सुभङ्गुरा॥
दुर्जनान् निजदौरात्म्यं विनाशं गमयिष्यति। ७
धर्म्ममाचरितुं यस्माद् इच्छा तेषां न जायते॥
वक्रमार्गी मनुष्यो यो विकृतं तस्य मानसं। ८

किन्तु निर्म्मलभावो यः सरलः स स्वकर्म्मणि ॥
९ गृहपृष्ठस्य कोणेऽपि नरस्यावस्थिति वरं ।
न च गेहे जनाकीर्णे कलहिन्या स्त्रिया सह ॥
१० दुश्चरित्रमनुष्यस्य वासनानिष्टकामिनी ।
नैवानुगृह्यते तस्य दृष्ट्या बन्धुजनो निजः ॥
११ निन्दके दण्डिते प्रज्ञां समवाप्स्यति मन्दधीः ।
शिक्षादानाच्च विज्ञेन ज्ञानलाभः करिष्यते ॥
१२ आलोचयति सज्ज्ञानं धर्म्मी पापात्मनो गृहं ।
निपातयति नाशाय दुर्जनान् परमेश्वरः ॥
१३ दरिद्रस्यार्त्तरावे यः संरुणद्धि निजश्रुतिं ।
कृते तेनापि चीत्कारे नोत्तरं कोऽपि दास्यति ॥
१४ गुप्तदानेन कोपाग्नि निर्व्वाणत्वं प्रगच्छति ।
उत्कोचाद् वस्त्रगर्भे च निहिताच्चण्डतानलः ॥
१५ धर्म्माचारे महानन्दो धर्म्मिलोकेन मन्यते ।
अधर्म्माचारिणां किन्तु त्रासस्तस्मात् प्रजायते ॥
१६ ज्ञानमार्गं परित्यज्य परिभ्राम्यति यो नरः ।
शेषे प्रेतसभां प्राप्य विश्रमिष्यति तत्र सः ॥
१७ यो नरः प्रीयते हर्षे स भविष्यत्यकिञ्चनः ।
मदे तैले च यस्तुष्टः स वित्तं लप्स्यते नहि ॥
१८ धार्म्मिकस्य मनुष्यस्य मुक्तौ मूल्यं भवेत् शठः ।
नृणां सरलचित्तानां प्रतिहस्तः प्रवञ्चकः ॥
१९ वरं वासो मनुष्यस्य मरुस्थानेऽप्यनालये ।
न च वाक्कलहासक्ता कोपनाच्च सधर्म्मिणी ॥
२० तैलाद्यनुत्तमं वस्तु तिष्ठति ज्ञानिनो गृहे ।
किन्तु मूढमनुष्येण तन्निर्गीर्य्यापचीयते ॥
२१ यो नरो यत्नतो धर्म्मं सौजन्यञ्चानुगच्छति ।
जीवनं तेन धर्म्मश्च कीर्त्तिश्च प्रतिलप्स्यते ॥
२२ वीराणां पुरमुल्लङ्घ्य ज्ञानवान् प्रविशेन्नरः ।
तेषां विश्वासभूमिञ्च गाढं दुर्गं निपातयेत् ॥
२३ वक्त्रं जिह्वाञ्च यो रक्षेत् प्राणान् क्लेशात् स रक्षति ॥
२४ अभिमानी नरः स्फीतस्तस्य नाम च निन्दकः ।

अभिमानातिशय्यश्च स समाचरितुं पटुः॥
अलसो यो मनुष्यस्तं स्वलोभो मारयिष्यति। १५
यतो हेतोः करौ तस्य श्रमं कर्त्तुमनिच्छुकौ॥
नराः केचिद् दिनं कृत्स्नं लिप्सन्ते तीव्रलिप्सया। १६
धार्म्मिको मानवः किन्तु विश्राणयत्यकातरः॥
दुष्टो दुरात्मनां यज्ञः किमु दौर्जन्यतः कृतः॥ १७
अनृतं वक्ति यः साक्षी स विनाशं गमिष्यति। १८
नरः श्रवणशीलस्तु सर्व्वदा व्याहरिष्यति॥
दुर्जनेन स्वकीयास्ये निर्भयत्वं प्रकाश्यते। १९
किन्तु यः सरलस्तेन स्वगतिः क्रियते स्थिरा॥
प्रत्यक्षं परमेशस्य या भवेन्न्यायसाधिनी। ३०
न प्रज्ञा विद्यते तादृक् न बुद्धि र्न च मन्त्रणा॥
सुसज्जीक्रियते वाजी सङ्ग्रामस्य दिनं प्रति। ३१
केवलः परमेशस्तु जयस्यास्ति निरूपकः॥

---

## २२ द्वाविंशतितमोऽध्यायः।

वाञ्छनीयास्ति सुख्यातिरैश्वर्य्यात् प्रचुरादपि। १
दुर्व्वर्णाच्च सुवर्णाच्च श्रेष्ठं स्नेहमनुग्रहः॥
धनहीना धनाढ्याश्च समायन्ति मिथो नराः। २
अद्वितीयस्तु सर्व्वेषां सृष्टिकर्त्ता परेश्वरः॥
मेधावी विपदं दृष्ट्वा गुप्तमाश्रयते स्थलं। ३
मन्दधीस्तु प्रगत्याग्रं समवाप्नोति दण्डनं॥
नम्रत्वं यन्मनुष्यस्य भयं यच्च परेश्वरात्। ४
श्री र्यशो जीवनञ्चैव तयोः सन्ति फलानि हि॥
कण्टकाः सन्ति पाशाश्च वक्रभावस्य वर्त्मनि। ५
नरः स्वप्राणरक्षार्थी ततो दूरे ऽवतिष्ठतां॥
बाल एव त्वया मार्गो गन्तव्ये सुशिक्ष्यतां। ६
तथा कृते स वृद्धो ऽपि न तस्माद्विचलिष्यति॥
यो नरो धनसम्पन्नः स दीनानां प्रभु र्भवेत्। ७
ऋणं गृह्णाति यस्तद्वद् ऋणदातुः स किङ्करः॥

८ वपत्यधर्म्मवीजं यः क्लेशशस्यं स कृन्तति।
कोपोत्पादकदोषाच्च तस्य दण्ड उपस्थितः॥
९ यस्य प्रीतिमती दृष्टिराशीस्तस्मै प्रदीयते।
यस्माद् भागं निजान्नस्य दरिद्राय ददाति सः॥
१० निन्दकं त्वं बहिष्कुर्य्या विवादस्तर्हि यास्यति।
कलहश्चापमानश्च निवृत्तिं प्राप्स्यतस्तदा॥
११ चित्तस्य शुचितायां यः प्रेमाणं कुरुते नरः।
लावण्यादोष्ठयोस्तस्य बन्धुत्वमेति भूपतिः॥
१२ नयने परमेशस्य कुर्व्वाते ज्ञानरक्षणं।
वञ्चकस्य तु वाचः स विपरीताः करोति हि॥
१३ अलसो मानवो ब्रूते केशरी विद्यते बहिः।
तेन विदारयिष्ये ऽहं राजमार्गस्य मध्यतः॥
१४ मुखं यत् परदाराणां तत् सुगम्भीरखातवत्।
पतेत् तच्च परेशस्य क्रोधपात्रं न चेतरः॥
१५ हृदये बालकस्यापि बद्धमूलास्ति मूर्खता।
किन्तु शासनदण्डेन सा दूरीक्रियते ततः॥
१६ स्वीयसम्पत्तिवृद्ध्यर्थं यो दरिद्रस्य पीडकः।
धनिने वा भवेद् दाता दैन्यमेव स लप्स्यते॥
१७ स्वकर्णौ प्रणिधाय त्वं वचांसि ज्ञानिनां शृणु।
आदिष्टे च मया ज्ञाने सुनिविष्टमना भव॥
१८ मनोरम्या भवेद् यस्मात् रक्षा तेषां तवान्तरे।
त्वदीयाधरयोस्तेषां सकलानाञ्च संस्थितिः॥
१९ केवलं परमेशे ते विश्वासो यत् स्थिरो भवेत्।
तदर्थं तुभ्यमेवाद्य सुशिक्षा दीयते मया॥
२० ज्ञाने सुमन्त्रणायाञ्च या उत्कृष्टफलप्रदाः।
तादृशा एव वाचः किं त्वत्कृते न लिखाम्यहं॥
२१ प्रेषकेभ्यो यथा सत्यं शक्नुया दातुमुत्तरं।
तथा त्वां सत्यवाक्यानां ज्ञापयंस्तत्त्वनिश्चयं॥
२२ दीनो ऽस्तीति सञ्चिन्त्य द्रव्यं दीनस्य मा हर।
मा विचारसभायां वा विमर्दान विषादिनं॥
२३ यतो विवादनिर्णेता तेषामस्ति परेश्वरः।

नरांस्तेषु कृताचारान् स प्राणान् दण्डयिष्यति ॥
क्रोधनेन मनुष्येण सह मा कुरु मित्रतां। १४
रोषशीलेन सार्द्धञ्च मा कुरुष्व गमागमौ ॥
नो चेत् तस्य पथो ऽन्यस्य प्राणान् पाशे ऽर्पयिष्यसि ॥ १५
हस्तैः स्पृशन्ति ये हस्तान् अधमर्णार्यिलग्नकाः। १६
तेषां मध्यत एकस्त्वं नैव भूयाः कदाचन ॥
उचितं परिशोधाय द्रव्यं चेन्न भवेत् तव। १७
शय्या ते ऽधःस्थिता तर्हि त्वत्तो ह्यारिष्यते कुतः ॥
मान्यथा कुरु प्राचीनां सीमां त्वत्पितृभिः कृतां ॥ १८
अविलम्बी स्वकार्य्येषु नरः किं दृश्यते त्वया। १९
राज्ञां स्थास्यति साक्षात् स न क्षुद्राणां नृणां पुरः ॥

---

## २३ त्रयोविंशतितमोऽध्यायः।

भूभुजा सह भोक्तुं त्वम् उपविष्टो भवे यदि। १
त्वत्समक्षं किमस्तीति तर्हि सम्यग् विचारय ॥
नो चेदाहारलुब्धस्त्वं कण्ठे दास्यसि कर्त्तरीं ॥ २
माकाङ्क्षीस्तस्य सुग्रासान् तत्तु भक्ष्यं प्रवञ्चकं ॥ ३
ऐश्वर्य्यार्थं न चेष्टस्व विरम स्वीयबुद्धितः ॥ ४
धने चक्षुष्यसि दृष्टिं किं तदन्तर्धास्यते द्रुतं। ५
यस्मादादाय पक्षौ श्रीरुत्पतेद् गृद्ध्रवद् दिवं ॥
कुदृष्टि र्यो मनुष्यस्त्वं तस्यान्नं नैव भक्षय। ६
ग्रासान् वा तस्य सुस्वादून् मा समीहस्व खादितुं ॥
यतस्तस्य मतिस्तर्को यादृशः सो ऽपि तादृशः। ७
पिब भुंक्ष्वेति स ब्रूते न तु त्वां प्रति तन्मनः ॥
त्वया सङ्गिलितो ग्रासः पुनरप्युद्वमिष्यते। ८
स्वकीयप्रीतिवाचाश्च भोक्ष्यते ऽपव्ययस्त्वया ॥
मूढस्य श्रोत्रयोस्तुल्यां त्वं मा भाषस्व किञ्चन। ९
यतस्त्वदीयवाक्यानां युक्ततां सो ऽवमंस्यते ॥
प्राक्तनां भूमिसीमानं मा कुरुष्व त्वमन्यथा। १०
क्षेत्राणि तातहीनानां कथञ्चिन्न समाविश ॥

११ यस्मान्निस्तारकस्तेषाम् अस्ति शक्तिसमन्वितः।
तेषां तस्मिन् विवादे च स त्वया विवदिष्यते॥
१२ शिक्षायां विनय स्वान्तं ज्ञानवाक्येषु च श्रुतिं॥
१३ मोपसंक्रियतां शास्तिरुचिता बालकात् त्वया।
दण्डेन चेत् तमाहन्या न मरिष्यति तर्हि सः॥
१४ दण्डेनाहत्य तस्याङ्गं नरकात् त्रास्यसे मनः॥
१५ हे मत्पुत्र सुबोधं चेत् तवान्तःकरणं भवेत्।
ममान्तःकरणेनापि हर्षस्तर्हि गमिष्यते॥
१६ मत्प्राणाश्चोल्लसिष्यन्ति सत्योद्यत्वात् त्वदोष्ठयोः॥
१७ तवान्तःकरणं मैव पापकर्म्मभ्य ईर्ष्यतु।
किन्तु सन्तिष्ठतां नित्यं साध्वसे परमेश्वरात्॥
१८ यद्धेतोः परकालोऽस्ति नैवाशा छेत्स्यते तव॥
१९ त्वमाकर्णय मत्पुत्र ज्ञानलाभं कुरुष्व च।
निजान्तःकरणं मार्गं सरलं गन्तुमादिश॥
२० ये मनुष्या मदोन्मत्ता मांसाहारेण चाद्मराः।
तेषां समाजमध्ये त्वं मा वर्त्तस्व कदाचन॥
२१ मदोन्मत्ताद्मरा यस्माद् आप्नुवन्ति दरिद्रतां।
निद्रालुत्वं मनुष्यांश्च कर्पटैः परिवेष्टयेत्॥
२२ शृणु त्वं स्वपितु र्वाचः स यस्माज्जनकस्तव।
मैव वार्द्धक्यसम्प्राप्ताम् अवजानीहि मातरं॥
२३ त्वया सङ्क्रीयतां सत्यं मैव विक्रीयतां क्वचित्।
प्रज्ञा शिक्षा च बुद्धिश्च त्वया सङ्क्रीयतां तथा॥
२४ धार्म्मिकस्य मनुष्यस्य पितोल्लासं प्रगच्छति।
ज्ञानिनो जनकेनापि हर्षः पुत्रादवाप्यते॥
२५ जनकस्तव माता च त्वत्तो हर्षमवाप्नुतां।
त्वदीयप्रसवित्री च महोल्लासं प्रगच्छतु॥
२६ हे मत्पुत्र त्वया मह्यं निजचित्तं प्रदीयतां।
मामकीनाश्च पन्थानो रोचन्तां तव दृष्टये॥
२७ यतो वेश्या गभीरेण खातेनैव समा भवेत्।
तथा सङ्कटकूपस्य सदृशा व्यभिचारिणी॥
२८ यथा दस्युस्तथा सापि हिंसिष्यन्ती प्रतीक्षते।

वर्द्धन्ते च तथा सम्यक् नरलोके प्रवञ्चकाः॥
हा इति क्रन्दनं कस्य केन हा हेत्युदीर्य्यते। १९
विषादो जायते कस्य कस्य मनोवसन्नता।
कस्य निष्कारणाघाताः कस्य लोचनरक्तिमा॥
मद्यपाने चिरस्थानां सुरास्वादानुगामिनां॥ २०
त्वं मा द्राक्षारसं पश्य रुचिरं लोहितायितं। २१
कंसे विराजमानञ्च सर्पन्तञ्च यथासुखं॥
स दंक्ष्यत्यहिवच्छेषे फणिवच्च च्छनिष्यति॥ २२
त्वन्नेत्रे द्रक्ष्यतो वेश्या मति र्भ्रष्टञ्च वक्ष्यति॥ २३
अकूपारस्य मध्ये यो नरो निद्रां निषेवते। २४
शयानो गुणवच्छाये तत्समस्त्वं भविष्यसि॥
ताडितोऽपि न तप्येऽहं नावबुध्ये च दण्डितः। २५
कदाहं जागरिष्यामि मृगयिष्ये मदं पुनः॥

---

## २४ चतुर्विंशतितमोऽध्यायः।

मा दुरात्मभ्य ईर्ष्य त्वं सङ्गं तेषां न वाञ्छ वा॥ १
यतो हेतो र्मनस्तेषां सञ्चिन्तयत्युपद्रवं। २
तेषामोष्ठौ च हिंसायाः कथा ईरयतः सदा॥
प्रज्ञया सृज्यते सद्म बुद्ध्या च क्रियते स्थिरं॥ ३
ज्ञानात् कोष्ठाः प्रपूर्य्यन्ते चार्य्यैः सर्व्वधनैः प्रियैः॥ ४
यो ज्ञानी स बलिष्ठोऽस्ति यः सुधीः स पराक्रमी॥ ५
त्वत्कृते सफलं युद्धं त्वं करिष्यसि चिन्तया। ६
बाहुल्येन च मन्त्रीणां जयश्रीस्तव सेत्स्यति॥
अज्ञानस्य कृते प्रज्ञा प्रोच्चत्वाद् अतिदुर्गमा। ७
सभास्थाने मुखं तस्य बद्धं तिष्ठति सर्व्वदा॥
हिंसा सञ्चिन्त्यते येन ख्यास्यते स कुलेश्वरः॥ ८
मौर्ख्यस्य कल्पना पापं निन्दको गर्हितो नृणां॥ ९
सङ्कटे चेद् विषीदेस्त्वं क्षीणं तर्हि बलं तव॥ १०
ये वधं प्रति कृष्यन्ते तान् नरांस्त्वं समुद्धर। ११
ये चलन्ति च हत्यायै त्वमुपेक्षस्व मैव तान्॥

११ अस्माभिस्तत् तु न ज्ञातमिति चेद् गद्यते त्वया।
मनःपरीक्षकेणैव तर्हि तत् किं न भोत्स्यते॥
त्वत्प्राणानाञ्च रक्षित्रा तत् किं ज्ञायिष्यते मयि।
मनुष्याय क्रियायाश्च किं न दायिष्यते फलं॥
१३ मत्पुत्त्र मधु भुंक्ष्व त्वं यस्मादुत्तममेव तत्।
मंस्यते पुष्पनिर्य्यासः सुरसस्तव तालुना॥
१४ प्रज्ञां तथैव बुध्यस्व सुरसां मनसः कृते।
तां चेदुपार्ज्जयेस्तर्हि परत्राप्स्यसि तत्फलं।
प्रत्याशा तावकीना च नैव व्यर्था भविष्यति॥
१५ भवनं धार्म्मिकस्य त्वं मा जिहिंसिष दुर्जन।
तस्य वा शयनस्थानं त्वया मैव विनाश्यतां॥
१६ पतित्वा सप्तकृत्वो ऽपि समुत्तिष्ठति धार्म्मिकः।
दौर्गत्ये तु दुरात्मानः स्खलित्वैव पतन्ति हि॥
१७ वैरिणः पतने जाते हर्षो मा क्रियतां त्वया।
तवान्तःकरणं तस्य स्खलने च न नन्दतु॥
१८ नो चेद् दृष्ट्वा परेशस्तद् असन्तुष्टो भविष्यति।
वैरितस्य निजक्रोधं पुन र्निवर्त्तयिष्यति॥
१९ मा क्रुध्य पापकारिभ्यो मा दुर्वृत्तेभ्य ईर्ष्य वा॥
२० सुखं पारत्रिकं यस्मात् पापिनो न भविष्यति।
दुर्वृत्तानां प्रदीपस्च निर्व्वाणत्वं गमिष्यति॥
२१ परमेशान्नरेन्द्राच्च त्वं बिभीहि मदात्मज।
न्त्रणां चञ्चलचित्तानां सङ्गो न क्रियतां त्वया॥
२२ विपत्कालो यतस्तेषाम् अकस्मात् सम्भविष्यति।
दण्डस्ताभ्यां प्रणेतव्यो विज्ञातुं केन शक्यते॥
२३ एतान्यपि ज्ञानिनां वाक्यानि॥
विचारे पक्षपातित्वं युज्यते न कथञ्चन॥
२४ निर्द्दोषस्त्वमिदं वाक्यं यो वदेद्दोषिणं नरं।
लोकास्तं परिशप्स्यन्ति गर्हिष्यन्ते च तं प्रजाः॥
२५ किन्तु ये भर्त्सयन्ते तं सुखं तेषां भविष्यति।
हितो वर्त्तिष्यते तेषु चाशीर्व्वादो न संशयः॥
२६ यो ददात्युत्तरं युक्तं तस्यौष्ठश्चुम्ब्यत जनैः॥

वहिः कुरु स्वकार्य्यं त्वं क्षेत्रे सर्व्वं समापय। १७
तत्पश्चाद् गेहनिर्म्माणे शक्ष्यसि त्वं प्रवर्त्तितुं॥
स्वमित्रस्य विरुद्धं त्वं साक्षी मा भूरकारणात्। १८
त्वया स्वीयाधराभ्यां किं कर्त्तव्या स्यात् प्रतारणा॥
यथा मां प्रति सोऽकार्षीत् तथा कर्त्तास्मि तं प्रति। १९
स्वकृतस्य फलं कर्त्ते प्रदास्यामीति मा वद॥
क्षेत्रमुपेत्य कुण्ठस्य द्राक्षोद्यानञ्च दुर्मतेः। ३०
मयादर्श्यखिलं स्थानं कण्टकारण्यसन्निभं। ३१
आच्छन्ना वृश्चिकै र्भूमि र्भग्ना प्रस्तरवारणी॥
तद्विलोक्य तु तत्रैव प्रणिधायि मया मनः। ३२
तन्निरीक्ष्योपदेशो ऽयं प्रत्यलम्भि तदा मया॥
अल्पनिद्राल्पतन्द्रा स्यात् स्वप्ने स्वल्पकरश्लिषा॥ ३३
तया त्वदीयदारिद्र्यम् उपस्थास्यति दस्युवत्। ३४
तव निष्किञ्चनत्वञ्च समायास्यति चर्म्मिवत्॥

---

# २५ पञ्चविंशतितमोऽध्यायः।

१ राजगणे कथनं ८ कलत्रकथनं नानाविधकथनञ्च।

एतान्यपि सुलेमनो हितोपदेशवाक्यानि। यिहूदीयराजस्य हिष्कि- १
यस्य भृत्यैस्त्वेतानि सङ्गृहीरे।
विषयस्य तिरोधानम् ईश्वरस्य यशस्करं। २
विषयस्यानुसन्धानं किन्तु राज्ञां यशस्करं॥
उच्चत्वं नभसो यद्वत् नीचत्वञ्च भुवो यथा। ३
बोधातीतं भवेत् तद्वत् नृपाणामपि मानसं॥
दुर्व्वर्णस्य मलं सर्व्वं तन्मध्यादपसारय। ४
भाजनं शिल्पिनो योग्यं तदानीं निःसरिष्यति॥
दुर्जनञ्च नरेन्द्रस्य सम्मुखादपसारय। ५
धर्म्मात् सिंहासनं तस्य स्थिरं तर्हि भविष्यति॥
भूपालस्य समक्षं त्वं माभिमानं समाचर। ६
मा कुलीनजनानां वा पदे संस्थीयतां त्वया॥

७ यस्माद् उच्चमिदं स्थानम् गृहीत्वाशा हिता तव ।
न हितं दर्शनप्राप्तेः पश्चादाशापकर्षणं ॥
८ मा भवेस्त्वं त्वरायुक्तो विसम्वादे प्रवर्त्तितुं ।
किं करिष्यसि तच्छेषे लज्जितः प्रतिवासिना ॥
९ विवादः स्वीयमित्रेण सार्द्धं निष्पाद्यतां त्वया ।
परस्य गोपनीयन्तु त्वया नैव प्रकाश्यतां ॥
१० न चेत् तच्छ्रूयते येन तेन त्वं त्रपयिष्यसे ।
त्वदीया चापकीर्त्तिश्च निवृत्तिं न गमिष्यति ॥
११ रूप्यनिर्म्मितपात्रेषु स्थितैः स्वर्णफलैः समं ।
प्राप्नोति चारुतां वाक्यं कालसन्धावुदाहृतं ॥
१२ सुवर्णकुण्डलेनैव काञ्चनाभरणेन वा ।
तुल्य आज्ञाकरे श्रोत्रे ज्ञानवान् भर्त्सनाकरः ॥
१३ तापहन्त्री हिमानीवत् दिवसे ग्रीष्मकालिके ।
विश्वास्यः प्रेरके दूतः प्रभोराप्याययत्यसून् ॥
१४ येभ्यो न जायते वृष्टिस्तुल्यस्ते मेघवायुभिः ।
भवेन्नरो मृषादानाद् आत्मश्लाघाप्रकाशकः ॥
१५ क्षान्त्यानुनीयते राजा स्निग्धा जिह्वास्थिभञ्जिका ॥
१६ मधु चेत् प्राप्नुयास्तर्हि प्रयोगादेव भुङ्क्ष्व तत् ।
नो चेत् तत्र घृणां प्राप्य त्वं वमिष्यसि तत् पुनः ॥
१७ स्वीयमित्रस्य गेहात् त्वं स्वपादावु[illegible]संहर ।
न चेत् त्वयि घृणां प्राप्य स वैरी ते भविष्यति ॥
१८ विरुद्धं स्वीयमित्रस्य मृषा साक्ष्यं ददाति यः ।
द्रुघणेनासिना वा स तीक्ष्णवाणेन वा समः ॥
१९ तुल्यो दन्तेन भग्नेन पादेन स्खलितेन वा ।
विपत्काले मनुष्यस्य विश्वासो वञ्चके नरे ॥
२० वस्त्रत्यागो भवेद् यादृग् दिवसे शीतकालिके ।
यवक्षारेण संयोगो यादृगम्लरसस्य वा ।
तादृङ्मनसि दुःखार्त्ते गीतानां गायको भवेत् ॥
२१ तव द्वेषी यदा क्षुध्येद् अन्नं भोजय तं तदा ।
यदा तृषातुरो वा स्यात् तोयं पायय तं तदा ॥
२२ इत्थं त्वं मस्तके तस्य तप्ताङ्गारान् विचेष्यसि ।

उचितश्च फलं तुभ्यं परमेशः प्रदास्यति॥
वृष्टिरुत्पाद्यते यद्वद् उत्तरीयेण वायुना। १३
तद्वद् गुप्तिप्रिया जिह्वा दृक्पातैः कोपसूचकैः॥
गृहपृष्ठस्य कोणे ऽपि नरस्यावस्थिति र्वरं। १४
न च गेहे जनाकीर्णे कलहिन्या स्त्रिया सह॥
अवसन्नेषु प्राणेषु यादृशं शीतलं जलं। १५
तादृशा शुभवार्त्तापि दूरदेशात् समागता॥
चञ्चलो दुश्चरित्रस्य साक्षाद् यो धार्म्मिको नरः १६
तुल्यः स आविलोत्सेन प्रस्रवणेन मलिनेन वा॥
मधुनो ऽप्यधिको भोगो न हितो जायते यथा। १७
गौरवस्यानुसन्धानं गुरु भारो भवेत् तथा॥
यादृशं नगरं भग्नं प्राचीरेण विवर्जितं। १८
आत्मसंयमहीनो ऽपि मनुष्यस्तादृशो भवेत्॥

---

## २६ षड्विंशोऽध्यायः।

१ मूर्खेषु कथा १३ अलसेषु कथा १७ कलहकृत्सु कथा च।

ग्रीष्मकाले हिमं यद्वद् वृष्टि र्वा शस्यकर्त्तने। १
बुद्धिहीने नरे तद्वद् गौरवं नहि युज्यते॥
खविसर्पी पक्षीव चटको वोत्पतन्निव। २
निर्निमित्तो भवेच्छापः स कदापि न सेत्स्यति॥
यथाश्वस्य कशा योग्या खलीनं गर्द्दभस्य च। ३
लगुडो मूर्खपृष्ठानां तथा योग्यो न संशयः॥
मा मूर्खायोत्तरं देहि तन्मूर्खत्वानुसारतः। ४
दद्याश्चेत् तर्हि किं जाने तस्य तुल्यो भविष्यसि॥
त्वं मूर्खायोत्तरं देहि तन्मूर्खत्वानुसारतः। ५
न चेत् स्वकीयदृष्ट्या स ज्ञानयुक्तो भविष्यति॥
बालिशेन मनुष्येण सन्देशं प्रहिणोति यः। ६
सच्छिनत्ति स्वपादौ स हानिजीवी च जायते॥
श्लथं जङ्घाद्वयं पङ्गोः श्लोको मूर्खमुखे तथा॥ ७
शर्कराराशिमध्यस्थो मणीनां सम्पुटो यथा। ८

तथा मन्ये नरे मूर्खे सम्मानस्य समर्पणं ॥
९ हस्ते मत्तमनुष्यस्य कराटकं शोभते यथा।
वक्त्रे मूर्खमनुष्यस्य श्लोकस्य शोभते तथा ॥
१० सर्व्वेषां सृष्टिकर्त्ता यः स महान् नात्र संशयः।
मूर्खेभ्यः फलदाता स पापिभ्यश्च फलप्रदः ॥
११ यद्वत् स्वकीयवान्ताय श्वा पुनः परिवर्त्तते।
तद्वन्मूर्खः स्वबालिश्यं भूयो भूयोऽनुतिष्ठति ॥
१२ स्वदृष्ट्या ज्ञानवान् कोऽपि नरः किं दृश्यते त्वया।
बालिशे या भवेदाशा सापि तस्मिन् न जायते ॥
१३ अलसो मानवो ब्रूते केशरी विद्यते वहिः।
मध्यतो राजमार्गाणां वनराजो ऽवतिष्ठते ॥
१४ यथा हंसाश्रयन्तेषा कवाटं परिवर्त्तते।
तथैव स्वीयशय्यायाम् अलसः परिवर्त्तते ॥
१५ हस्तं भोजनपात्रस्य मध्ये गूढालसो नरः।
मुखे पुनः समानेतुं मन्यते ऽतिश्रमावहं ॥
१६ सप्तभ्यो योग्यभाषिभ्यः स्वीयदृष्ट्यालसः सुधीः ॥
१७ धृतकुक्कुरकर्णेन मनुष्येण समो भवेत्।
पथिको गतिकाले ऽपि परविवादचर्चकः ॥
१८ मृत्युतुल्यान् शराङ्गारान् क्षिपेद् यो वातुलो नरः।
१९ तुल्यस्तेन मनुष्यः स यः प्रतार्य्य स्वबान्धवं।
कृतकौतुक एवाहम् इति वाचं प्रभाषते ॥
२० वह्निर् गच्छति निर्व्वाणम् इन्धनानामभावतः।
कर्णेजपस्य चाभावाद् विवादः शाम्यति स्वयं ॥
२१ तप्तचुल्ल्यां यथाङ्गारा यथाग्नाविन्धनानि वा।
विरोधी मानवस्तद्वद् विवादे तापवर्द्धकः ॥
२२ कर्णेजपस्य वाक्यानि मन्ये सुस्वादुभक्ष्यवत्।
तान्यन्तःकरणस्यैव प्रविशन्त्युपरोधनं ॥
२३ मण्डिता रौप्यपत्रेण यादृशी मृत्कपालिका।
तादृशं द्वेषिचित्तस्य प्रियवाद्यधरद्वयं ॥
२४ विश्वासाराति रोष्ठाभ्यां स्वान्ते धारयति छलं ॥
२५ चाटुवादिनि तस्मिंस्त्वं मा विश्वस्याः कथञ्चन।

सप्त दृणानि वस्तूनि सन्ति तस्यान्तरे यतः॥
अधुना तस्य विद्वेषः कापट्येन समावृतः। १६
सभायां किन्तु दौर्जन्यं तस्य प्रादुर्भविष्यति॥
खन्यते येन गर्त्तः स स्वयं तत्र पतिष्यति। १७
पाषाणो लोठ्यते येन व्याघूर्णिष्यति तं प्रति॥
यांश्चुनोद नरान् द्वेष्टि तान् जिह्वानृतवादिनी। १८
यच मिष्टवदं वक्त्रं तन्निपाताय चेष्टते॥

---

## २७ सप्तविंशोऽध्यायः।

१ आत्मश्लाघाक्रोधयोः कथनं ५ सत्यप्रेम्नः कथनं ११ विघ्नाभावस्य कथनं २२ गृहकर्म्मणः कथनञ्च।

श्वस्तनेन दिनेन त्वं मा श्लाघस्व कथञ्चन। १
यत एकदिनस्यापि फलं न ज्ञायते त्वया॥
त्वत्प्रशंसां करोत्वन्यो न करोतु मुखं तव। २
लोको त्वासपरः कश्चिद् अधरौ तव न स्तुतां॥
गुरुरेवास्ति पाषाणो भारयुक्तश्च सैकतं। ३
किन्तु भारवती ताभ्यां निर्ब्बोधस्य विडम्बना॥
निष्ठुरो भवति क्रोधो रोषश्च प्रलयोपमः। ४
स्थातुं तु जारशङ्कायाः सम्मुखे को भवेत् क्षमः॥
प्रच्छन्नप्रीतितो मन्ये श्रेयसी व्यक्तभर्त्सना॥ ५
योग्या विश्वास्यभावस्य प्रहारा बन्धुना कृताः। ६
अतिरिक्तं ततः किन्तु चुम्बनं परिपन्थिनः॥
सुतृप्तो यो नरस्तेन मधुवासो ऽपि गर्ह्यते। ७
किन्तु तिक्तमपि द्रव्यं क्षुधार्त्तः स्वादु मन्यते॥
स्वकीयनीडतो दूरे भ्राम्यन् यादृग् विहङ्गमः। ८
स्वकीयस्थानतो दूरे भ्राम्यन् तादृग् भवेन्नरः॥
तैलं सुगन्धिधूपश्च यथा तोषयतो मनः। ९
तथा मित्रस्य मिष्टत्वं ज्ञेयमात्मीयमन्त्रणात्॥
स्वबन्धुं स्वपितुश्चापि बन्धुं त्वं न परित्यज। १०
दिवसे निजदुःखस्य स्वभ्रातु र्व्रज मा गृहं।

अदूरस्थं यतो मित्रं दूरस्थमाद्दतो वरं ॥
११ हे मतुत्र भव ज्ञानी हृदयं मम हर्षय।
तेन मन्निन्दकायाहं प्रश्नामि दातुमुत्तरं ॥
१२ मेधावी विपदं दृष्ट्वा गुप्तमाश्रयते स्थलं।
मन्दधीस्तु प्रगत्याग्रं समवाप्नोति दण्डनं ॥
१३ प्रतिभूर्यः परस्य स्यात् अपहार्य्यं तदम्बरं।
लग्नकत्त्व विदेशिन्याः सर्व्वस्वमेव दण्ड्यतां ॥
१४ प्रत्यूषे बन्धवे प्रोच्चैराशिषं प्रददाति यः।
आशीर्व्वादः स तस्यैव शापवद्गणयिष्यते ॥
१५ अश्रान्तो विन्दुपातो यो दुर्द्दिनेऽतीव वर्षिणि।
योषिद्विवादिनी तेन समाना नात्र संशयः ॥
१६ सा च प्रच्छाद्यते येन तेन प्रच्छाद्यतेऽनिलः।
घृतं दक्षिणहस्तेन तैलं वात्मप्रकाशकं ॥
१७ लोहमुत्तेजयेल्लोहं सुहृदस्थाननं नरः ॥
१८ य उडुम्बरवृक्षस्य रक्षी भुङ्क्ते स तत्फलं।
स्वकीयप्रभुभक्तो यः स च प्राप्नोति गौरवं ॥
१९ तोयमध्ये यथा भाति मुखस्य सदृशं मुखं।
मनोमध्ये तथा भाति नरस्य सदृशो नरः ॥
२० अदृष्टौ प्रेतलोकश्च नरकश्च स्मृतौ यथा।
अदृप्ते तिष्ठतस्तद्वन्मनुष्यस्यापि लोचने ॥
२१ रूप्यं परीक्ष्यते मूषा हमन्ती हेम वा यथा।
नरः स्वस्तावकस्यैव वक्त्रं तद्वत् परीक्ष्यतां ॥
२२ चूर्णितं मुषलेनापि धान्यैः सार्द्धमुदूखले।
स्वकीयमूर्खता मूर्खं न जहाति कथञ्चन ॥
२३ सम्यक् स्वीयाजमेषाणाम् अवस्था बुध्यतां त्वया।
स्वकीयपशुयूथेषु मानसञ्च निधीयतां ॥
२४ यस्मादर्थश्चिरं कालं यावन्नैवावतिष्ठते।
किरीटः किं भवेत् स्थास्नुरापौरुषपरम्परं ॥
२५ पक्कघासे गते लोपं बालशष्पं प्रकाशते।
पर्व्वतीयतृणानाञ्च सङ्ग्रहः क्रियते नरैः ॥
२६ तुभ्यं वस्त्रप्रदानार्थं जायन्ते मेषशावकाः।

भवति छागयूथस्य मूल्यं स्त्रेच्छयार्थकं॥
छागीनां दुग्धतो भक्ष्यं प्रचुरं जायते तव। १०
भक्ष्यं त्वत्परिवाराणां दासीनाञ्चोपजीविका॥

---

## २८ अष्टविंशोऽध्यायः।

धर्म्माधर्म्मयो र्नानोपदेशकथनं।

पलायन्ते न केनापि द्राव्यमाणा अधार्म्मिकाः। १
धार्म्मिकाः किन्तु तिष्ठन्ति निर्भया युवसिंहवत्॥
प्रजानां दोषतो राज्यं जायते बहुशासकं। २
जने दक्षैस्तु विज्ञैश्च दीर्घा तस्य स्थिति र्भवेत्॥
स्वयं सम्पत्तिहीनो यो नरो दुर्गतपीडकः। ३
स धारासार आप्लावी सर्व्वभक्ष्यविनाशकः॥
दुश्चरित्रं प्रशंसन्ति व्यवस्थात्यागिनो जनाः। ४
प्रतिकुर्व्वन्ति तं किन्तु व्यवस्थापालका नराः॥
दुराचारा जना न्यायं न बुध्यन्ते कथञ्चन। ५
सर्व्वन्तु शक्यते बोद्धुं परेशान्वेषिभि र्नरैः॥
वरं सारल्यवान् दीनो न च वक्रगति र्धनी॥ ६
व्यवस्था पाल्यते येन स एव ज्ञानवान् सुतः। ७
यस्त्वपव्ययिनां मित्रं स स्वतातं कलङ्कयेत्॥
कुसीदेनातिवृद्ध्या च यो निजं वर्द्धयेद्धनं। ८
दीनानुग्राहकस्यैव कृते तत् सञ्चिनोति सः॥
शास्त्रसंश्रवणाद् येन स्वीयश्रोत्रं निवर्त्त्यते। ९
प्रार्थनापि कृता तेन गर्हणीया न संशयः॥
कुपथं यो नयेत् साधून् स्वखाते स पतिष्यति। १०
नराः किन्तु सदात्मानो भोक्ष्यन्ते परमं धनं॥
यो मनुष्यो धनाढ्यः स ज्ञानवान् स्वीयदृष्टितः। ११
मेधावी दुर्गतः किन्तु मर्म्म तस्यावगच्छति॥
धार्म्मिकाणां प्रफुल्लत्वाद् उत्सवो जायते महान्। १२
पापिनामुन्नतौ किन्तु भवन्त्यन्तर्हिताः प्रजाः॥
स्वदोषा येन गुह्यन्ते स न प्राप्स्यति मङ्गलं। १३

तांस्तु स्वीकृत्य यो जह्यात् स कारुण्यमवाप्स्यति ॥
१४ सर्व्वदा भयशीलो यः स एव धन्यमानवः।
करोति यो घनं चित्तं स दौर्गत्ये पतिष्यति ॥
१५ यादृशः केशरी गर्ज्जन् भल्लुको वा क्षुधातुरः।
प्रजानां धनहीनानां दुष्टः शास्तापि तादृशः ॥
१६ बुद्धिहीनो नरेन्द्रो यः स प्रजापीडने पटुः।
लोभं विगर्हते यस्तु सुदीर्घायुः स जायते ॥
१७ नरहत्यापराधेन सभारो यो भवेन्नरः।
स द्रोण्यवटं यावत् तं धर्त्तुं मा व्यवस्यत ॥
१८ यो गच्छेदृजुमार्गेण स रक्षां समवाप्स्यति।
वक्रगाम्युत्पथे यस्तु सो ऽकस्मान्निपतिष्यति ॥
१९ स्वभूमिः कृष्यते येन बहुभक्ष्यं स लप्स्यते।
कुरुठानान्त्वनुगामी यः स दौर्गत्येन तर्प्स्यति ॥
२० विश्वास्यो यो मनुष्यः स आशिषः पूर्य्यते फलैः।
यस्तु धनार्ज्जने तूर्णः स नास्ति दोषवर्ज्जितः ॥
२१ न भवेत् पक्षपातित्वम् उपयुक्तं कथञ्चन।
पापं कुर्य्यान्नरस्तेन पूपखण्डस्य लोभतः ॥
२२ तूर्णमैश्वर्य्यलाभाय क्रूरदृक् चेष्टते नरः।
तन्तर्पैष्यति दौर्गत्यं तेनेदं ज्ञायते नहि ॥
२३ नराणां भर्त्सकः पश्चात् प्रियः प्रियंवदादपि ॥
२४ यः स्वपित्रो धनं हृत्वा दोषो नास्तीति भाषते।
स पुत्रो नाशवृत्तीनां तुल्यवृत्ति र्न संशयः ॥
२५ गर्व्वितो यो मनुष्यः स विवादोत्पादको भवेत्।
परेशे यस्य विश्वासः स एवाप्यायते जनः ॥
२६ स्वचित्ते यस्य विश्वासः स निर्ब्बोधो न संशयः।
प्रज्ञया गम्यते यस्तु तस्य रक्षा भविष्यति ॥
२७ यो ददाति दरिद्राय न भवेत् तस्य दुर्गतिः।
यो निमीलति नेत्रे च पाशास्तस्मिन् मिलन्ति हि ॥
२८ पापिनामुन्नतिं दृष्ट्वा भवन्त्यन्तर्हिताः प्रजाः।
जाते तेषां विनाशे तु वर्द्धन्ते धार्म्मिका नराः ॥

## २९ ऊनत्रिंशोऽध्यायः।

भर्त्सितो बहुशो ऽपि ग्रीवां स्थूलीकरोति यः। १
स समुच्छेत्स्यते ऽकस्मात् प्रतीकारेण वर्ज्जितः॥
धार्म्मिकेष्वेधमानेषु प्रजा गच्छन्ति हृष्टतां। २
प्रभुत्वे दुर्जनानान्तु कुर्व्वन्त्यार्त्तस्वरं जनाः॥
प्रज्ञायां प्रेमकारी यः स्वतातस्तेन हृष्यते। ३
वेश्यानान्त्वनुगामी यः सम्पत्तिस्तेन नाश्यते॥
भूपतिः सुविचारेण सुस्थिरयति नीवृतं। ४
उपहारप्रियो यस्तु स तस्योत्पाटको भवेत्॥
स्वमित्रं प्रति चाटूक्तिं यो मनुष्यः समाचरेत्। ५
पादौ पातयितुं तस्य जालकं विस्तृणोति सः॥
दुर्जनस्यापराधो यः स उन्माथसमन्वितः। ६
धार्म्मिकस्तु मनुष्यो यः स प्रगायति हर्षतः॥
विवादं दीनलोकानाम् अवगच्छति धार्म्मिकः। ७
मनुष्यः किन्तु दुर्वृत्तस्तादृग्ज्ञाने पटु र्नहि॥
निन्दका ये मनुष्यास्ते पुरदाहं प्रकुर्व्वते। ८
विज्ञाः किन्तु मनुष्या ये तैः कोपाग्निः प्रशस्यते॥
सार्द्धं दुरात्मना विज्ञो विवादं कुरुते यदा। ९
न क्रुद्धा न हसित्वा वा शान्तिस्तेनाप्यते तदा॥
रक्तपातिमनुष्या ये नरं साधुं द्विषन्ति ते। १०
तस्य तु प्राणरक्षायै चेष्टन्ते सरला जनाः॥
मूर्खेणान्तरिको भाव आद्यन्तः समुदीर्य्यते। ११
नरो ज्ञानविशिष्टस्तु स्वान्तरे संवृणोद्धि तं॥
अन्तर्यामिहिणः शास्तुः सर्व्वे भृत्या असज्जनाः॥ १२
उपद्रावी दरिद्रश्च मनुष्यौ मिलितो भुवि। १३
उभयो र्लोचनेभ्यस्तु दीप्तिदाता परेश्वरः॥
धनहीनप्रजानां यो राजा सत्यविचारकृत्। १४
सुदीर्घं समयं यावत् तस्य सिंहासनं स्थिरं॥
यष्टिका भर्त्सना चेमे भवतो ज्ञानदायिके। १५
यस्तु निर्यन्त्रणो बालो मात्रे लज्जां ददाति सः॥

१६ दुर्जनेष्वेधमानेषु दुष्टतापि समेधते।
धार्म्मिकैस्तु नरैस्तेषां निपाती दृश्यते किल॥
१७ स्वपुत्रं शाधि तस्मात् स तुभ्यं दास्यति शान्ततां।
मनसस्तावकीनस्य नन्दनञ्च भविष्यति॥
१८ येषां नास्तीश्वरादेशो जनास्ते व्यभिचारिणः।
यस्तु शास्त्रवदाचारं कुरुते धन्य एव सः॥
१९ दासस्य दमनं नैव वाञ्छामात्रेण प्रसिध्यति।
यस्माद् बुद्धापि वाक्यं स न योग्यं प्रतिभाषते॥
२० किमदर्शि त्वया कश्चित् कथने सत्वरो जनः।
निर्ब्बोधे या भवेदाशा सापि तस्मिन्न जायते॥
२१ दासो लालित आबाल्यात् परस्तात् पुत्त्रकायते॥
२२ प्रचण्डो यो मनुष्यः स विवादोत्पादको भवेत्।
यो नरश्चाशुकोपी स्यात् भवेत् स बहुपापकृत्॥
२३ स्वकीयेनाभिमानेन स्वस्थानाद् भ्रंश्यते नरः।
यो मनुष्यस्तु नम्रात्मा स एवाप्नोति गौरवं॥
२४ चौरैः सहांशभागी यो निजप्राणान् स गर्हते।
शपथं तेन संश्रुत्य दोषो यस्मान्न सूच्यते॥
२५ मनुष्याद् यः परित्रास उन्माथावह एव सः।
परेशं श्रद्दधानस्तु नरो रक्षामवाप्स्यति॥
२६ बहुभिः प्रार्थ्यते लोकैर्नरशास्तुरनुग्रहः।
मनुष्यस्य विचारस्तु परमेश्वरमूलकः॥
२७ धार्म्मिकाणां मनुष्याणां पापकर्म्मा घृणास्पदं।
ऋजुगामी नरः किन्तु दुर्जनानां घृणास्पदं॥

---

## ३० त्रिंशत्तमोऽध्यायः।

१ आगूरस्य धर्म्मकथनं ७ तस्य प्रार्थनं १० नानोपदेशाश्च।

१ याकेः पुत्त्रो य आगूरस्तेनेमा वाच ऊचिरे।
इदमैश्वरिकादेशात् पुरुषेणोदितं वचः।
ईथीयेलं प्रति प्रोक्तम् ईथीयेलोकलौ प्रति॥
२ नूनं नरादहं मूर्खो नास्ति धी र्मे मनुष्यवत्॥

मया विद्या न चाभ्यस्ता धर्म्मज्ञानं न बुध्यते॥ ३
कः स्वर्लोकं समारुह्य पुनस्तस्मादवातरत्। ४
मुष्टिना को ऽग्रहीद्वायुं को ऽभान्त्सीद् वाससाम्बुधिं।
मेदिन्याः सर्व्वसीमानां केनाकारि निरूपणं।
तदीयनामधेयं किं तत्पुत्त्रस्य च नाम किं।
एतच्चेत् परिजानासि मह्यं तर्हि निवेदय॥
एकैकं परमेशस्य वाक्यमस्ति सुनिर्म्मलं। ५
तस्मिन् येषाञ्च विश्वासः स तेषां फलकोपमः॥
त्वं तदीयोक्तिभिः सार्द्धं नान्यत् किञ्चन योजय। ६
न चेत् त्वं भर्त्सितस्तेन मृषावादी भविष्यसि॥
अहं दानद्वयं त्वत्तः प्रार्थये हे परेश्वर। ७
त्वं मत्प्राणवियोगात् प्राक् मत्तस्तन्नोपसंहर॥
अलीकत्वं मृषोक्तिञ्च दूरं मत्तो ऽपसारय। ८
न दैन्यं न धनं दत्त्वा मां योग्यान्नेन भोजय॥
न चेत् तृप्तो ऽन्ततं प्रोच्य भाषिष्ये कः परेश्वरः। ९
दैन्याच्चौर्य्येण वा नाम विलेप्स्यामीश्वरस्य मे॥
नैव तत्स्वामिनः साक्षाद् दासः पर्य्युद्यतां त्वया। १०
न चेत् त्वं शप्स्यसे तेन सदोषश्च भविष्यसि॥
कुवंशः शपते तातं मातु र्नाशंसते शुभं॥ ११
कुवंशः स्वमतो शुद्धः स त्वधौतमलः स्थितः॥ १२
कुवंशो ऽत्युच्चदृष्टिश्च प्रांशुनेत्रच्छदान्वितः॥ १३
कुवंशः खड्गवद् दन्तैः कर्त्तरीवच्च खादनैः। १४
उच्छेत्तुं क्षितितो निःस्वान् मर्त्याद् दीनांश्च चेष्टते॥
रक्तपायाः सुते द्वे स्तो देहिदेहीतिनामिके। १५
त्रीणि वस्तून्यतृप्तानि चतुर्थञ्चापि तैः समं।
शान्तकामो ऽहमेतत् तै र्गदितुं नहि शक्यते॥
अतृप्तौ प्रेतलोकश्च बन्ध्यागर्भश्च सर्व्वदा। १६
जलै र्न तृप्यते भूमिरनलश्च न वक्त्ययलं॥
येनोपहस्यते तातो मातुश्चाज्ञावमन्यते। १७
प्रान्तराश्रितकाकैस्तच्चक्षुरुन्मूलयिष्यते।
उपग्रसिष्यते वा तद् शावकै र्गृध्रपक्षिणां॥

१८ वस्तुत्रयं ममागम्यं चतुर्थञ्च न बुध्यते ॥
१९ उत्क्रोशस्य गतिं व्योम्नि भुजगस्य गतिं भुवि।
पोतस्य गतिरम्भोधौ पुंसश्च युवतौ गतिः ॥
२० भार्य्याया व्यभिचारिण्यास्तादृगेव गतिर्भवेत्।
सा भुक्त्वा परिमृज्यास्यं वक्त्यघं न कृतं मया ॥
२१ भारेण त्रीणि वस्तूनि सकम्पां कुर्व्वते धरां।
चत्वारीमानि सोढुञ्च न शक्यन्ते तया किल ॥
२२ दासेयः प्राप्तराज्यो भक्तैस्तृप्तश्च बालिशः।
२३ अप्रिया पतिवत्नी स्त्री दासी च स्वामिनीजया ॥
२४ चत्वारीमानि वस्तूनि चोदिष्ठान्यत्र भूतले।
तथापीमानि विज्ञानि लब्धज्ञानानि सन्ति च ॥
२५ जातिः पिपीलिकानां या दुर्ब्बला सा न संशयः।
शस्यच्छेदनकाले तु ताः कुर्व्वन्त्यन्नसञ्चयं ॥
२६ शाफनाख्यशशानाञ्च जातिः शक्तिमती नहि।
तथापि स्वीयवेश्मानि तैः स्थाप्यन्ते दृढाद्रिषु ॥
२७ शलभानां समाजस्य राजा को ऽपि न विद्यते।
रचिताः किन्तु सर्व्वे ते सेनावत् कुर्व्वते गमं ॥
२८ स्वहस्तालम्बिनी लूता राजधामापि सेवते ॥
२९ पदार्थास्त्रय एवैते सन्ति सुन्दरगामिनः।
सदृशस्तैश्चतुर्थो ऽपि पदन्यासेन शोभनः ॥
३० बलीयान् प्राणिनां सिंहः सर्व्वेभ्यो ऽप्यपराङ्मुखः ॥
३१ सुकटिस्तुरगश्छागः प्रजाभिश्च वृतो नृपः ॥
३२ दर्पाद् भ्रान्तः कुचिन्तां चेत् कुर्य्या रुन्धि मुखं तदा ॥
३३ अतिव्यग्रतया दुग्धाद् यद्वदुत्पद्यते दधि।
अतिव्यग्रतया घ्राणाद् रक्तञ्चोत्पद्यते यथा।
अतिव्यग्रतया कोपाद् वैरमुत्पद्यते तथा ॥

---

## ३१ एकत्रिंशो ऽध्यायः।

१ लिमूयेलराजस्य मातुरुपदेशकथनं ९ उत्तमस्त्रीवर्णनञ्च।

१ लिमूयेलाख्यभूपालं प्रतीमा वाच ऊचिरे।

इमा येश्वरिकादेशात् तस्य मातादिदेश तं॥
किं त्वां वच्मि मत्पुत्र मदीयोदरसम्भव। २
अहं त्वां किं वदिष्यामि मद्व्रतानां फलोदय॥
स्वीयशक्तिस्त्वया नैव कामिनीभ्यः प्रदीयतां। ३
नैव राजनिहन्त्रीषु स्वतेजो वा समर्प्यतां॥
न भूपेषु न भूपेषु पानं मद्यस्य युज्यते। ४
लिमूयेल सुराह्यमा नरेन्द्रेषु न युज्यते।
यतो राजा सुरां पीत्वा व्यवस्थां विस्मरिष्यति। ५
दुर्भाग्यानां विचारञ्च विपरीतं करिष्यति॥
दत्त मद्यमधन्याय दत्त दुर्मनसे सुरां॥ ६
स मनुष्यस्तदा पीत्वा स्वदैन्यं विस्मरिष्यति। ७
न पुनश्च निजक्लेशस्तेनानुचिन्तयिष्यते॥
विवृणु स्वीयवक्त्रं त्वं स्तब्धवाचां नृणां कृते। ८
सकलानामनाथानां विवादस्यैव सिद्धये॥
विवृणु स्वीयवक्त्रं त्वं विचारे न्यायसिद्धये। ९
दुःखिनां दुर्गतानाञ्च विवादं सुविनिश्चिनु॥
सम्प्राप्तुं शक्यते केन गुणिनी सहधर्म्मिणी। १०
प्रवालेभ्यो ऽपि मूल्येन सा त्वतीवातिरिच्यते॥
तद्भर्त्तु र्हृदयं तस्यां विश्वासं कुरुते दृढं। ११
लाभाभावस्तया तस्य न कदाचन जायते॥
केवलं मङ्गलं तस्य न च किञ्चिदमङ्गलं। १२
क्रियते जीवनं यावद् एकैकस्मिन् दिने तया॥
मेषलोमामतस्यांश्च सा करोति गवेषणं। १३
करयोः परितोषाय विधत्ते च परिश्रमं॥
वणिजाञ्च वहित्राणि मन्ये सा सदृशी भवेत्। १४
स्वभक्ष्याणि तया यस्माद् आनीयन्ते सुदूरतः॥
रजन्यां न व्यतीतायाम् उत्थाय स्वप्नतश्च सा। १५
स्वजनेभ्यो ददात्यन्नं दासीभ्यः कार्य्यमाह्निकं॥
पर्य्यालोच्य च केदारं तल्लाभः साध्यते तया। १६
स्वीयपाण्योः फलं दत्त्वा द्राक्षोद्यानञ्च रोप्यते॥
सा बलेनैव बध्नाति कटिं मेखलया यथा। १७

कुरुते स्वीयबाहू च महाशक्तिसमन्विती॥
१८ स्वव्यापारस्य सुस्वादु मन्यते हि फलं तया।
नैव निर्व्वाणतां रात्रौ तस्या दीपः प्रगच्छति॥
१९ तर्कुं प्रति स्वहस्तौ सा विस्तृणोति हि यत्नतः।
परिगृह्णाति पञ्जीञ्च स्वीयपाणिद्वयेन सा॥
२० दुर्गतायापि दानार्थं तया हस्तः प्रसार्य्यते।
दरिद्रस्योपकारार्थं स्वकरञ्च प्रगृह्यते॥
२१ कृते स्वपरिवाराणां नीहारान्न बिभेति सा।
सर्व्वे परिजनास्तस्या मेशारान् दधते यतः॥
२२ निर्म्मीयन्ते तया स्वार्थं निचोला अतिसुन्दराः।
दुकूलं शोणवर्णञ्च वस्त्रं परिदधाति सा॥
२३ पतिस्तस्याः सुविख्यातः पुरद्वारस्थसंसदि।
देशीयमुख्यलोकानां सभायामुपवेशनात्॥
२४ सा च कुर्पासकं कृत्वा विधत्ते तस्य विक्रयं।
मेखलाञ्च विनिर्म्माय वणिजे सा प्रयच्छति॥
२५ सा नारी बलतेजोभ्यां वस्त्रवत् परिवेष्ट्यते।
अनागतञ्च कालं सा स्मेरवक्त्रा प्रतीक्षते॥
२६ केवलं ज्ञानभावेन स्ववक्त्रं विवृणोति सा।
सौजन्यस्य विधिस्तस्या रसनायाधितिष्ठति॥
२७ सा स्वीयपरिवाराणाम् आचारेषु सचेतना।
नैवालस्येन संयुक्ताम् अन्नं भुंक्ते कथञ्चन॥
२८ पुत्रास्तस्याः समुत्थाय धन्यां तां प्रवदन्ति हि।
तद्वदुत्थाय तद्भर्त्ता तामित्थं सुप्रशंसति॥
२९ बह्वीभिरेव कन्याभि र्गुणवत्त्वं प्रकाशितं।
सकलाभ्यस्तु ताभ्योऽपि त्वमतीवातिरिच्यसे॥
३० चारुता केवलं माया सौन्दर्य्यञ्चाप्यवास्तवं।
परमेशात् तु या भीता सा नारी स्तुतिमर्हति॥
३१ यूयं तत्करयो र्योग्यं फलं तस्यै प्रयच्छत।
पुरद्वारेषु तस्याश्च सर्व्वकर्म्म प्रशंसत॥

# उपदेशकः।

---

## १ प्रथमोऽध्यायः।

१ आभाषः ४ सर्व्ववस्तूनामसारत्वं १२ सर्व्वकर्म्मणां निष्फलत्वं।

१ दायूदात्मजस्य यिरूशालमस्थराजस्योपदेशकस्येमानि वाक्यानि।

२ अलीकानामलीकाग्रमिति वक्त्युपदेशकः।
अलीकानामलीकाग्रम् अलीकं सकलं भवेत्॥
३ सूर्य्यस्याधो मनुष्येण क्रियते यः परिश्रमः।
कृत्स्नात् परिश्रमात् तस्मात् को लाभस्तस्य जायते॥
४ युगमेवातियात्येकं समायात्यपरं युगं।
सर्व्वन्तु समयं यावत् स्थिरा सन्तिष्ठते धरा॥
५ असौ सूर्य्यस्तथोदेति पुनरस्तं प्रयाति च।
स्वस्थानं त्वरितं गत्वा तत्रोदेति पुनश्च सः।
६ दक्षिणाञ्च दिशं याति प्रत्यायात्युत्तरं पुनः।
इत्थं प्रगच्छति भ्राम्यन् स्वपर्य्यायैः सदागतिः॥
७ सर्व्वा नद्यो ऽर्णवं यान्ति सो ऽर्णवस्तु न पूर्य्यते।
यत् स्थानं निम्नगा यान्ति तद्धि यान्ति पुनः पुनः॥
८ सर्व्वाः श्रमावहा वाचस्ताश्च वक्तुं नरो ऽक्षमः।
अतृप्तं दर्शने नेत्रम् अपूर्णा श्रवणे श्रुतिः॥
९ भूतं यद् भवितव्यं तत् कृतं यत् तत् करिष्यते।
अत्र भानोरधः किञ्चिन्नूतनं नहि जायते॥
१० पश्य नूतनमस्त्येतदिति यस्मिन् निगद्यते।
पुरैवासीत् तदस्मत्प्राग् अतीतेषु युगेषु हि॥
११ यदभूत् पूर्व्वकालेषु तस्याद्य नास्त्यनुस्मृतिः।
अद्य यद् भावि तस्यापि पश्चान्न भविता स्मृतिः॥
१२ उपदेशक एवाहं निवसन् यिरूशालमे।
इस्रायेलीयलोकानां समकार्षं नरेन्द्रतां॥
१३ नभसो ऽधस्तु यत् किञ्चित् क्रियते तत् परीक्षितुं।
ज्ञानेन चानुसन्धातुं स्वमनो ऽहं न्यवेशयं॥

निमित्तं नरपुत्त्राणां विषमो ऽयं परिश्रमः।
तेभ्यः श्रान्तिप्रदानार्थम् ईश्वरेण निरूपितः॥
१४ अदर्शं सर्व्वकर्म्माणि क्रियमाणं रवेरधः।
पश्य सर्व्वमलीकं हि मनसश्च विडम्बनं॥
१५ यद् वक्रं तद्दृजूकर्त्तुं नैव केनापि शक्यते।
तथैवाविद्यमानं यद् अङ्कितुं तन्न शक्यते॥
१६ स्वकीयमनसा मध्ये मयागद्यत वागियं।
मत्पूर्व्वं पश्य ये ऽध्यक्षा अभवन् यिरूशालमे।
तेभ्यः सर्व्वेभ्य एवाहं महाप्रज्ञासमन्वितः।
बहुज्ञानेन बुद्ध्या च दीपितं मम मानसं॥
१७ प्रज्ञां बोद्धुं मनो धत्त्वा मोहं मौर्ख्यञ्च वेदितुं।
मयाज्ञायीदमप्यस्ति मानसस्य विडम्बनं॥
१८ यतो ज्ञानस्य बाहुल्यं व्यथाबाहुल्यसंयुतं।
विद्या च वर्द्धते यस्य तस्य खेदो ऽपि वर्द्धते॥

---

## २ द्वितीयो ऽध्यायः।

१ सांसारिकसुखस्य निष्फलत्वं १२ ज्ञानस्य मौर्ख्यादुत्कृष्टत्वं इत्यादि।

१ परीक्षिष्ये सुखेन त्वाम् एहि त्वं भुङ्क्ष्व मङ्गलं।
इत्यवादि मया स्वान्तम् अलीकन्तु तदप्यभूत्॥
२ हासं प्रति मया प्रोक्तं हतबुद्धिरसाविति।
हृष्टताञ्च प्रति प्रोक्तं किं कर्त्तुं शक्यते ऽमुया॥
३ नभसो ऽधो नृसन्तानाः स्वल्पसङ्ख्यमितायुषि।
किं कृत्वा प्राप्नुयुः क्षेमं यावन्न निश्चिनोमि तत्।
तावन्मनो नयन् प्रज्ञां मद्ये योक्ष्याम्यहं तनुं।
मूढताञ्चावलम्बिष्ये मनसैतदचिन्तयं॥
४ अतो महान्ति कार्य्याणि कर्त्तुमारब्धवानहं।
५ उद्यानानि तथा स्वार्थम् अकुर्व्वं काननानि च।
भूरुहान् फलिनस्तत्र नानाविधानरोपयं॥
६ वृक्षोत्पादककान्तारं सेक्तुं सरांसि चाखनं॥
७ दासानक्रीणि दासीश्च गृहजाश्च ममाभवन्।

यिरूशालमि मत्पूर्व्वं यावन्तश्चावसन् नराः।
तेभ्यः सर्व्वेभ्य एवासं गोमेषै धनवानहं॥
समचैषमहं रौप्यं जातरूपञ्च भूरिशः। ८
राज्ञां नानास्थलानाञ्चासामान्यानि वसून्यपि॥
गायकान् गायिकाश्चापि मन्निमित्तं न्ययोजयं।
सुखहेतून् नृपुत्राणां पत्नीमुपस्त्रियो ऽपि च॥
यिरूशालमि मत्पूर्व्वं यावन्तो न्यवसन् जनाः। ९
तेभ्यः सर्व्वेभ्य एवासं महान् बुद्ध्या च संयुतः।
मामकीना च या प्रज्ञा मयि सापि व्यतिष्ठत॥
स्वाक्षिभ्यां याचितं किञ्चिन्मया नैवोपसंहृतं। १०
स्वमनः सुखभोगाच्च कस्माच्चिन्न निवारितं।
यतो मम श्रमात् कृत्स्नाद् यत् सुखं मनसो ऽभवत्।
मम लभ्यं तदेवासीत् स्वीयकृत्स्नपरिश्रमात्॥
आलोच्य लक्षितं कर्म्म स्वहस्ताभ्यां कृतं मया। ११
कृतञ्च साधनेच्छातः स्वीयसर्व्वपरिश्रमं।
बुद्धमवास्तवं सर्व्वं मनसश्च विडम्बनं।
अत्र दिवाकरस्याधः को ऽपि लाभो न विद्यते॥
प्रज्ञां मोहञ्च मौर्ख्यञ्च प्रावर्त्ते ऽहं निरीक्षितुं। १२
राज्ञः पश्चाद् य आयाति स जनः किं करिष्यति।
कृतं यत् पूर्व्वकालेषु स तदेव करिष्यति॥
किन्त्वन्धकारतो यादृक् दीप्तिरुत्कृष्टता भवेत्। १३
ज्ञानस्योत्कृष्टता मौर्ख्यात् तादृशी वीक्षिता मया॥
मूर्द्धन्यक्षो ज्ञानिनो नेत्रे ध्वान्ते भ्राम्यति बालिशः। १४
गतिरेका तु सर्व्वेषामित्यपि ज्ञातवानहं॥
तदा चित्ते मया प्रोक्तं दशा मूर्खस्य या भवेत्। १५
ममापि भविता सैव महाज्ञान्यभवं कुतः।
पश्चैतदप्यलीकं स्यादिति चित्ते मयोदितं॥
मूर्खतो नास्ति विज्ञस्य चिरस्थायिन्यनुस्मृतिः। १६
यस्माद् आगामिकालेषु सर्व्वं सुविस्मरिष्यते।
हाहा विज्ञस्य मृत्युश्च मूर्खस्येव भविष्यति॥
समजायत तत्पश्चात् जीवने ऽपि घृणा मम। १७

अपरञ्चयच्च मां कर्म्म क्रियमाणं रवेरधः।
सर्व्वमेव यतो ऽलीकं मनसश्च विडम्बनं॥
१८ अपरन्ते ऽहं श्रमे कृतस्ते सूर्य्यस्याधो मया कृते।
सर्व्वं यतो ऽर्पयिष्यामि नरे भाविनि मत्परं॥
१९ स तु विज्ञो ऽल्पबुद्धिर्वा भवितेति न निश्चितं।
सूर्य्यस्याधो मया किन्तु कृतो यत्र परिश्रमः।
ज्ञानं यत्र प्रयुक्तञ्च तेषां मामककर्म्मणां।
स्वामित्वं लप्स्यते तेन पश्यैतदप्यवास्तवं॥
२० सूर्य्यस्याधो ऽहमश्राम्यं सकलैर्यैः परिश्रमैः।
तत्रान्तःकरणस्याशां प्रावर्त्तं प्रोज्झितुं तदा॥
२१ बुद्ध्या ज्ञानेन सिद्ध्या च नरः कृत्वा परिश्रमं।
प्राप्तफलं करोत्यन्यं तत्राकृतपरिश्रमं।
पश्यैतदप्यलीकं हि व्यसनञ्च सुदुःसहं॥
२२ यतो दिवाकरस्याधो यत्र श्राम्यति मानवः।
तस्मात् कृतस्तुच्छ्रमात् तस्य मनस्तापाच्च किं फलं॥
२३ तस्य सर्व्वदिनं कष्टं चेष्टनञ्च व्यथाकरं।
मनो रात्रौ न निद्राति पश्यैतदप्यवास्तवं॥
२४ मङ्गलं भोजनात् पानात् स्वकीये च परिश्रमे।
मनःसन्तर्पणादन्यत् मनुष्यस्य न विद्यते।
ईश्वरस्य कराच्चैतत् प्राप्यमितीक्षितं मया॥
२५ आहारैः सौख्यभोगैश्च कस्तु मत्तो ऽतिरिच्यते॥
२६ पश्य परेश्वरो यस्मिन् मनुष्ये परितुष्यति।
तस्मै बुद्धिञ्च विद्याञ्च हृष्टताञ्च ददाति सः॥
पापिने यच्छति क्लेशं सञ्चेतव्यं ततो धनं।
राशीकृत्य च दातव्यं तेनेशस्य प्रिये नरे॥
पश्यैतदप्यलीकं हि मनसश्च विडम्बनं॥

---

## ३ तृतीयोऽध्यायः।

१ कालस्य प्रभेदादायुषो ऽसारत्वं १६ ईश्वरस्य विचारो मनुष्यस्यासारत्वञ्च।

१ यत् किञ्चिज्जायते तस्य स्थायिकालो ऽपि विद्यते।

व्योम्नो ऽधः सर्व्वकार्य्यस्य स्वकीयसमयो ऽस्ति च ॥
समयो जननस्यास्ति समयो मरणस्य च। २
समयो रोपणस्यास्ति कालो रोपितकर्त्तने ॥
समयश्च बधस्यास्ति कालश्चिकित्सनस्य च। ३
समयो भञ्जनस्यास्ति समयो ग्रथनस्य च ॥
समयः क्रन्दनस्यास्ति समयो हसनस्य च। ४
समयः शोचनस्यास्ति समयो नर्त्तनस्य च ॥
समयो ग्रावविक्षेपे समयो ग्रावसञ्चये। ५
काल आलिङ्गनस्यास्ति कालश्च श्लेषवर्ज्जने ॥
समयो ऽन्वेषणस्यास्ति समयो ऽपचयस्य च। ६
समयो रक्षणस्यास्ति समयः क्षेपणस्य च ॥
समयो दारणस्यास्ति समयः सीवनस्य च। ] ७
समयो मौनभावस्य समयो भाषणस्य च ॥
समयः प्रणयस्यास्ति समयो गर्हणस्य च। ८
समयः समरस्यास्ति कालः सन्धेश्च विद्यते ॥
कः स्वपरिश्रमाल्लाभो जायते कर्म्मकारिणः ॥ ९
ईश्वरेण नृसन्तानान् आयासयितुमाशयात्। १०
यो निरूप्यत आयासः स समालोचितो मया ॥
निर्म्मितं सकलं तेन स्वीयकाले मनोहरं। ११
विश्वमेव तथा तेन नराणां निहितं हृदि ॥
तस्मादेव परेशेन क्रियमाणाखिला क्रिया।
साद्यन्तमनुसन्धातुं मनुष्येण न शक्यते ॥
आनन्दाज्जीवनं यावत् सदाचाराच्च नेतरं। १२
मङ्गलं विद्यते तेषामिति जानामि निश्चितं ॥
कस्यचिद् भोजनं पानं सर्व्वस्मिंश्च परिश्रमे। १३
सुखास्वादनमीशस्य दानमेव न संशयः ॥
जाने ऽहन्त्वीश्वरो यद्यत् कुरुते तत् सनातनं। १४
तस्य वृद्धि र्न कर्त्तव्या न च कर्त्तव्यमूननं।
नरा ईशाद् बिभीयु र्यत् तदर्थं तत् करोति सः ॥
यदस्ति तत् पुरैवासीद् भावि यत् तत् पुराभवत्। १५
यत्तु कालेन विध्वस्तं तद् उपस्थापयतीश्वरः ॥

१६ सूर्य्यस्याधः पुनर्व्वारं मया कृत्वावलोकनं।
स्थानं दृष्टं विचारस्य तत्राधर्म्मस्त्वविद्यत।
धर्म्मस्थानञ्च सन्दृष्टं तत्राधर्म्मस्त्वविद्यत॥
१७ तदानीं मनसो मध्ये वागियं गदिता मया।
धार्म्मिकाधार्म्मिकावेव विचारयिष्यतीश्वरः॥
एकैकस्याश्च चिन्ताया एकैकस्य च कर्म्मणः।
स्वकीयसमयस्तस्य सन्निधौ समवाप्स्यते॥
१८ नृसन्तानान् समुद्दिश्य मया प्रोक्तमिदं तदा।
एतया दृश्यया तेषाम् ईश्वरस्तान् परीक्षते।
स्वयं यत् पशुतुल्यास्ते तच्च तैः परिदृश्यते॥
१९ नृसन्तानस्य यद् भाग्यं तद्धि भाग्यं पशोरपि।
एकमेव तयो भाग्यं म्रियेते तावुभौ समं।
सर्व्वेषाम् एकधा प्राणा नरः श्रेयान् पशो नहि॥
२० यस्माद् यत् किञ्चनैवास्ति सकलं तदवास्तवं।
यद् यदेवास्ति सर्व्वं तत् स्थानमेकं प्रगच्छति।
सर्व्वमेव रजोजातं सर्व्वं याति रजः पुनः॥
२१ आत्मानं नरपुत्त्राणां को जानात्यूर्द्ध्वगामिनं।
को वात्मानं पशो र्वेत्ति स्थित्वा अधोऽवरोहिणं॥
२२ मया दृष्टं मनुष्यस्य स्वीयकर्म्मणि हर्षणात्।
नेतरं विद्यते क्षेमं तस्य लभ्यं तदेव हि॥
स्वतः पश्चात्तु यद् भावि तद् द्रष्टुं यत्र गच्छति।
केन तत् स्थानमानीय स उपस्थापयिष्यते॥

---

# ४ चतुर्थोऽध्यायः।

उपद्रव ईर्ष्यालस्यं लोभ एकाकिता मूर्खत्वञ्चेतेरायुषो ऽसारत्वं।

१ परावर्त्त्य मनः पश्चात् क्रियमाणं रवेरधः।
नानात्याचमभिद्रोहं विचार्य्येदं मयेक्षितं।
क्रन्दतां पीडितानां हि सान्त्वको नहि विद्यते।
पीडके दृढहस्ते ऽपि सान्त्वको नहि विद्यते॥
२ ततो ये ऽद्यापि जीवन्ति तेभ्यो जीवद्भ्य एव तान्।

प्रमीतान् अवदं धन्यान् त्यक्तं यै र्जीवनं पुरा॥
उभयोस्तु तयो र्धन्यः सो ऽद्याप्यप्राप्तजीवनः। ३
येन नादर्श्यसत्कर्म्म क्रियमाणं रवेरधः॥
सर्व्वपरिश्रमः पश्चात् सर्व्वञ्च कार्य्यसाधनं। ४
बन्धो र्बन्धुं प्रतीर्ष्यायाः मूलमित्यालोचितं मया।
नामैतदप्यलीकं हि मनसश्च विडम्बनं॥
मूर्खः कुर्व्वन् करश्लेषं स्वीयमांसानि खादति॥ ५
वरं विश्रामसंयुक्तं करपुटस्य पूरणं। ६
न च श्रममनोदुःखैः सार्द्धं मुष्ट्योः प्रपूरणं॥
पुनर्व्वारं मया दृष्टा सूर्य्यस्याधो व्यलीकता॥ ७
एकाकी वर्त्तते कश्चिद् द्वितीयेन विवर्ज्जितः। ८
पुत्रो न विद्यते तस्य सोदरो ऽपि न विद्यते।
श्रमस्तस्य त्वनन्तो ऽस्ति धनै र्दृष्टि र्न तृप्यति॥
इत्थं आत्मानं हं क्षेमात् स्वमनो वारयामि यत्।
निमित्तं कस्य कुर्व्वे तद् इति तेन न गण्यते।
नामैतदप्यलीकं हि व्यसनञ्च व्यथाकरं॥
एकाकी यो नरस्तस्मात् श्रेय एव नरद्वयं। ९
यतः श्रमस्य मध्ये ऽपि सुफलं विद्यते तयोः॥
तयोः पतितयोरेकम् अन्य उत्थापयिष्यति। १०
एकाकी वर्त्तते यस्तु पतनं तस्य बाधकं।
तमुत्थापयितुं यस्मान्नापरः को ऽपि विद्यते॥
यद्येकत्र शयाते द्वौ तर्ह्युष्णत्वमवाप्नुतः। ११
यस्त्वेकाकी कथं वै स शक्नोति प्राप्तुमुष्णतां॥
एकाक्याक्रम्यते येन स द्वाभ्यां प्रतिबाध्यते। १२
त्रिगुणीकृतसूत्रञ्च न तूर्णं छिन्नतां व्रजेत्॥
वरं दीनः सुधी बालो न च राजा जरातुरः। १३
मौर्ख्याद् येन पुनः शिक्षा ग्रहीतुं नहि शक्यते॥
बालो यद्यपि राज्यार्थं कारागाराद् विनिर्गतः। १४
राजत्वसमये तस्य जन्म प्राप्तस्य निर्धनः॥
तथापि भास्करस्याधो ये कुर्व्वन्ति गमागमौ। १५
जीविनस्ते द्वितीयस्य तस्य यूनो ऽनुगामिनः।

यो वृद्धस्य पदं प्राप्त इदमालोकितं मया॥
१६ जनश्रेण्या अनन्ताया अग्रतः स प्रगच्छति।
न हर्षिष्यन्ति तस्मिंस्तु मनुष्या भाविकालिकाः।
नामैतदप्यलीकं हि मनसश्च विडम्बनं॥

## ५ पञ्चमोऽध्यायः।

१ धर्म्मे मनुष्यस्य दोषः ८ पराक्रमस्यासारत्वं १० धनस्यासारत्वं १८ सारस्य निर्णयश्च।

१ त्वमीशस्य गृहं यास्यन् स्वपादौ रक्ष यत्नतः।
मूर्खाणां यज्ञतः श्रेष्ठः श्रवणार्थं तवागमः।
पापाचारे यतस्तेषां चेतना नहि जायते॥
२ ईश्वरस्य समक्षञ्च त्वमुच्चारयितुं वचः।
नैव सन्त्वरय स्वास्यं व्यग्रचित्तश्च मा भव॥
ईश्वरो वर्त्तते स्वर्गे पृथिव्यां त्वन्तु वर्त्तसे।
भवन्तु कारणात् तस्मात् स्वल्पा एव तवोक्तयः॥
३ यथायासबहुत्वेन युज्यते स्वप्नदर्शनं।
तथा वाक्यबहुत्वेन रवो मूर्खस्य युज्यते॥
४ व्रतपूर्व्वकमीशाय त्वया यद्यत् प्रतिश्रुतं।
तत्परिशोधनं कर्त्तुं विलम्बो मावलम्ब्यतां॥
यस्मान्मूर्खेषु लोकेषु प्रसादो नहि वर्त्तते।
त्वया यद्धि प्रतिज्ञातं क्रियतां तस्य शोधनं॥
५ वरं व्रतमकृत्वापि न प्रतिश्रवणं त्वया।
न च कृत्वा व्रतं पश्चात् स्वकीयव्रतलोपनं॥
६ कृतपापं वपुः कर्त्तुं मानुजानीहि वक्त्रकं।
भ्रान्तिरासीदिदं वाक्यं स्वर्गदूते च मा वद॥
ईश्वरं स्वीयवाक्येन किमर्थं कोपयिष्यसि।
तव हस्तकृतं कर्म्म कोपात् तस्य विनंक्ष्यति॥
७ स्वप्नदर्शनबाहुल्यं यथालीकत्वसंयुतं।
तथैव वाक्यबाहुल्यं भेतव्यन्त्वीश्वरात् त्वया॥
८ पीडनं धनहीनानां रोधश्च न्यायधर्म्मयोः।
देशे निरीक्षसे चेत् त्वं तर्हि मा विस्मितो भव॥
यस्मात् प्रोच्चतरोऽध्यक्षः सुप्रोच्चस्यापि विद्यते।

पुनः प्रोन्नततमः कश्चिद् विद्यते चोभयोस्तयोः॥
भूम्युत्पन्नस्य यो लाभः सकलेषु स वर्त्तते। ९
सम्भवत्युपकारस्य भूपालस्यापि भूमितः॥
रौप्ये यः प्रीयते तृप्तिं स न प्राप्नोति रौप्यतः। १०
न वा वित्तप्रियो वृद्धिं मन्ये तच्चाप्यवास्तवं॥
वर्द्धमाने धने संख्या वर्द्धते ग्रासकारिणां। ११
चक्षुर्भ्यां दर्शनादन्यत् किं धनस्वामिनां फलं॥
स्वल्पभुग् बहुभुग् वा स्यात् सुखं शेते कृषीवलः। १२
तृप्त्या किन्तु धनाढ्यस्य निद्रानुज्ञायते नहि॥
सूर्य्यस्याधो मया दुःखम् इदं दृष्टं व्यथाकरं। १३
स्वामिना स्वीयसम्पत्ति र्निजानिष्टाय रक्ष्यते॥
व्यसनेन कठोरेण सम्पत्तिः सा विनश्यति। १४
आत्मजं जनयित्वा च रिक्तहस्तः स तिष्ठति॥
जठरान्निजमातुश्च स यथैव विनिर्गतः। १५
परावर्त्तिष्यते तद्वत् नग्नो यातुं यथागतः।
न श्रमेणार्जितं किञ्चित् हस्तेनादाय यास्यति॥
मद्द्वाव्यथाकरं दुःखम् एतदप्यस्ति निश्चितं। १६
सर्व्वथा यद्वदायातस्तद्वदेव स यास्यति॥
किं फलं लप्स्यमानः स कुरुते वायवे श्रमं॥
यावज्जीवनमाहारं कुरुते ध्वान्ते करोति सः। १७
रुष्यते चापि भूयिष्ठा बाधापीडाविडम्बनाः॥
इदं पश्य मया बुद्धं मनुष्याय रवेरधः। १८
स्वल्पघस्रप्रमाणं यद् आयुरीशेन दीयते।
तद् यावत् श्राम्यता तेन स्वीयसर्व्वपरिश्रमात्।
भोजनञ्चैव पानञ्च परिभोगः सुखस्य च।
एतत् क्षेमं सुदृश्यञ्च तस्य भाग्यमिदं यतः॥
दत्त्वा नराय कस्मैचिद् धनसम्पत्तिमीश्वरः। १९
तां भोक्तुं स्वांशमादातुं हर्षितुञ्च निजश्रमे।
क्षमतामपि चेद् यच्छेद् दानं तदीश्वरस्य तत्॥
नैवातीवानुचिन्त्यन्ते घस्रास्तेन निजायुषः। २०
यस्माच्चित्तस्य हर्षेण प्रतिवक्ति तमीश्वरः॥

# ६ षष्ठोऽध्यायः।

१ अभुक्तधनस्य निष्फलत्वं ७ सुखभोगस्यासारत्वं १० जीवनस्यासारत्वञ्च।

१ दुःखमेकं मयादर्शि विद्यमानं रवेरधः।
भूयो भूयो मनुष्येषु घटते तदमङ्गलं॥
२ ईश्वरो दत्तवान् यस्मै धनसम्पत्तिसम्भ्रमान्।
अपूर्णा च मनोवाञ्छा यस्यैकापि न शिष्यते।
भोगस्य क्षमता तस्मै चेदीशेन न दीयते।
उदासीनो नरः किन्तु जायते फलभोगकृत्।
मन्ये तर्हि व्यलीकं तद् व्यसनञ्च व्यथाकरं॥
३ जनयित्वा शतं पुत्रान् जीवित्वा बहुवत्सरान्।
यो नरो यापयत्यत्र दिवसान् बहुसंख्यकान्।
सुखभोगेन चेत् तृप्तिं मनस्तस्य न गच्छति।
कुणपस्तस्य भूमौ च यथार्हं न निखन्यते।
तर्हि वच्मि नरात् तस्माद् गर्भस्रावो ऽतिरिच्यते॥
४ यतः सो ऽलीक आयाति सान्धकारो ऽपयाति च।
तदीयनामधेयञ्च तिमिरेण निगुह्यते॥
५ नैव तेन रवि र्दृष्टो न वा ज्ञानमुपार्जितं।
अत एव नरात् तस्मात् शान्तिस्तस्याधिकाभवत्!
६ सञ्जीवन्नपि वर्षाणां द्विसहस्रं नरो धनी।
मङ्गलं नहि भुङ्क्ते चेत् श्रेष्ठता तर्हि तस्य का।
शेषे किं सकलैः स्थानमेकमेव न गम्यते॥
७ सर्व्वश्रमो मनुष्यस्य स्वीयवक्त्रनिमित्तकः॥
आहारस्य तु या वाञ्छा सा कदापि न पूर्य्यते॥
८ अतो मूर्खान्नरो ज्ञानी किं प्राप्नोत्यधिकं शुभं।
किं वा दीनः सजीवानां साक्षादाचरणे पटुः॥
९ भ्रमणादभिलाषस्य श्रेष्ठं चाक्षुषदर्शनं।
नामैतदप्यलीकं हि मनसश्च विडम्बनं॥
१० अधुना वर्त्तमानस्य नामधेयं पुरा स्मृतं।
सकलै र्ज्ञायते यत् स नर इत्यभिधीयते।
स्वतः शक्तिमता सार्द्धं विवादाय स न क्षमः॥

बहवो विषयाः सन्ति व्यलीकत्वप्रवर्द्धकाः। ११
अतस्तेभ्यो मनुष्येण किं फलं प्रतिलभ्यते॥
नृणां जीवनकाले किं हितं को निश्चिनोति तत्। १२
अलीकं यन्नरस्यायुः स्वल्पपक्षमितन्तु तत्।
याप्यते च मनुष्येण यथा छाया तथैव तत्।
यत्तु भानोरधः पश्चाद् भावि तत् कस्तमादिशेत्॥

---

## ७ सप्तमोऽध्यायः।

१ सुख्यातिशोकसहिष्णुताज्ञानानाम् असारतायाः प्रतीकारः १० ज्ञानस्य दुर्लभत्वं।

नरस्य या सुकीर्त्तिः सा श्रेष्ठा सुगन्धितैलतः। १
तद्वन्मृत्युदिनं तस्य श्रेष्ठं जन्मदिनादपि॥
भोज्यशालाप्रवेशाच्च श्रेष्ठः शोकालयागमः। २
यस्मात् सर्व्वनराणां स परिणामो भविष्यति।
तच्च चित्तनिवेशश्च सजीवेष्वपि युज्यते॥
नृणां हास्यविनोदाच्च श्रेयस्यस्ति विषसता। ३
मुखस्य म्लानता यस्माच्चित्तस्यारोग्यकारिणी॥
शोकवेश्मनि विज्ञानां नराणां वर्त्तते मनः। ४
निर्ब्बोधानां मनः किन्तु हर्षवेश्मनि वर्त्तते॥
मनुष्येणानभिज्ञानां गानस्य श्रवणादपि। ५
श्रेयः प्रज्ञाविशिष्टस्य भर्त्सनाश्रवणं भवेत्॥
पाकस्थाल्या अधो यस्मात् कण्टकानां स्वनो यथा। ६
तथा हासोऽस्ति मूर्खाणां नामैतदप्यवास्तवं॥
दौरात्म्येन नरो विज्ञो हतबुद्धि र्विधीयते। ७
उत्कोचेन विकारश्च हृदयस्य प्रसिध्यति॥
कार्य्यस्यारम्भतः श्रेयान् परिणामो न संशयः। ८
श्रेयान् धीरस्वभावश्च दर्पयुक्तस्वभावतः॥
मनोमध्ये परिक्रोद्धुं मैव त्वं सत्वरो भव। ९
यस्मादज्ञानिनामेव क्रोडे क्रोधोऽवतिष्ठते॥
श्रेष्ठ आधुनिकात् कालात् पूर्व्वकालोऽभवत् कुतः। १०
इति मा पृच्छ यस्मात् स प्रश्नो न ज्ञानमूलकः॥

११ प्रज्ञा पैतृकसम्पत्तेः सममूल्यं हितं भवेत्।
परन्तूत्पद्यते तस्मात् सुफलं सूर्य्यदर्शिनां॥
१२ शरणं हि यथा ज्ञानं वैभवं शरणं तथा।
गुणो ज्ञानस्य किन्त्वेष प्रज्ञा प्राज्ञाय जीवदा॥
१३ ईश्वरस्य क्रियां पश्य तेन यत् कुटिलीकृतं।
तत् पुनः सरलीकर्त्तुं केन मर्त्त्येन शक्यते॥
१४ सुखकाले सुखं भुंक्ष्व दुःखकाले च चिन्तय।
सृष्टौ तावीश्वरेणाभावनुरूपौ परस्परं।
पश्चाद् यद् भावि तत् तस्मान्नरो निर्णेतुमक्षमः॥
१५ मया त्वालोचितं सर्व्वं स्वकीयालीकजीवने।
मनुष्या धार्म्मिकाः के ऽपि विनश्यन्ति स्वधर्म्मतः।
पापिनः के ऽपि पापाच्च जायन्ते दीर्घजीविनः॥
१६ मा भवेरतिधर्म्मी त्वं मैवातिज्ञानमाचरेः।
स्वयं स्वीयविनाशं त्वं किमर्थं साधयिष्यसि॥
१७ मा भवेरतिदुर्वृत्तो मैव मूर्खत्वमाचरेः।
किमर्थं त्यक्ष्यसि प्राणान् असम्पूर्णे निजायुषि॥
१८ एकस्यालम्बनं भद्रम् अशैथिल्यं द्वितीयके।
यत ईश्वरभक्ता ये सर्व्वस्मान्निस्तरन्ति ते॥
१९ नगरं ये ऽधितिष्ठन्ति दश विक्रमिणो नराः।
ज्ञानी ज्ञानेन तेभ्यो ऽपि शक्तियुक्तो विधीयते॥
२० अपराधमकृत्वा यः केवलं धर्म्ममाचरेत्।
तादृशो धार्म्मिकः कश्चिन्नरः क्षित्यां न विद्यते॥
२१ मा सर्व्वासूच्यमानासु वाक्षु ते धीयतां मनः।
न चेत् श्रोष्यसि दासस्य रवं त्वां परिशप्यतः॥
२२ बहुशो यत् त्वयाप्यन्ये शप्तास्तद् वेत्ति ते मनः॥
२३ सर्व्वमेतद् विवेकेन सुपरीक्षितवानहं।
प्रज्ञां लब्धुमचेष्टे च सा तु मत्तो दवीयसी॥
२४ दूरं यत् सुगभीरञ्च तत् प्राप्तुं केन शक्यते॥
२५ प्रज्ञाविवेचने बोद्धुं सुनिर्णेतुञ्च चर्चया।
दोषं मौर्ख्यस्य निश्चेतुमुन्मादस्य च मूर्खतां।
मया स्वीयमनः पश्चात् पुनर्व्वारं प्रवर्त्तितं॥

तदाज्ञायि मयेदं यत् सा स्त्रीरग्रा हतान्ततः। १६
हृद् यस्या वागुराजालं पशुशाखौ च शृङ्खले॥
साक्षादीशस्य यः साधुस्तस्या हस्तात् स रक्ष्यते।
किन्तु यः पातकाचारी स नरो भंत्स्यते तया॥
विवेकन्त्वनुसन्धातुम् एकमेकं प्रपश्यता। १७
इदं पश्य मया बुद्धमिति वक्त्युपदेशकः॥
यन्न प्राप्तं मयाद्यापि तदन्विच्छति मे मनः। १८
एकं मध्ये सहस्रस्य पुरुषं प्राप्तवानहं।
मध्ये तेषान्तु सर्व्वेषां नैकां नारीमवाप्तवान्॥
केवलमेतदेवात्र मया पश्य निरूपितं। २९
ईश्वरेण नराः सृष्टा ऋजुभावसमन्विताः।
अन्विष्टाः किन्तु तैरेव बहुधा परिकल्पनाः॥

---

# ८ अष्टमो ऽध्यायः।

१ राजाज्ञादरस्य कर्त्तव्यत्वं ६ योग्यकाले कर्म्मणः कर्त्तव्यत्वं १२ धर्म्महीनानां धनाद् धर्म्मिणां दैन्यस्य श्रेष्ठता १६ ईश्वरीयकर्म्मणामसन्धानीयत्वञ्च।

क आस्ते ज्ञानिनस्तुल्यः को वाक्यस्यार्थबोधकः। १
प्रज्ञयैव मनुष्यस्य प्रसन्नास्यो विधीयते।
तदीयवदनस्यापि काठिन्यं परिवर्त्त्यते॥
अहं वच्मि त्वया राज्ञ आदेशः परिपाल्यतां। २
ईश्वरीयस्य दिव्यस्य गुरुताया अपेक्षया॥
सहसा तत्प्रकाशात् त्वं प्रस्थानं न कुरुष्व च। ३
कुप्रयुक्तिश्च मातिष्ठ स यदिच्छेत् करोति तत्॥
यस्मादवनिपालस्य वचनं सपराक्रमं। ४
किं करोषीति तं वक्तुं समर्थः को नरो भवेत्॥
आज्ञाग्राही जनो नैव जायते कुप्रयुक्तिवित्। ५
समयं किन्तु नीतिञ्च जानीते ज्ञानिनो मनः॥
समयः पश्य नीतिश्च सर्व्वकार्य्यस्य विद्यते। ६
न चेन्नरस्य दौर्गत्यं दुःसहं नात्र संशयः॥
यस्मात् किं भवितव्यं तत् तेन विज्ञायते नहि। ७

कथं वा भवितव्यं तत् कस्तं ज्ञापयितुं क्षमः॥
८ नास्ति स्वामी नरो ऽसूनामसून् संरक्षितुं क्षमः।
तथा मृत्युदिने तस्य प्रभुत्वं नहि विद्यते।
तस्माद् युद्धाद् विमोक्षस्तु कस्यचिन्नहि जायते।
दुर्जनस्य स्वदौर्जन्यं न कथञ्चन रक्षति॥
९ सर्व्वमेतन्मया दृष्टं क्रियमाणे रवेरधः।
सर्व्वस्मिन्नेव कार्य्ये च मया चित्तं निवेशितं।
प्रभुत्वं कुरुते जातु स्वानिष्टाय नरे नरः॥
१० अपरं दुर्जनानाञ्च दृष्टान्त्येष्टिक्रिया मया।
धर्म्मधाम्नो ऽपि निष्क्रान्ताः के ऽपि तत्र समागमन्।
व्यस्मर्य्यन्त पुरे किन्तु सुकृतो ऽलीकमेव तत्॥
११ दुष्क्रियां प्रति दण्डाज्ञा यन्न सिध्यति सत्वरं।
तस्मात् स्वान्तं नृपुत्राणां दुष्क्रियायै व्यवस्थितं॥
१२ दुष्क्रियाणां शतं कृत्वा किं जीवेत् पापकृच्चिरं।
अस्त्वहं किन्तु जानामि ये नरा बिभ्यतीश्वरात्।
समक्षं तस्य सन्तस्तात्तेषां क्षेमं भविष्यति॥
१३ दुश्चरित्रमनुष्यस्य क्षेमं नैव भविष्यति।
छायातुल्यश्च तस्यायु र्नैव प्राप्स्यति दीर्घतां।
यस्मादीशस्य साक्षात् स न प्रगच्छति साध्वसं॥
१४ व्यलीकञ्चापरं किञ्चिद् दृश्यते भूमिमण्डले।
प्राप्यते धर्म्मिभिः कैश्चिद् योग्या पापात्मनां दशा।
पुनः पापात्मभिः कैश्चिद् योग्या धर्म्मवतां दशा।
एतदपि व्यलीकं स्यादियमेव मति र्मम॥
१५ तदाहमस्तुवं हर्षं यस्मान्नास्ति रवेरधः।
नरस्य भोजनात् पानाद् हर्षणाच्चापरं शुभं॥
सूर्य्यस्याधश्च तस्मै यद् आयुरीशेन दीयते।
तस्य श्रमेण पूर्णस्य तदेवास्ति स्थिरं फलं॥
१६ पश्चात् प्रज्ञामवाप्तुञ्च क्रियमाणमिह क्षितौ।
सर्व्वायासञ्च सन्द्रष्टुं मया चित्तं न्यवेश्यत।
स्वप्नार्थं यद् दिवारात्रं नरो नेत्रे न मीलति॥
१७ ईशस्य सर्व्वकार्य्यन्तु विचार्य्येदं मयेक्षितं।

अत्र दिवाकरस्याधो यद्यत् कार्य्यं विधीयते।
सकलं तन्मनुष्येण विज्ञातुं नहि शक्यते॥
तद् बोद्धुञ्च यतित्वापि नरस्तन्नावगच्छति।
ज्ञातुं कृतमति र्ज्ञानी तन्न शक्नोति वेदितुं॥

---

# ९ नवमोऽध्यायः।

१ मनुष्यस्य निधनवशत्वं ११ ईश्वरीयकर्म्मणः श्रेष्ठत्वं १२ पराक्रमात् ज्ञानस्य श्रेष्ठत्वं।

अतश्चित्तं निवेश्याहं सर्व्वमेतदमार्गयं। १
धार्म्मिका ज्ञानवन्तश्च नराः स्वकर्म्मभिः सह।
करयोरीश्वरस्यैव सन्तिष्ठन्ते समर्पिताः।
न स्नेहं वेत्ति न द्वेषं नरः सर्व्वं पुरः स्थितं॥
अविशेषेण सर्व्वेषां सर्व्वरूपा दशा भवेत्। २
दशैका साध्वसाध्वो र्हि भद्रशुद्धकलङ्किनां।
यज्ञकारिमनुष्यस्य यज्ञत्यागिनरस्य च।
यादृशी च दशा साधोस्तादृशी पापिनो दशा।
यादृशी शपमानस्य दिव्याद् भीतस्य तादृशी॥
सर्व्वेषां यद्दशैकास्ति तदेवात्र रवेरधः। ३
क्रियमाणस्य सर्व्वस्य कर्म्मणः कुत्सितं फलं॥
सन्ति पूर्णान्यधर्म्मेण न्टपुत्त्राणां मनांसि च।
यावज्जीवञ्च मूर्खत्वं तेषां चित्तेषु विद्यते।
तत्पश्चात् प्रेतलोकञ्च ते प्रगच्छन्ति सत्वरं॥
सजीवैः सह यो युक्तः प्रत्याशा तस्य विद्यते। ४
प्रमीतात् पशुराजात् तु जीवन् श्वापि विशिष्यते॥
मरणं भविताश्माकमिति जानन्ति जीविनः। ५
गतप्राणा नराः किन्तु नैव जानन्ति किञ्चन।
लाभो न शिष्यते तेषां लुप्ता यस्मादनुस्मृतिः॥
प्रणयो द्वेष ईर्ष्या च तेषां नाशं ययुः पुरा। ६
सूर्य्यस्याधश्च यत् किञ्चित् क्रियते तत्र कश्चन।
अंशस्तेषां पुनर्व्वारं न कदाचिद् भविष्यति॥
याहि त्वं हृष्टभावेन स्वीयभक्ष्यं प्रभुंक्ष्व च। ७

प्रफुल्लेन च चित्तेन स्वीयद्राक्षारसं पिव।
यस्मात् त्वदीयकार्य्येषु सन्तुष्टो ऽभवदीश्वरः॥
८ तव वस्त्राणि शोभन्तां शुक्लवर्णानि सर्व्वदा।
तावकीनोत्तमाङ्गाच्च तैलं मैवोपसंहर॥
९ तुभ्यं भानोरधो यच्चालीकमायुः प्रदीयते।
तत्र यावन्ति जायन्ते व्यलीकानि दिनानि ते।
तानि यावत् सुखं भुंक्ष्व प्रियया भार्य्यया सह॥
जीवनात् तव येभ्य त्वं श्राम्यस्यत्र रवेरधः।
लभ्यं तेभ्यः श्रमेभ्यो ऽपि तव भाग्यमिदं यतः॥
१० तव हस्तेन यत् साध्यं साध्य त्वं स्वबलेन तत्।
यन्न कार्य्यं न सङ्कल्पो न बुद्धि र्न च विज्ञता।
विद्यते तत्र पाताले यत् प्रति त्वं प्रगच्छसि॥
११ पुनर्व्वारं मया दृष्टमिदमत्र रवेरधः।
न शीघ्रगामिनां द्रावे न वीराणां रणे जयः।
न च ज्ञानवतामन्नं न च बुद्धिमतां धनं।
न बुधानां जनप्रीति र्निश्चितांशो ऽस्ति सर्व्वदा।
समयो दैवयोगश्च यस्मात् सर्व्वानुपैति तान्॥
१२ अधिकन्तु मनुष्यो ऽपि स्वकालं नावगच्छति।
म्रियमाणा यथा मीना जालेनानिष्टकारिणा।
यथा वा पाशबन्धेन म्रियमाणा विहङ्गमाः॥
तैः समा नरसन्तानाः पाशबद्धा भवन्ति हि।
अनिष्टकारके काले हठात् तान् प्रत्युपस्थिते॥
१३ एकदैतादृशी प्रज्ञा मयादर्शि रवेरधः।
प्रत्यभात् सुमहन्ती च सा प्रज्ञा मम दृष्टये॥
१४ आसीदेकं पुरं क्षुद्रं स्वल्पे तत्रावसन्नराः।
तदाक्रम्य महान् राजा वेष्टयामास सर्व्वतः।
तद्विरुद्धञ्च दुर्गाणि सुमहान्ति विनिर्म्ममे॥
१५ तत्रासीद् दुर्गतः कश्चित् प्रज्ञया संयुतो नरः।
स्वीयप्रज्ञाप्रभावेन नगरं तद् ररक्ष सः।
दुर्गतः स नरः किन्तु जनै र्नैवानुचिन्तितः॥
१६ तदाहं प्रोक्तवानेतत् प्रज्ञा श्रेष्ठा बलादपि।

दुर्गतस्य तु या प्रज्ञा सा जनैरवमन्यते।
तदीयेषु च वाक्येषु मनस्ते न निधीयते॥
श्रूयन्ते शान्तियुक्तानि वाक्यानि ज्ञानिनां यथा। १७
न तथा मूर्खराजस्य श्रूयते प्रोच्चघोषणं॥
युद्धास्त्रेभ्योऽपि सर्व्वेभ्यो ज्ञानं मङ्गलदायकं। १८
एकः पापी नरः किन्तु बहुमङ्गलनाशकः॥

---

## १० दशमोऽध्यायः।

१ ज्ञानाज्ञाने अभ्युपदेशकथनं १६ न्यपानधि कथनञ्च।

मक्षिकाकुणपैः स्वल्पैस्तैलं गन्धोपजीविनां। १
उत्पादयति दुर्गन्धं फेनयुक्तञ्च जायते।
तथैव ज्ञानसम्मानौ जयति स्वल्पमूर्खता॥
ज्ञानिनो दक्षिणस्था धीः सव्यस्था लघुधस्य सा॥ २
प्रगच्छन्नपि मार्गेण मूर्खः सन्त्यज्यते धिया। ३
अहमज्ञान इत्येव सकलान् सम्प्रवक्ति सः॥
शास्ता क्रुध्यति चेत् तुभ्यं स्वस्थानं तर्हि मा त्यज। ४
महतामपि पापानां शान्तिर्यस्मात् प्रतिक्रिया॥
एको दोषो मया दृष्टः क्रियमाणो रवेरधः। ५
भूपालस्य सकाशात् स समुत्पन्नो मतिभ्रमः॥
जालभ्यारोप्यते मौर्ख्यम् अतिप्रोच्चपदेष्वपि। ६
स्थानेषु किन्तु निम्नेषु निषीदन्ति धनेश्वराः॥
आलम्बेषु समारूढान् किङ्करान् दृष्टवानहं। ७
जातु किङ्करवद् भूमौ पादाभ्यां गच्छतः प्रभून्॥
खातं खनति यः कश्चित् स तन्मध्ये पतिष्यति। ८
वारणी भिद्यते येन भुजङ्गेन स दंक्ष्यते॥
योऽपकर्षति पाषाणान् स तैरभ्याहनिष्यते। ९
यश्च कृन्तति काष्ठानि परिबाधिष्यते स तैः॥
अतीक्ष्णे सति लौहास्त्रे धारां यो नहि निश्यति। १०
द्विगुणैव प्रयोक्तव्या शक्तिस्तेन भविष्यति।
कर्त्तव्ये सिद्धिलाभस्तु ज्ञानादेव प्रजायते॥

११ निःसारे पठिते मन्त्रे विदग्धत्वरगो यदि।
तावट्टूकनरस्तर्हि कथं स्यादुपकारकः॥
१२ निर्गता ज्ञानिनो वक्त्राद् उक्तयः प्रीतिसम्भवाः।
स्वाधरौ किन्तु मूर्खस्य मनुष्यस्य विनाशकौ॥
१३ निर्गतानां मुखात् तस्य वाचां मौर्ख्यमुपक्रमः।
परिणामस्तदीयोक्तेरुन्मादः सर्व्वनाशकः॥
१४ निर्ब्बोधो यो मनुष्यः स बहुवाक्यानि भाषते।
यत्तु भावि मनुष्येण ज्ञातुं तन्नहि शक्यते।
तत्पश्चाद् भवितव्यं यत् कस्तं तज्ज्ञापयिष्यति॥
१५ स्वश्रमेण नरो मूर्खः क्लान्तिमेव प्रगच्छति।
पुरगामी यतः पन्थास्तेन नैवावगम्यते॥
१६ अधन्या त्वं तदा हे भूस्तव राजा यदा शिशुः।
यदा च तावकाध्यक्षाः प्रत्यूषे भोज्यकारिणः॥
१७ धन्या त्वन्तु तदा हे भू राजा ते कुलजो यदा।
अध्यक्षा उपयुक्ते च समये भोज्यकारिणः।
बलवृद्धेरभीप्साते न च मद्यस्य चेष्टया॥
१८ गृहस्वामिन आलस्याद् वेश्मस्थूणा विशीर्य्यते।
शैथिल्यात् करयो र्गेहे सलिलानि क्षरन्ति च॥
१९ हास्यार्थं रच्यते भोज्यं मद्यञ्चानन्दयत्यसून्।
प्रयोगे किन्तु सर्व्वस्मिन्नर्था एवोपयोगिनः॥
२० राजानं मनसापि त्वं शप नैव कथञ्चन।
शयनागारगर्भेऽपि धनिनं शप नैव वा॥
यस्माद् विहङ्गमेनैव रवः सञ्चारयिष्यते।
प्राणिना पक्षयुक्तेन सन्देशो वा हरिष्यते॥

## ११ एकादशोऽध्यायः।

१ सावधानत्वदातृत्वयोरुपदेशः ७ यौवनकालस्यासारत्वं।

१ अम्भसामुपरि स्वीयं भोज्यमुत्सृज्यतां त्वया।
गतेषु बहुघस्रेषु लप्स्यते तत् त्वया पुनः॥

अंशस्त्वया च सप्तभ्यः किंवाष्टभ्योऽपि दीयतां। २
यस्मात् का का विपत् क्षित्यां भविता त्वं न वेत्सि तां॥
यदाभ्राः पूर्णतां यान्ति तदा वर्षन्त्यपो भुवि। ३
निपतन् दक्षिणायाञ्च वोत्तरायां दिशि द्रुमः।
यस्मिन्निपतति स्थाने तस्मिन्नेवावतिष्ठते॥
यः समालोकते वायुं वीजं वपति नैव सः। ४
यश्च निरीक्षते मेघान् स शस्यं नहि कृन्तति॥
त्वया यद्वत् समीरस्य गति र्नैवावगम्यते। ५
जठरे च सगर्भाया अस्थ्नां वृद्धि र्न बुध्यते।
सर्व्वस्रष्टुस्तथेशस्य क्रिया न ज्ञायते त्वया॥
प्रात र्वप स्ववीजं त्वं सायं हस्तौ न संहर। ६
यस्मादेतत् तदन्यद् वा कतरं सुफलिष्यति।
उभयो र्गुणा एको वा भवितेति न वेत्सि हि॥
रुचिरा दीप्तिरक्ष्णोश्च हितं भास्करदर्शनं॥ ७
यो नरो बहुवर्षाणि जीवन् हृष्यति सर्व्वदा। ८
तेनापि क्रियतां चिन्ता दिवसानां तमस्विनां।
यस्मात् तानि बहून्येव भावि सर्व्वन्त्ववास्तवं॥
हे युवन् स्वीयतारुण्ये त्वमानन्दं समाचर। ९
हृष्टं भवतु चित्तं ते यौवनस्य दिनेषु च।
आचर स्वमनोवाञ्छां कामनां वा स्वनेत्रयोः॥
किन्तु त्वां तस्य सर्व्वस्य विचाराय यदीश्वरः।
राजद्वारं समानेता तत् सम्यक् चिन्त्यतां त्वया॥
चित्तान्निराकुरूद्वेगं क्लेशं वारय देहतः। १०
अरुणोदयवद् यस्मात् तरुणत्वमवास्तवं॥

---

## १२ द्वादशोऽध्यायः।

१ वार्द्धक्यदुःखात् पूर्व्वमीश्वरसेवनस्यावश्यकत्वं ८ ईश्वराद् भीतेः सारत्वं।

स्वीययौवनकाले त्वं स्वस्रष्टारं विचिन्तय। १
मा प्रतीक्षस्व घस्राणां कुत्सितानाम् उपागमं।

मा प्रतीक्षस्व वा तेषां वत्सराणाम् उपस्थितिं।
यानधि वक्ष्यसीदं त्वं न रोचन्त इमे मम॥
२ मा प्रतीक्षस्व तं कालं यस्मिन् यास्यन्ति कृष्णतां।
दिवाकरस्य दीप्तिश्च क्षपानाथ उडूनि च।
वृष्टावपि व्यतीतायाम् आयास्यन्ति घनाः पुनः॥
३ कम्पिष्येते दिने तस्मिन् भवनस्य च रक्षिणौ।
पुरुषौ बलवन्तौ च परिभुग्नौ भविष्यतः।
पेषिकाश्चाल्पतां गत्वा विरमिष्यन्ति कर्म्मतः।
गवाक्षाभ्यां प्रदर्शिन्यौ चान्धतां प्रगमिष्यतः॥
४ कपाटौ पथि रोत्स्येते क्षेष्यते पेषणध्वनिः।
विहगस्य रवादेव निद्राभङ्गो भविष्यति।
गीतेश्च सकलाः कन्या गमिष्यन्त्यवसन्नतां॥
५ उच्चस्थानादपि त्रासस्तदानीं सञ्जनिष्यते।
उपस्थास्यन्ति मार्गे च बहवो भयहेतवः।
वादामाख्यतरोश्चापि पुष्पं चारु न मंस्यते।
शलभश्च स्वभारेण भारग्रस्तो भविष्यति।
आहारीयरसज्ञानं विकारञ्च गमिष्यति॥
यस्मान्नरेण गन्तव्यं चिरकालार्थकं गृहं।
पर्य्यटिष्यन्ति मार्गे च शोकयुक्ता विलापिनः॥
६ कृते त्वया विलम्बे च छेत्स्यते रौप्यशृङ्खलं।
जातरूपीयपात्रञ्च प्रगमिष्यति भग्नतां।
उपान्ते च जलोत्सस्य कलसः शतखण्डतां।
प्रहिपार्श्वस्थचक्रञ्च विदीर्णत्वम् अवाप्स्यति॥
७ प्रत्यायास्यति धूलिश्च स्वोयोत्पत्तिस्थलं मृदं।
प्रत्यायास्यति किन्त्वात्मा स्वीयस्रष्टारमीश्वरं॥
८ अलीकानामलीकाग्रमिति वक्त्युपदेशकः।
यद्यदेवास्ति तत् सर्व्वम् अलीकं नात्र संशयः॥
९ परन्तु ज्ञानवान् यस्मात् स आसीदुपदेशकः।
तस्मात् सोऽशिक्षयल्लोकान् पर्य्यालोच्य परीक्ष्य च।
बह्वीररचयद् वाचो हितज्ञानप्रदायिकाः॥
१० चारुवाक्यानि सम्प्राप्तुम् अन्वैषीदुपदेशकः।

सारल्याल्लिखिता अत्र विश्वास्याः सन्ति चोक्तयः ॥
अङ्कुशैः सदृशाः सन्ति वाचो ज्ञानवतां नृणां। ११
कीलकैः सुदृढं बद्धैः सभाध्यक्षास्त्र सन्निभाः।
एकेनैव च ते सर्व्वे ददिरे पालरक्षिणा ॥
हे मत्पुत्त्र परन्तु त्वं कुरुष्वात्र विवेचनां। १२
सीमा न विद्यते कोऽपि बहुपुस्तकलेखने।
विद्याभ्यासस्य चाधिक्यं शरीरार्थं श्रमावहं ॥
सारवाक्यं समग्रं यत् तत् त्वस्माभि र्निशम्यतां। १३
परमेशाद् बिभीहि त्वम् आज्ञास्तस्य च पालय।
इदं यस्मान्मनुष्यस्य सर्व्वार्थानाम् उपार्ज्जनं ॥
विचारस्थानमीशेन सकलानेष्यते क्रिया। १४
निगूढं सकलञ्चापि यथा भद्रं तथाधमं ॥

# सुलेमना लिखितं परमगीतं।

---

## १ प्रथमोऽध्यायः।

ख्रीष्टं प्रति मण्डल्याः प्रेमादि।

१ सुलेमनः परमगीतं॥

२ आननेन स्वकीयेन भवान् मां परिचुम्बतु।
भवदीयो यतः प्रेमा सुरसो गोस्तनीरसात्॥
३ त्वदीयोत्तमतैलानां सौरभस्यैव कारणात्।
अवतारिततैलेन तव नाम यतः समं।
तस्मादेव त्वयि प्रेमा कन्याभिः संविधीयते॥
४ आकर्ष मां त्वमस्माभिरनुधाविष्यसे तदा।
स्वकीयान्तःपुरं नीत्वा नृपेणाहं प्रवेशिता।
उल्लासमेव हर्षञ्च करिष्यामो वयं त्वयि।
संस्तोष्यामस्तव प्रेम चाधिकं गोस्तनीरसात्।
इमाः सरलभावेन त्वयि प्रेम प्रकुर्व्वते॥
५ हे कन्या यिरूशालमीयाः कृष्णाहं किञ्च सुन्दरी।
केदारीयं यथा दूष्यम् उल्लोचा वा सुलेमनः॥
६ अहं यत् कृष्णवर्णास्मि लच्चिता च विवस्वता।
तत्कृते मैव युष्माभिः कुदृष्टिः क्रियतां मयि॥
मां प्रति क्रोधमालम्ब्य मदीयमातृसूनुभिः।
अहं नियोजयाञ्चक्रे गोस्तनीक्षेत्ररक्षिणी।
मम यद् गोस्तनीक्षेत्रं मया तत्तु न रक्षितं॥
७ हे मदीयहृदः कान्त कुत्र चारयसि व्रजं।
विश्रामयसि मध्याह्ने कुत्र वा तदुदाहर।
तावकीनसहायानां यूथानामेव मध्यतः।
कुतोऽहं पर्य्यटिष्यामि पारक्येव तिरस्कृता॥
८ हे सुसुन्दरि नारीणां यदि त्वं नहि वेत्सि तत्।
मेषाणां पदचिह्नानि तर्हि त्वं समनुव्रज।

चारय स्वाजवत्सांश्च रक्षिणां शिविरान्तिके॥
हे मत्कान्ते फिरौणीयरथे या तुरगी मम। ९
उपमां तव कुर्व्वे ऽहं तुरग्यैव तया सह॥
शोभां मुक्तावलिभ्यां हि तव गण्डौ प्रगच्छतः। १०
त्वदीयो गलदेशश्च रत्नहारेण राजते॥
वयं काञ्चनरज्जूश्च निर्म्मास्यामः कृते तव। ११
स्थाने स्थाने सुदृश्यैर्हि चित्रिता रौप्यवर्त्तुलैः॥
यावद्राजोपविष्टो ऽस्ति भोज्यगेहीयमण्डले। १२
तावन्मम जटामांसी यच्छति स्वीयसौरभं॥
गन्धरसीयवृक्षस्य गुच्छतुल्यः प्रियो मम। १३
मामकस्तनयो र्मध्ये यापयिष्यति यामिनीं॥
ऐङ्गिदीगोस्तनीक्षेत्रं येषां प्ररोहणस्थलं। १४
तेषां कोफरपुष्पाणां गुच्छतुल्यः प्रियो मम॥
हे प्रिये मम पश्य त्वं सुन्दरी त्वं हि सुन्दरी। १५
कपोतसदृशञ्चास्ति तावकं लोचनद्वयं॥
हे मम प्रिय पश्य त्वं सुन्दरो ऽतिमनोहरः। १६
आवयोश्च हरिद्वर्णं शोभते शयनस्थलं॥
आवयो र्गृहकाष्ठानि भवन्त्येरसपादपाः। १७
देवदारूणि जायन्ते चावयोः पटलं तथा॥

---

# २ द्वितीयोऽध्यायः।

ख्रीष्टस्य समितेश्च मिथः प्रेमालापः।

जवाहं शारणीयास्मि पद्मं वा निम्नभूमिजं॥ १
मध्यतः कण्टकानां हि यथा पद्मं विशोभते। २
मध्यतस्तरुणीनाञ्च तथा मे शोभते प्रिया॥
मध्य आरण्यवृक्षाणां नागरङ्गो द्रुमो यथा। ३
मध्यतस्तरुणानाञ्च तथा मे राजते प्रियः॥
परमानन्दिताहञ्च तच्छायायामुपाविशं।
सुस्वादु चाभवत् तस्य फलं मामकतालुनि॥
भोज्यपानीयगेहस्याभ्यन्तरं नीतवान् स मां। ४

प्रेमरूपो ध्वजस्तस्य प्लवते च ममोपरि ॥
५ द्राक्षाफलीयपूपै र्मां यूयं कुरुत सुस्थिरां।
नागरङ्गफलैरेव कुरुध्वञ्च सचेतनां।
अहं हृत्क्षयरोगेण यस्माद् रोगातुराभवं ॥
६ मदीयमस्तकस्याधस्तस्य वामकरः स्थितः।
तस्य दक्षिणहस्तश्च मे परिष्वजते तनुं ॥
७ हे कन्या यिरूशालमीया मृगीभिः शापयामि वः।
अरण्यचारिणीभि र्वा कुरङ्गीभिरिदं वचः।
स्वयं यावत् समुत्थातुं नैवाकाङ्क्षति मे प्रिया।
सा मा प्रबोध्यतां तावत् मा समुत्थाप्यताञ्च सा ॥
८ रवो ऽसौ मत्प्रियस्यैव स आगच्छति पश्य तं।
प्लवमानो महीध्रेषु प्लुत्यन् पर्व्वतेषु च ॥
९ प्रियो मे मृगसङ्काश एणस्य वत्सेन वा समः।
अस्मत्कुड्यस्य पश्चात् स दण्डवत् पश्य तिष्ठति।
आलोकते गवाक्षैश्च जालकैश्च निरीक्षते ॥
१० अभिभाष्य प्रियो मे स मान्त्विदं वाक्यमब्रवीत्।
हे प्रिये त्वं समुत्तिष्ठ समागच्छ च सुन्दरि ॥
११ पश्यातीतो ऽस्ति हेमन्तः सुदूरं शिशिरो गतः ॥
१२ भूमौ पुष्पाणि दृश्यन्ते गानकाल उपस्थितः।
अस्मद्देशे कपोतस्य कलशब्दो निशाम्यते ॥
१३ फलान्युडुम्बरस्यापि सुरसानि भवन्ति हि।
विस्तृण्वन्ति सुगन्धञ्च सपुष्पा गोस्तनीलताः।
एहि प्रिये समुत्थाय समागच्छ च सुन्दरि ॥
१४ हे मदीयकपोति त्वं शैलानां गर्भमाश्रिता।
अद्रीणां वा रहःस्थानं मां स्वरूपं प्रदर्शय।
तावकीनरवस्यापि श्रवणं त्वं प्रयच्छ मे।
यस्मात् तव रवो मिष्टस्त्वद्रूपञ्च मनोहरं ॥
१५ अस्मत्क्षतिकरान् यूयं शृगालान् धत्तमर्दय।
क्षुद्रास्ते वञ्चकाः किन्तु द्राक्षावल्लीविनाशकाः।
सपुष्पाः सन्ति चास्माकं सर्व्वा द्राक्षालताः किल ॥
१६ प्रियो मम ममैवास्ति तदीयैवाहमस्मि च।

पद्मानामेव मध्ये स स्वीयं चारयति व्रजं॥
यावन्न वासरो भाति न च छाया पलायते। १७
तावदेव कुरुष्व त्वं प्रति मां पुनरागमं॥
हरिणस्येव सादृश्यं भवता समवाप्यतां।
छिदयुक्तादिशृङ्गस्थकुरङ्गशावकस्य वा॥

---

# ३ तृतीयोऽध्यायः।

समिते दुःखं प्राप्ते च साधनं।

स्वशय्यायां मया रात्रौ हृत्कान्तो मे गवेषितः। १
कृतं गवेषणं किन्तु स मया नह्यलभ्यत॥
अहमुत्थाय मार्गेषु पुर्य्याः शृङ्गाटकेषु च। २
पर्य्यटन्ती करिष्यामि हृत्कान्तस्य गवेषणं।
कृतं गवेषणं किन्तु स मया नह्यलभ्यत॥
नगरे पर्य्यटन्तस्तु रक्षिणो मामवाप्नुवन्। ३
किं दृष्टो मम हृत्कान्तो युष्माभिः पुररक्षिणः॥
तान् विहाय प्रगत्याल्पं हृत्कान्तो ऽधिगतो मया। ४
मया स च धृतो यावत् मां मातुर्न नयेद् गृहं।
मज्जनन्याश्च शुद्धान्तं तावद् विसृज्यते नहि॥
हे कन्या यिरूशालमीया मृगीभिः शापयामि वः ५
अरण्यचारिणीभि र्वा कुरङ्गीभिरिदं वचः।
स्वयं यावत् समुत्थातुं नैवाकाङ्क्षति मे प्रिया।
सा मा प्रबोध्यतां तावत् मा समुत्थाप्यताञ्च सा॥
कासौ धन्वत आयाति धूमस्तम्भगणोपमा। ६
धूपेन वासिता सम्यग् रसगन्धस्य कुन्दरोः।
अन्येषां सकलानाञ्च द्रव्याणां गन्धजीविनः॥
शिविकासौ सुलेमानः पश्य तस्याश्चतुर्द्दिशि। ७
स्थिताः षष्टि र्महावीरा इस्रायेलीयवंशजाः॥
खड्गं धरन्ति ते सर्व्वे समरार्थं सुशिक्षिताः। ८
ऊरौ बद्धाश्च सर्व्वेषां निस्त्रिंशा नैशसंशयात्॥
स्वकृते शिविकामेकां सुलेमान् पृथिवीपतिः। ९

लिवानोनीयकाष्ठेन यत्नतो निरमापयत्॥
१० स्तम्भांस्तकार रूप्यीयान् आलम्बं स्वर्णनिर्म्मितं।
उपवेशार्थकं स्थानं कृष्णलोहितवस्त्रकं।
तदीयमध्यभागस्तु पुष्पालङ्कृतवस्त्रवत्।
यिरूशालमीयकन्यानां प्रेमभावेन संस्तृतः॥
११ कन्याः सीयोनवासिन्यो यूयं निष्क्रम्य गेहतः।
निरीक्षध्वं सुलेमानं नृपं किरीटधारिणं।
वैवाहिकदिने तस्य चित्तहर्षकवासरे।
तस्य माता किरीटेन तेन तं पर्य्यभूषयत्॥

---

# ४ चतुर्थोऽध्यायः।

वधूं प्रति वरस्य प्रेम।

१ पश्य त्वं सुन्दरी कान्ते त्वं पश्यातीव सुन्दरी।
शिरःप्रच्छादनीपश्चात् नेत्रे कपोतयोः समे।
गिलियद्गिरिधरालम्ब्यजकवत् तव केशकं॥
२ दन्तास्ते छिन्नलोमानां मेषीणां निवहोपमाः।
क्षालनादुद्गजन्तीनां सापत्यानां यमार्भकैः।
यासां मध्यत एकापि निःसन्ताना न विद्यते॥
३ शोणसूत्रवदोष्ठौ ते वक्त्रञ्चातिमनोरमं।
शिरःप्रच्छादनीपश्चात् गण्डौ दाडिमखण्डवत्॥
४ दायूदीयोच्चप्रासादो यो ऽस्त्रागाराय निर्म्मितः।
यत्र विद्यन्त उद्बद्धाः सहस्रं फलका नृणां।
वीराणामेव चर्म्माणि त्वत्कण्ठस्तेन सन्निभः॥
५ चरतो यौ च पद्मेषु यमजौ मृगशावकौ।
सदृशं हि तयोरेव तावकीनस्तनद्वयं॥
६ यावन्न वासरो भाति न च छाया पलायते।
आश्रयिष्याम्यहं तावद् गन्धरसीयपर्व्वतं।
कुन्दुरुवासितञ्चापि गमिष्यामि शिलोच्चयं॥
७ प्रिये त्वं सर्व्वथा चार्व्वी त्वयि दोषो न विद्यते॥
८ हे कन्ये त्वं समागच्छ लिवानोनाम्नया सह।

लिवानोनान्मया सार्द्धं त्वं समागन्तुमर्हसि।
अमानाख्यगिरेः शृङ्गं सिनीर्हर्म्मोणयोरपि॥
शिखरावधितिष्ठन्ती किं वा केशरिणां गुहाः।
व्याघ्रसेवितशैलान् वा त्वं निरीक्षितुमर्हसि॥
हे मद्भगिनि हे कन्ये त्वमहार्षीर्मनो मम। ९
एकेन तव नेत्रेण व्यपाहार्षीर्मनो मम।
त्वदीयकण्ठभूषाया एकेन शृङ्खलेन वा॥
हे मद्भगिनि कन्ये त्वत्प्रेम कीदृङ्मनोहरं। १०
कीदृक् ते सुरसं प्रेम श्रेष्ठं द्राक्षारसादपि।
गन्धद्रव्याच्च सर्व्वस्मात् तव तैलं ससौरभं॥
हे कन्ये पुष्पनिर्य्यासः क्षरत्योष्ठद्वयात् तव। ११
विद्येते मधुदुग्धे च त्वदीयरसनातले।
गन्धस्त्वदीयवस्त्राणां लिवानोनीयगन्धवत्॥
हे मद्भगिनि कन्ये त्वं संरुद्धोपवनोपमा। १२
संरुद्धोत्सस्य तुल्या त्वं प्रस्रवे मुद्राङ्कितस्य वा॥
रोपिताश्च तवोद्याने दाडिमाः सुफलप्रदाः। १३
कोफराख्यानि पुष्पाणि जटामांसीद्रुमैः सह॥
जटिला कुङ्कुमं चोचं सुगन्धिवल्कलस्तरुः। १४
धूपोत्पादकवृक्षाश्च तथा गन्धरसागुरू।
गन्धद्रव्याणि मुख्यानि सकलान्येव सन्ति हि॥
उद्याने स्थित उत्सो यः स चामृतपयःप्रधिः। १५
लिवानोनीयतोयानां स्रोतसा वा समो भवेत्॥
जागृह्युत्तरवायो त्वं एहि त्वं दक्षिणानिल। १६
वहतो मामकोद्याने विस्रवेत् तस्य सौरभं॥
आगमञ्च निजोद्याने प्रकरोतु मम प्रियः।
सुस्वादून्युपभुङ्क्ताञ्च तदीयानि फलानि सः॥
हे मद्भगिनि कन्ये ऽहं निजोद्यानं समागतः। १७
निजवोलादिसामोदद्रव्याणि प्रचिनोमि हि।
मधुवासेन सार्द्धञ्च चूषामि स्वीयमाक्षिकं।
दुग्धेन सहितं स्वीयं पिवामि द्राक्षिकं रसं॥
बन्धवो यूयमश्नुध्वं पीत्वा तृप्यत हे प्रियाः॥

# ५ पञ्चमोऽध्यायः।

ख्रीष्टस्य समितेश्च मिथो व्यवहरणं तयोः सौन्दर्य्यञ्च।

१ निद्रितासमहं किन्तु मनो ऽतिष्ठत् सुजागरं॥
२ अश्रौषन्त्वाघ्नतो द्वारं स्वप्रियस्य रवं तदा।
हे स्वस मम हे कान्ते हे कपोत्यनघे मम।
मत्कृते मोचय द्वारं तोयेनार्द्रं शिरो मम।
मूर्द्धजा मम पूर्णाश्च रजनीजलविन्दुभिः॥
३ वसनं त्यक्तवत्यस्मि वसिष्ये तत् कथं पुनः।
पादौ क्षालितवत्यस्मि कथं लेप्स्यामि तौ पुनः॥
४ मम प्रियो गवाक्षेण तदा प्रासारयत् करं।
अभवत् करुणार्द्रञ्च तमुद्दिश्य स्वमान्तरं॥
५ प्रियं प्रवेशयिष्यन्ती चोदतिष्ठमहं ततः।
कराभ्यामङ्गुलीभ्याञ्च मम गन्धरसो ऽक्षरत्।
अर्गलस्यापि कर्णेषु ततो गन्धरसो ऽस्रवत्॥
६ स्वप्रियस्य निमित्तञ्च द्वारं मोचितवत्यहं।
मामकीनप्रियः किन्तु प्रस्थायापगतस्तदा।
तदीयालापकाले ऽहं गतासं हतबुद्धितां।
पश्चाद् अन्वेषणं कृत्वा सम्प्राप्तः स मया नहि।
उच्चैस्तञ्च समाहूय न लब्धं किञ्चनोत्तरं॥
७ नगरं पर्य्यटन्तस्तु रक्षिणो मामवाप्नुवन्।
ते नरास्ताडयित्वा माम् अकुर्व्वन् क्षतसङ्कुलां।
प्रावृतं मम शीर्षाच्च हृतं प्राचीररक्षिभिः॥
८ हे कन्या यिरूशालमीया इदं वः शापयाम्यहं।
मम प्रियतमं यूयं यदि कुत्राप्यवाप्नुथ।
किं तं वक्ष्यथ तर्ह्येतद् यत् प्रेम्णा पीडितास्म्यहं॥
९ तव प्रियतमो ऽन्यस्मात् प्रियात् केन विशिष्यते।
त्वं हे सुन्दरि नारीणाम् अस्मांस्तद् वक्तुमर्हसि।
तव प्रियतमो ऽन्यस्मात् प्रियात् केन विशिष्यते।
ईदृशं शपथं यत् त्वम् अस्मान् शापितवत्यसि॥
१० गौराङ्गो ऽरुणवर्णश्च सो ऽस्ति प्रियतमो मम।

अयुतस्यापि मध्ये च प्रमुखः प्रतिभाति सः॥
निर्म्मलेन हिरण्येन समानं तस्य मस्तकं। ११
विटपस्य समं कैश्यं श्यामलं द्रोणकाकवत्॥
नेत्रे कपोतयोस्तुल्ये स्थितयोः सरितस्तटे। १२
स्नातयो र्धेनुकादुग्धे सुभिन्नस्थलवासिनोः॥
तद्गण्डौ जटिलाश्रेणी किं वा गन्धिलतागृहे। १३
अधरौ तस्य पद्मे द्वे द्रववोलविसर्जके॥
करौ स्वर्णनलौ तस्य खचितौ हरिताश्मभिः। १४
तत्कुक्षिः शिल्पकर्म्मकं गजदन्तेन निर्म्मितं।
मणिभि र्नीलकान्तैश्च भूरिशः परिशोभितं॥
द्वावूरू तस्य च स्तम्भौ श्वेतप्रस्तरनिर्म्मितौ। १५
स्वर्णमयेषु पादेषु बद्धमूलौ सुनिश्चलं।
लिवानोनोपमं रूपं श्रेष्ठमेरसवृक्षवत्॥
मुखं तस्य सुमिष्टञ्च साकल्यं हर्षदायि च। १६
हे कन्या यिरूशालमीयाः स प्रियो मे स मे सखा॥

---

# ६ षष्ठोऽध्यायः।

सखितः सौन्दर्य्यवर्णनं।

हे सुसुन्दरि नारीणां गतः कुत्र प्रियस्तव। १
कां दिशं सम्मुखां कृत्वा प्रस्थितः स प्रियस्तव।
त्वया सार्द्धं करिष्यामो वयं तस्य गवेषणां॥
उद्यानेषु विहारार्थं पद्मानां सञ्चयाय च। २
मम प्रियो निजोद्यानं जटामांस्यावली र्गतः॥
अहं स्वीयप्रियस्यास्मि ममैवास्ति च मे प्रियः। ३
मध्यतः पद्मपुष्पाणां विहारं प्रकरोति सः॥
हे मामकीनकान्ते त्वं तिर्षावत् सुमनोहरा। ४
यिरूशालमवच्चार्व्वी ध्वजिनीव भयङ्करी॥
वारय स्वाक्षिणी मत्तो ताभ्यां यतो ऽहमुद्विजे। ५
गिलियद्भूधरालम्ब्याजकवत् तव कैशिकं॥

६ मेषीणां निवहेनेव सदृशा दशनास्तव।
क्षालनादुद्व्रजन्तीनां सापत्यानां यमार्भकैः।
यासां मध्यत एकापि निःसन्ताना न विद्यते॥
७ शिरःप्रच्छादनीपश्चात् गण्डौ दाडिमखण्डवत्॥
८ सन्ति षष्टिः महिष्यश्च सन्त्यशीतिरुपस्त्रियः।
युवतीनामनूढानां सङ्ख्या नैव च गण्यते॥
९ एका किन्तु कपोती मे सा च शुद्धमति र्मम।
स्वमातु र्दुहितैका सा स्वजनन्याश्च नन्दनी।
लब्धे च दर्शने तस्याः कन्या धन्यां वदन्ति तां।
महिष्य उपपत्न्यश्च तत्प्रशंसाञ्च कुर्व्वते॥
१० प्रभातरूपवत् कासौ सुन्दरी चन्द्रमा इव।
विवस्वानिव शुद्धा च ध्वजिनीव भयङ्करी॥
११ प्रफुल्लास्ति न वा द्राक्षा समुष्पा दाडिमा न वा।
तद् द्रष्टुं निम्नभूमेश्च हरिद्भूषां निरीक्षितुं।
गमनमखोडवृक्षाणाम् उद्याने कृतवत्यहं॥
१२ यावच्चान्यमनस्कासं तावत् स्वीयातिवाञ्छया।
अहमम्मीनदीबीयरथानां वेगमाप्नवं॥
१३ प्रत्येहि हे शुलम्मीयि परावर्त्तस्व नः प्रति।
परावर्त्तस्व यस्मात् त्वाम् आलोकिष्यामहे वयं॥
तामालोक्य शुलम्मीयां किं प्रतीक्षध्वमीक्षितुं।
यात्रां स्वर्गीयदूतानां सदृशीं मह्नायिमः॥

---

## ७ सप्तमोऽध्यायः।

समितेः सौन्दर्य्यं स्वीयं प्रति प्रेम च।

१ राजकुमारि पादौ ते शोभेते किमुपानहोः।
भूषणं कटिदेशस्ते कराभ्यां शिल्पिनः कृतं॥
२ त्वन्नाभि र्वर्त्तुलः कंसः सुधया न विवर्जितः।
त्वत्कुक्षिः शस्यगुच्छश्च पद्मप्राचीरवेष्टितः॥
३ तावकीनस्तनावेणा यमशावकयोः समौ॥

गजदन्तमयः स्तम्भो गलदेशस्त्वदीयकः। ४
विद्येते यौ च हिश्बोने वाचव्वीमीयगोपुरे।
जलाधारौ तयोस्तुल्ये भवतस्तव लोचने।
स्थितं यच्च लिबानोने दम्मेषकस्य सम्मुखं।
तेनोच्चेन गृहेणैव सदृशी तव नासिका॥
अद्रिणा कर्म्मिलाख्येन तुल्यं शीर्षं तवोपरि। ५
तव मूर्द्धजपाशाश्च वार्त्ताकीवर्णसूत्रवत्।
महीपालश्च तैः पाशैर्धृतस्तिष्ठति बन्दिवत्॥
आः प्रिये स्वीयकान्त्या त्वं किं रम्या किं मनोहरा॥ ६
तव खर्ज्जूरवन्मूर्त्तौ फलगुच्छाविव स्तनौ॥ ७
अहं खर्ज्जूरमारुह्य तच्छाखा धर्त्तुमर्थये। ८
तव स्तनद्वयञ्चास्तु द्राक्षाफलीयगुच्छवत्।
गन्धस्त्वन्नासिकायाश्च नागरङ्गफलोपमः॥
तव तालु भवेत् तुल्यम् उत्तमेन मदेन च। ९
स्वीयप्रियस्य तुष्ट्यर्थं यथाभीष्टं प्रसर्पता।
आलापाय शयानानाम् ओष्ठविमोचकेन च॥
अहं स्वीयप्रियस्यास्मि मयि तस्यास्ति लालसा॥ १०
हे मत्प्रिय समागच्छ यावः संवसथं प्रति। ११
तत्र ग्रामेषु चावाभ्यां रजनी यापयिष्यते॥
प्रत्यूषे च समुत्थाय द्राक्षाक्षेत्रं व्रजिष्यते। १२
प्रफुल्लास्ति न वा द्राक्षा कुसुमं प्रस्फुटं न वा।
सपुष्पा दाडिमाः सन्ति न वेत्यालोकयिष्यते।
तत्रैवाहं निजप्रेम त्वां भोजयितुमुद्यता॥
दूदाफलानि यच्छन्ति स्वगन्धं प्रीतिवर्द्धकं। १३
आवयोश्च गृहद्वारे सुस्वादूनि फलानि हि।
नानाविधानि विद्यन्ते पुराणानि नवानि च।
निहितानि मया तानि त्वदर्थं हे मम प्रिय॥

# ८ अष्टमोऽध्यायः ।

खीष्टं प्रति समितेः प्रेम प्रार्थना च ।

१ कुतस्त्वं नासि मद्भ्राता मन्मातृस्तन्यपायितः ।
पथि त्वां तर्हि सम्प्राप्य मया त्वच्चुम्बने कृते ।
अवज्ञा मां समुद्दिश्य नाकारिष्यत मानवैः ॥
२ अहमेव भविष्यामि तव मार्गप्रदर्शिका ।
मातुर्गेहं मया नीतस्त्वञ्च मां शिक्षयिष्यसि ।
पाययिष्याम्यहं त्वाञ्च मदमार्द्रकमिश्रितं ।
स्वीयदाडिमवृक्षस्य फलेभ्यश्चोद्धृतं रसं ॥
३ मदीयमस्तकस्याधस्तस्य सव्यः करः स्थितः ।
तस्य दक्षिणहस्तश्च स्वजते मामकीं तनुं ॥
४ हे कन्या यिरूशालमीयाः शपथं कारयामि वः ।
स्वयं यावत् समुत्थातुं नैवाकाङ्क्षति मे प्रिया ।
सा मा प्रबोध्यतां तावत् मा समुत्थाप्यताञ्च सा ॥
५ कासौ धन्वत आयात्यालम्बमाना निजप्रियं ।
अधस्तान्नागरङ्गस्य मया त्वं हि प्रबोधितः ।
त्वां तत्राजीजनन्माता तत्र प्रासोष्ट ते प्रसूः ॥
६ मुद्रावद् धर मां चित्ते मुद्रावद् धर मां भुजे ।
बलीयान् मृत्युवत् प्रेमा कालवच्चोग्र उज्ज्वलः ।
तप्ताङ्गारास्तदङ्गारा उच्छिखा अतिमानुषं ॥
७ प्रेमवह्निमयां राशिं न निर्व्वापयितुं क्षमः ।
नैव घोरस्रवन्तीनां वेलयाप्लाव्यते स वा ।
प्रेम क्रेतुं स्वगेहस्थं सर्व्वस्वं चेत् त्यजेन्नरः ।
अवज्ञा केवलं तर्हि सकलैः प्रकरिष्यते ॥
८ विद्यतेऽल्पवयस्कैका स्वसाजातस्तनावयोः ।
तस्या अस्मद्भगिन्यास्तु सम्बन्धदिवसो यदा ।
आयास्यति कृते तस्याः किं करिष्यावहे तदा ॥
९ सा चेद् भित्तिस्तदा तस्यां रौप्यदुर्गं निचीयतां ।
सा चेद् द्वारं कपाटेन रुध्यतामेरसेन तत् ॥
१० अहं भित्तिस्वरूपास्मि दुर्गवच्च मम स्तनौ ।

तस्मात तदीयदृष्ट्याहं जातानुग्रहभाजनं॥
द्राक्षाक्षेत्रं सुलेमानो बालहामोन्यविद्यत। ११
करेषु रक्षिणां तच्च द्राक्षाक्षेत्रं समर्पितं।
मुद्रासाहस्रमेकैकस्तत्फलार्थमदत्त च॥
मामकं गोस्तनीक्षेत्रं विद्यते मम सम्मुखे। १२
मुद्राणां यत्तु साहस्रं हे सुलेमान् तवैव तत्।
शतद्वयञ्च मुद्राणां भवेत् तत्फलरक्षिणां॥
श्रूयते त्वद्रवो मित्रै र्हे उद्यानिवासिनि। १३
ममापि श्रवणं तस्य त्वमनुज्ञातुमर्हसि॥
हे मत्प्रिय पलायस्व गन्धद्रव्यैः सुवासिते। १४
गिरावेण्या भवेस्तुल्यो हरिणीशावकेन वा॥